परदाराभिमर्षेषु प्रवृत्तान्नॄन्महीपतिः। उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥ ३५२ ॥

इदानीं स्त्रीसंग्रहणमाह परदारेति। परदारसम्भोगेषु प्रवृत्तान् मनुष्यगणानुद्वेजनकरैर्दण्डैर्नासौष्ठकर्त्तनादिभिरङ्कयित्वा राजा देशान्निःसारयेत् ॥ ३५२ ॥

तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः। येन मूलहरोऽधर्म्मः सर्व्वनाशाय कल्पते ॥ ३५३ ॥

तदिति। यस्मात् परदाराभिगमनात्सम्भूतो वर्णस्य सङ्करः सम्पद्यते येन वर्णसङ्करेण विशुद्धपत्नीकयजमानाभावात् अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठत इत्यस्याभावे सति वृष्ट्याख्यजगन्मूलविनाशधर्म्मो जगन्नाशाय सम्पद्यते ॥ ३५३ ॥

परस्य पत्न्या पुरुषः सम्भाषां योजयन् रहः। पूर्व्वमाक्षारितो दोषैः प्राप्नुयात्पूर्व्वसाहसं ॥ ३५४ ॥

परस्येति। तत्स्त्रीप्रार्थनादिदोषैः पूर्व्वमुत्पन्नाभिशापः पुरुष उचितकारणव्यतिरेकेण परभार्य्यया सह सम्भाषणं कुर्व्वन् प्रथमसाहसन्दण्डमाप्नुयात् ॥ ३५४ ॥

यस्त्वनाचारितः पूर्व्वमभिभाषेत कारणात्। न दोषम्प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रमः॥ ३५५॥

यस्त्विति। यः पुनः पूर्व्वन्तत्स्त्रीप्रार्थनाभिशापरहितः केनचित् कारणेन जनसमक्षमभिभाषणं कुर्य्यान्न स पुनर्द ण्ड्यत्वादिदोषम्प्राप्नुयात् यस्मान्न कश्चित्तस्यापराधोऽस्ति॥३५५॥

परस्त्रियं योऽभिवदेत्तीर्थेऽरण्ये वनेऽपि वा। नदीनां वापि सम्भेदे ससंग्रहणमाप्नुयात्॥ ३५६॥

परेति। तीर्थारण्यवनादिकं निर्ज्जनदेशोपलक्षणार्थं यः पुरुषः परस्त्रियमुदकावतरणमार्गेऽरण्ये ग्रामाद्बहिर्गुल्म लताकीर्णे निर्ज्जने देशे वने वृक्षसन्तते नदीनां सङ्गमे पूर्व्व मनाचारितोपि कारणादपि सम्भाषेत् स संग्रहण दण्डं सहस्र पणं वक्ष्यमाणम्प्राप्नुयात्। सम्यग्गृह्यते ज्ञायते येन परस्त्री सम्भोगाभिलाषइति संग्रहणम्॥ ३५६॥

उपचारक्रिया केलिः स्पर्शोभूषणवाससां। सह खट्वासनञ्चैव सर्व्वं संग्रहणं स्मृतम्॥ ३५७॥

उपचारेति। स्रग्गन्धानुलेपनप्रेषणाद्युपचारकरणं केलिः परीहासालिङ्गनादिः अलङ्कारवस्त्राणां स्पर्शनमेकखट्वासन मित्येतत्सर्व्वं संग्रहणं मन्वादिभिः स्मृतम्॥ ३५७॥

स्त्रियं स्पृशेददेशे यः स्पृष्टोवा मर्षयेत्तया। परस्परस्यानुमते सर्व्वं संग्रहणं स्मृनम् ॥ ३५८ ॥

स्त्रियमिति। यः स्प्रष्टुमनुचिते स्तनजघनादिदेशे स्त्रियं स्पृशेत्तया वा वृषणादिके स्पृष्टः क्षमते तदाऽन्योन्याङ्गीकरण रूपं सर्व्वं संग्रहणं मन्वादिभिः स्मृतम् ॥ ३५८ ॥

अब्राह्मणः संग्रहणे प्राणान्तन्दण्डमर्हति। चतुर्णामपि वर्णानान्दारारक्ष्यतमाः सदा ॥ ३५९ ॥

अब्राह्मणइति। अब्राह्मणोऽत्र शूद्रः दण्डभूयस्त्वात्। ब्राह्मण्यामनिच्छन्त्यामुत्तमं संग्रहणे प्राणान्तन्दण्डमाप्नोति चतुर्णामपि ब्राह्मणादीनां वर्णानान्धनपुत्रादीनांमध्यादतिशयेन दाराःसर्व्वदा रक्षणीयाः तेन प्रसङ्गनिवृत्त्यर्थं उत्कृष्टसंग्रहणादपि सर्व्ववर्णैर्भार्य्यारक्षणीयाः ॥ ३५९ ॥

भिक्षुकावन्दिनश्चैव दीक्षिताः कारवस्तथाः। सम्भाषणं सह स्त्रीभिः कुर्य्युरप्रतिवारिताः ॥ ३६० ॥

भिक्ष्विति। भिक्षाजीविनः स्तुतिपाठकाः यज्ञार्थं कृतदीक्षकाः सूपकारादयश्च भिक्षादिस्वकार्य्यार्थं गृहिस्त्रीभिः सह संभाषणमनिवारिताःकुर्य्युः। एवञ्चैषां संग्रहणाभावः ॥ ३६० ॥

न सम्भाषाम्परस्त्रीभिः प्रतिषिद्धः समाचरेत्। निषिद्धोभाषमाणस्तु सुवर्णं दण्डमर्हति ॥ ३६१ ॥

न सम्भाषामिति। स्वामिना निषिद्धः स्त्रीभि. सम्भाषणन्न कुर्य्यात्प्रतिषिद्धः संभाषणमाचरन् राज्ञः षोडशमाषात्मक सुवर्णदण्डयोग्योभवति ॥ ३६१ ॥

नैष चारणदारेषु विधिर्न्नात्मोपजीविषु। सज्जयन्ति हि ते नारीर्न्निगूढाश्चारयन्ति च ॥ ३६२ ॥

नैषइति। परस्त्रियं योभिवदेदित्यादिसम्भाषणनिषेधविधिर्नटगायनादिदारेषु नास्ति तथा भार्य्यापुत्रः स्वकातनुरित्युक्तत्वात् भार्य्यैवात्मा अनया उपजीवन्ति धनलाभाय तस्याजारं चमन्ते ये तेषु नटादिव्यतिरिक्तेष्वपि ये दारास्तेष्वप्येवं निषेधविधिर्नास्ति यस्माच्चारणा आत्मोपजीविनश्च परपुरुषानानीय तैः स्वभार्य्याः संश्लेषयन्ते स्वयमागतांश्च परपुरुषान् प्रच्छन्नाभूत्वा स्वाज्ञानं विभावयन्तोव्यवहारयन्ति॥३६२॥

किञ्चिदेव तु दाप्यः स्यात्सम्भाषां ताभिराचरन्। प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥ ३६३ ॥

किञ्चिदिति। निर्ज्जनदेशे चारणात्मोपजीविस्त्रीभिः संभाषणं कुर्व्वन् स्वल्पन्दण्डलेशं राज्ञा दाप्यः तासामपि

परदारत्वात् तथा दासीभिरवरुद्धाभिर्बौद्धादिव्रह्मचारिणी भिश्च सम्भाषां कुर्व्वन् किञ्चिद्दण्डमात्रं दाप्यः स्यात् ॥ ३६३ ॥

योऽकामान्दूषयेत्कन्यां स सद्योवधमर्हति। सकामान्दूषयंस्तुल्यो न वधम्प्राप्नुयान्नरः॥ ३६४॥

योऽकामामिति। यस्तुल्यजातिरनिच्छन्तीं कन्याङ्गच्छति स तत्क्षणादेव ब्राह्मणेतरोलिङ्गच्छेदनादिकं वधमर्हति इच्छन्तीं पुनर्गच्छन् वधार्हीमनुष्योन भवति ॥ ३६४॥

कन्यां भजन्तीमुत्कृष्टन्न किञ्चिदपि दापयेत्। जघन्यं सेवमानान्तु संयतां वासयेद्गृहे॥ ३६५॥

कन्यामिति। कन्यां सम्भोगार्थमुत्कृष्टजातिपुरुषं सेवमानां स्वल्पमपि दण्डं न दापयेत् हीनजातिम्पुनः सेवमानांबद्धा स्थापयेत् यावत्सा निवृत्तकामा स्यात्॥ ३६५ ॥

उत्तमां सेवमानस्तु जघन्योवधमर्हति। शुल्कन्दद्यात्सेवमानः समामिच्छेत्पिता यदि॥ ३६६॥

उत्तमामिति। हीनजातिरुत्कृष्टजातीयां कन्यामिच्छन्ती

मनिच्छन्तीं वा गच्छन् जात्यपेक्षयाऽङ्गच्छेदनमारणात्मकं वधमर्हति समानजातीयां पुनरिच्छन्तीं गच्छन् यदि पिता मन्यते तदा पितुः शुल्कानुरूपमर्थं दद्यान्नच दण्ड्यः सा च कन्या तेनैव वोढव्या ॥ ३६६ ॥

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डं चार्हति षट्शतम् ॥ ३६७ ॥

अभीति। यो मनुष्यः प्रसह्य बलात्कारेण समानजातीयां गमनवर्ज्जमहङ्कारेणाङ्गुलिप्रक्षेपमात्रेणैव नाशयेत्तस्य शीघ्र मेवाङ्गुलिद्वयच्छेदः कर्त्तव्यः षट् पणशतानि चायं दण्ड्यः स्यात् ॥ ३६७ ॥

सकामान्दूषयंस्तुल्यो नाङ्गुलिच्छेदमाप्नुयात् । द्विशतन्तु दमं दाप्यः प्रसंगविनिवृत्तये ॥ ३६८ ॥

सकामामिति। समानजातिरिच्छन्तीं कन्यामङ्गुलिप्रक्षेप मात्रेण नाशयन्नाङ्गुलिच्छेदमाप्नोति किन्त्वऽतिप्रसक्तिनिवारणाय द्विशतन्दण्डन्दाप्यः ॥ ३६८ ॥

कन्यैव कन्यां या कुर्य्यात्तस्याः स्याद्द्विशतो दमः । शुल्कञ्च द्विगुणन्दद्याच्छिफाश्चैवाप्नुयाद्दश ॥ ३६९ ॥

कन्येवेति। या कन्यैवापरां कन्यामंगुलिप्रक्षेपेण नाशयेत् तस्या

द्विशतो दण्डः स्यात्कन्याशुल्कञ्च द्विगुणं कन्यापितुर्दद्यात् शिफाप्रहारांश्च दश प्राप्नुयात्॥ ३६९॥

या तु कन्याम्प्रकुर्य्यात् स्त्री सा सद्योमौण्ड्यमर्हति।
अङ्गुल्योरेव च च्छेदङ्खरेणोद्वहनन्तथा॥ ३७०॥

या त्विति। या पुनः स्त्री कन्यां अङ्गुलिप्रक्षेपेण नाशयेत्सा तत्क्षणादेव शिरोमुण्डनं अनुबन्धापेक्षयाङ्गुल्योरेव च्छेदनं गर्द्दभेण च राजमार्गे वहनमर्हति॥ ३७०॥

भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता। तां
श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥ ३७१॥

भर्त्तारमिति। या स्त्री प्रबलधनिकपित्रादिबान्धवदर्पेण सौन्दर्य्यादिगुणदर्पेण वा पतिं पुरुषान्तरोपगमनाल्लङ्घयेत्। तां राजा बहुजनाकीर्णे देशे श्वभिर्भक्षयेत्॥ ३७१॥

पुमांसन्दाहयेत्पापं शयने तप्तआयसे। अभ्या
दध्युश्च काष्ठानि तत्र दह्येत पापकृत्॥ ३७२॥

पुमांसमिति। अनन्तरोक्तं जारम्पापकारिणं पुरुषमयोमयशयने प्रज्वलिते राजा दाहयेत्तत्र शयने बध्यघातिनः काष्ठानि निःक्षिपेयुः यावत्पापकारी दग्धः स्यात॥ ३७२॥

संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः। व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥ ३७३ ॥

संवत्सरेति। परस्त्रीगमनेन दुष्टस्य पुंसोऽदण्डितस्य पुनः संवत्सरातिक्रमे तस्यामेवाभिशस्तस्य पूर्व्वदण्डाद्द्विगुणो दमः कार्य्यः। तथा व्रात्यजायागमने योदण्डः परिकल्पितः चाण्डाल्यासह निर्देशात् चाण्डालीगमनरूपः तथा चाण्डाली गमने योदण्डः सहस्रन्त्वन्त्यजस्त्रियमिति संवत्सरे त्वतीते यदि तामेव व्रात्यजायान्तामेव चाण्डालीं पुनर्गच्छति तदा द्विगुणः कर्त्तव्यः। एतच्च पूर्व्वस्यैवोदाहरणद्वयं व्रात्यजायागमनेपि चाण्डालीगमनदण्डप्रदर्शनार्थं सर्व्वस्यैव तु पूर्व्वाभिशस्तदण्डितस्य संवत्सरातिक्रमे पुनस्तामेव गच्छतः पूर्व्वदण्डाद्द्विगुणो दण्डो ऽद्भव्यः ॥ ३७३ ॥

शूद्रोगुप्तमगुप्तं वा द्वैजातं वर्णमावसन्। अगुप्तमङ्गसर्व्वस्वैर्गुप्तं सर्व्वेण हीयते ॥ ३७४ ॥

शूद्र इति। भर्त्रादिभीरक्षितामरक्षितां वा द्विजातिस्त्रियं यदि शूद्रोगच्छेत्तदाऽरक्षितां रक्षारहिताङ्गच्छन् लिङ्गसर्व्वस्वाभ्यां वियोजनीयः अत्राङ्गविशेषाश्रवणेपि आर्य्यस्त्र्यभिगमने

लिङ्गोद्धारः सर्व्वस्वहरणं गुप्तां चेद्यघोऽधिकद्दतिगौतमवचना लिंगच्छेदः । रक्षितान्तु गच्छन् शरीरधनहीनः कर्त्तव्यः॥३७४॥

वैश्यः सर्व्वस्वदण्डः स्यात्संवत्सरनिरोधतः।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति॥३७५॥

वैश्यइति । वैश्यस्य गुप्तब्राह्मणीगमने संवत्सरबन्धनादनन्तरं सर्व्वस्वग्रहणरूपोदण्डः कार्य्यः क्षत्रियागमने तु वैश्यस्य क्षत्रियामिति वक्ष्यति क्षत्रियोगुप्ता ब्राह्मणीगमने सहस्रन्दण्डनीयः खरमूत्रेण चास्य मुण्डनं कर्त्तव्यम्॥ ३७५ ॥

ब्राह्मणीं यद्यगुप्तान्तु गच्छेतां वैश्यपार्थिवौ। वैश्यम्पञ्चशतं कुर्य्यात्क्षत्रियन्तु सहस्रिणं ॥ ३७६ ॥

ब्राह्मणीमिति । अरक्षितां तु ब्राह्मणीं यदि वैश्यक्षत्रिया गच्छतः तदा वैश्यं पञ्चशतदण्डयुक्तं कुर्य्यात्। क्षत्रियं पुनः सहस्रदण्डोपेतं। वैश्ये चायम्पञ्चशतदण्डः शूद्राभ्रमादिना निर्गुणजातिमात्रोपजीविब्राह्मणीगमनविषयः तदितरब्राह्मणीगमने तु वैश्यस्यापि सहस्रदण्डएव ॥ ३७६ ॥

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह। विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥ ३७७ ॥

उभाविति। तावेवोभावपि क्षत्रियवैश्यौ ब्राह्मण्या रक्षितया सह कृतमैथुनौ शूद्रवत् सर्व्वेण हीयते गुप्तं इति दण्ड्यौ। यद्वा कटेन आवेष्ट्य दग्धव्यौ तत्र वैश्यं लोहितदर्भैः क्षत्रियं शर पत्रैर्वावेष्ट्यइति वशिष्ठोक्तोविशेषोग्राह्यः पूर्व्वं सहस्रं क्षत्रियो दण्ड्यो वैश्यः सर्व्वस्वमित्युक्तत्वादयम्प्राणान्तिकदण्डोगुण वद्ब्राह्मणीगमनविषयोबोद्धव्यः ॥ ३७७ ॥

सहस्रम्ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः॥३७८॥

सहस्रमिति। रक्षितां विप्रां ब्राह्मणोबलेनोपगच्छन्सहस्रं दण्ड्यः स्यात्। इच्छन्त्या पुनः सकृन्मैथुने पञ्चशतानि दण्डनीयाभवेत् ॥ ३७८ ॥

मौण्ड्यम्प्राणान्तिकोदण्डोब्राह्मणस्य विधीयते। इतरेषान्तु वर्णानान्दण्डः प्राणान्तिको भवेत् ॥ ३७९ ॥

मौण्ड्यमिति। ब्राह्मणस्य वधदण्डस्थाने शिरोमुण्डनन्दण्डः शास्त्रेणोपदिश्यते क्षत्रियादीनाम्पुनरुक्तेन घातेन दण्डोभवति ॥ ३७९ ॥

न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वपि स्थितम्। राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतम्॥ ३८०॥

नजात्वित्यादि। ब्राह्मणं सर्व्वपापकारिणमपि कदाचिन्न हन्यात्। अपितु सर्व्वस्वयुक्तमक्षतशरीरं राष्ट्रान्निर्व्वासयेत्॥ ३८०॥

न ब्राह्मणवधाद्भूयानधर्म्मोविद्यते भुवि। तस्मादस्य बधं राजा मनसापि न चिन्तयेत्। ३८१॥

न ब्राह्मणेति। ब्राह्मणबधान्महान्पृथिव्यामधर्म्मोनास्ति तस्माद्राजा सर्व्वपापकारिणोब्राह्मणस्य मनसापि बधन्नचिन्तयेत्॥ ३८१॥

वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियोव्रजेत्। योब्राह्मण्यामगुप्तायान्तावुभौ दण्डमर्हतः॥ ३८२॥

वैश्यश्चेति। रक्षितां क्षत्रियां यदि वैश्योगच्छेत्क्षत्रियोवा यदि रक्षितां वैश्यां तदा तयोर्ब्राह्मण्यामगुप्तायाङ्गमने यौ दण्डावुक्तौ वैश्यं पञ्चशतङ्कुर्य्यात् क्षत्रियन्तु सहस्रिणमिति द्वावेव तौ दण्डौ वैश्यक्षत्रिययोर्भवतः अयञ्च वैश्यस्य रक्षित क्षत्रियागमने पञ्चशतरूपो दण्डो लघुत्वात् गुणवद्वैश्यस्य निर्गुणजातिमात्रोपजीविक्षत्रियायाः शूद्राभ्यान्यादिगमन

विषयोबोद्धव्यः क्षत्रियस्य रक्षितवैश्यायां ज्ञानतोयुक्तएव सहस्रदण्डः ॥ ३८२ ॥

सहस्रम्ब्राह्मणोदण्डन्दाप्योगुप्ते तु ते व्रजन्।
शूद्रायां क्षत्रियविशोः साहस्रोवै भवेद्दमः॥ ३८३ ॥

सहस्रमित्यादि। क्षत्रिया वैश्ये रक्षिते ब्राह्मणोव्रजन्सहस्रन्दण्डं दापनीयः शूद्रायां रक्षितायां क्षत्रियवैश्ययोर्गमने सहस्रमेव दण्डः स्यात्॥ ३८३ ॥

क्षत्रियायामगुप्तायां वैश्ये पञ्चशतन्दमः। मूत्रेण मौण्ड्यमिच्छेत्तु क्षत्रियोदण्डमेव वा॥ ३८४ ॥

क्षत्रियेति। अरक्षितक्षत्रियागमने वैश्यस्य पञ्चशतानि दण्डः स्यात्। क्षत्रियस्य त्वरक्षितक्षत्रियागमने गर्दभमूत्रेण मुण्डनं पञ्चशतरूपं वा दण्डमाप्नुयात्॥ ३८४ ॥

अगुप्ते क्षत्रियावैश्ये शूद्रां वा ब्राह्मणोव्रजन्।
शतानि पञ्च दण्ड्यः स्यात्सहस्रं त्वन्त्यजस्त्रियं॥३८५॥

अगुप्ते इति। अरक्षितां क्षत्रियां वैश्यां शूद्रां वा ब्राह्मणो गच्छन् पञ्च शतानि दण्ड्यः स्यात् अन्ते भवोऽन्त्यजः यस्मादधमो नास्ति चाण्डालादिस्तस्य स्त्रियं गच्छन्सहस्रन्दण्ड्यः ॥३८५॥

यस्य स्तेनः पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक्। न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक्॥३८६॥

यस्येति। यस्य राज्ञोराष्ट्रे चौरः परदारगामी परुषवादी गृहदाहादिसाहसकारी दण्डपारुष्यकर्त्ता च नास्ति स राजा शक्रपुरं याति॥ ३८६॥

एतेषान्निग्रहोराज्ञः पञ्चानां विषये स्वके। साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः॥ ३८७॥

एतेषामिति। एतेषां स्तेनादीनाम्पञ्चानां स्वराष्ट्रे निग्रहः समानजातीयेषु राजसु मध्ये राज्ञः साम्राज्यकृत् इह लोके च यशस्करोभवति॥ ३८७॥

ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि। शक्तं कर्म्मण्यदुष्टञ्च तयोर्दण्डः शतं शतं॥ ३८८॥

ऋत्विजमिति। योयाज्यः ऋत्विजं कर्म्मानुष्ठानसमर्थं अतिपातकादिदोषरहितं ऋत्विग्वा याज्यमदुष्टं त्यजति तयोः शतं शतं दण्डः कार्य्यइति दण्डप्रसङ्गादिदमुक्तम्॥ ३८८॥

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति। त्यजन्नपतितानेतान्राज्ञा दण्ड्यः शतानि षट्॥ ३८९॥

न मातेति। मातृपितृभार्य्यापुत्राः त्यागं पोषणशुश्रूषणा

धकरणात्मकं नार्हति तस्मादेतान् पातकादिदोषरहितान् परित्यजन् एकैकपरित्यागे राज्ञा षट् शतानि दण्ड्यः ॥ ३८९॥

आश्रमेषु द्विजातीनां कार्य्ये विवदतां मिथः। न विब्रूयान्नृपो धर्म्मञ्चिकीर्षन् हितमात्मनः ॥ ३९० ॥

आश्रमेष्विति। द्विजातीनां गार्हस्थ्याद्याश्रमविषये कार्य्ये अयं शास्त्रार्थोनायं शास्त्रार्थइति परस्परञ्जातविवादानां राजा स्वीयहितञ्चिकीर्षुरयं शास्त्रार्थइति सहसाविशेषेण न ब्रूयात् ॥ ३९० ॥

यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः। सान्त्वेन प्रशमय्यादौ स्वधर्म्मं प्रतिपादयेत् ॥ ३९१ ॥

यथार्हमिति। योयादृशीं पूजामर्हति तन्तया पूजयित्वा अन्यैर्ब्राह्मणैस्सह प्रथमम्प्रीत्या अपगतकोपं कृत्वा ततएषां यः स्वधर्म्मः तं बोधयेत् ॥ ३९१ ॥

प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे। अर्हावभोजयन् विप्रो दण्डमर्हति माषकं ॥३९२॥

प्रातीति। निरन्तरगृहवासी प्रातिवेश्यः तदन्तरगृहवासी अनुवेश्यः यस्मिन्नुत्सवे विंशतिरन्ये ब्राह्मणाभोज्यन्ते तत्र प्रातिवेश्यानुवेश्यौ प्रातिवेश्यब्राह्मणातिक्रमकारी चेति विष्णुवचनं।त्

ब्राह्मणो भोजनार्हावभोजयन् ब्राह्मणउत्तरत्र हैरण्यादिग्रह
णादिह रौप्यमाषन्दण्डमर्हति ॥ ३९२ ॥

श्रोत्रियः श्रोत्रियं साधुम्भूतिकृत्येष्वभोजयन्। तदन्नं
द्विगुणन्दाप्योहिरण्यञ्चैव माषकं॥ ३९३॥

श्रोत्रियइति। विद्याचारवान् तथाविधमेव गुणवन्तं विभव
कार्य्येषु विवाहादिषु प्रकृतत्वात् प्रातिवेश्यानुवेश्यावेवाभोजयं
स्तदन्नमभोजिताय द्विगुणं दाप्योहिरण्यमाषकञ्च राज्ञः।
॥ ३९३ ॥

अन्धोजडः पीठसर्पी सप्तत्या स्थविरश्च यः। श्रोत्रि
येषपकुर्व्वंश्च न दाप्याः केनचित्करम्॥ ३९४॥

अन्धइति। अन्धोवधिरः पंगुः सम्पूर्णसप्ततिवर्षः सप्तत्येति
प्रकृत्यादिभ्यउपसंख्यानमिति तृतीया। श्रोत्रियेषु धनधान्य
शुश्रूषादिनोपकारकएते केनचिदपि क्षीणकोषेणापि राज्ञा
स्वयाद्यकरं न दापनीयाः॥ ३९४॥

श्रोत्रियं व्याधितार्त्तौ च बालवृद्धावकिञ्चनम्।
महाकुलीनमार्य्यञ्च राजा संपूजयेत्सदा॥ ३९५ ॥

श्रोत्रियमिति। विद्याचारवन्तं ब्राह्मणं रोगिणं पुत्रवियोगादिदुःखितं बालवृद्धदरिद्रमहाकुलप्रसूतोदारचरितान् राजा दानमानहितकरणैः संपूजयेत्सदा॥ ३९५॥

शाल्मलीफलके श्लक्ष्णे नेनिज्यान्नेजकः शनैः। नच वासांसि वासोभिर्निर्हरेन्नच वासयेत्॥ ३९६॥

शाल्मलीति। शाल्मल्यादिवृक्षसम्बन्धिफलके अपरुषे रजकः शनैःशनैर्वासांसि प्रक्षालयेत् न च परकीयैर्वस्त्रैरन्यवस्त्राणि नयेत् नचान्यवासांसि अन्यपरिधानार्थं दद्यात् यद्येवं कुर्य्यात्त दासौ दण्ड्यः स्यात्॥ ३९६॥

तन्तुवायो दशपलन्दद्यादेकपलाधिकम्। अतो न्यथावर्त्तमानो दाप्यो द्वादशकं दमम्॥ ३९७॥

तन्तुवायइति। तन्तुवायो वस्त्रनिर्माणार्थन्दशपलानि सूत्रं गृहीत्वा पिष्टभक्ताद्यनुप्रवेशादेकादशपलं वस्त्रन्दद्याद्यदि

ततोन्यूनन्दद्यात्तदा द्वादश पणान् राज्ञा दाप्यः स्वामिनस्तु तुष्टिः कर्त्तव्यैव ॥ ३९७ ॥

शुल्कस्थानेषु कुशलाः सर्व्वपण्यविचक्षणाः । कुर्य्युरर्घं यथापण्यन्ततो विंशं नृपो हरेत् ॥ ३९८ ॥

शुल्केति । स्थलजलपथव्यवहर्त्तृभ्यो राजग्राह्यो भागः शुल्कं तस्य व्यवस्थानेषु ये कुशलाः तथा सर्व्वपण्यानां सारासारज्ञाः ते पण्येषु यमर्घं मूल्यमनुरूपं कुर्य्युः ततो लाभधनाद्विंशतिभागं राजा गृह्णीयात् ॥ ३९८ ॥

राज्ञः प्रख्यातभाण्डानि प्रतिषिद्धानि यानि च । तानि निर्हरतो लोभात्सर्व्वहारं हरेन्नृपः ॥ ३९९ ॥

राज्ञइति । राज्ञः सम्बन्धितया यानि विक्रेयद्रव्याणि प्रख्यातानि राजोपयोगीनि हस्त्यश्वादीनि तद्देशोद्भवानि तथायानि च प्रतिषिद्धानि यथा दुर्भिक्षे धान्यन्देशान्तरं न नेयमिति तानि लोभाद्देशान्तरं नयतोवणिजः सर्व्वहरणं राजा कुर्य्यात् ॥ ३९९ ॥

शुल्कस्थानम्परिहरन्नकाले क्रयविक्रयी। मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययं॥ ४००॥

शुल्कमिति। शुल्कमोषणाय उत्पथेन गच्छति अकाले रात्र्यादौ वा क्रयविक्रयं करोति शुल्काखण्डनार्थं विक्रेयद्रव्यस्य वा अल्पां संख्यां वक्ति राजदेयमपलपितमष्टगुणन्दण्डरूपतया दाप्यः ॥ ४००॥

आगमं निर्गमं स्थानन्तथा वृद्धिक्षयावुभौ। विचार्य्य सर्वपण्यानां कारयेत् क्रयविक्रयौ॥ ४०१॥

आगममिति। कियतो दूरादागतमिति देशान्तरीयद्रव्यस्यागमं कियद्दूरं नीयतइति स्वदेशोद्भवस्य निर्गमं कियत्कालं स्थितं किषन्मूल्यं लभतइति स्थानं तथा कियती वृद्धिरत्र तथा कर्मकाराणां भक्ताच्छादनादिना कियानुपक्षयइत्येवं विचार्य्य यथा वणिजां क्रेतॄणां च पीडा न भवति तथा सर्व्वपण्यानां क्रयविक्रयै कारयेत्॥ ४०१॥

पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेथ वा गते। कुर्व्वीत चैषाम्प्रत्यक्षमर्घसंस्थापनन्नृपः॥ ४०२॥

पञ्चरात्रइति। आगमनिर्गमोपयोगादेः पण्यानाम

नियतत्वात्। अस्थिरार्घाणामञ्चरात्रे पञ्चरात्रे गते स्थिर प्रायार्घाणाम्पक्षे पक्षे गते वणिजामर्घविदामत्यक्षं नृपतिराप्त पुरुषैर्व्यवस्थां कुर्य्यात्॥ ४०२ ॥

तुलामानं प्रतीमानं सर्व्वञ्च स्यात्सुलक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥ ४०३ ॥

तुलेति। तुलामानं सुवर्णादीनाम्परिच्छेदार्थं यत् क्रियते प्रतिमानं प्रस्थद्रोणादितत्सर्व्वं सुनिरूपितं यथा स्यात् षट्सु षट्सु मासेषु गतेषु पुनस्तत्सर्व्वं सभ्यपुरुषैर्नृपतिः परीक्षयेत् ॥ ४०३ ॥

पणं यानंतरे दाप्यम्पौरुषोऽर्द्धपणन्तरे। पादम्प
शुश्च योषिच्च पादार्द्धं रिक्तकः पुमान्॥ ४०४ ॥

पणमिति। भाण्डपूर्णाणि यानानीति वक्ष्यति तेन रिक्त शकटादियानं तरविषये पणन्दाप्यं एवं पुरुषवाह्यभारोर्द्ध पणन्तरपण्यन्दाप्यः पशुश्च गवादिः पणचतुर्थभागं भाररहितोमनुष्यः पणाष्टमभागन्दापनीयः ॥ ४०४ ॥

भाण्डपूर्णानि यानानि तार्य्यन्दाप्यानि सारतः। रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः॥४०५॥

भाण्डेति। पण्यद्रव्यपूर्णानि शकटादीनि द्रव्यगतोत्कर्षापेक्षया आतरं दाप्यानि द्रव्यरहितानि च गोणीकण्डोलादीनि यत्किञ्चित्स्वल्पं तार्य्यन्दाप्यानि अपरिच्छदादरिद्राउक्तपदार्द्धदानापेक्षया यत्किञ्चिद्दापनीयाः॥४०५॥

दीर्घाध्वनि यथादेशं यथाकालन्तरोभवेत्। नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम्॥४०६॥

दीर्घेति। पूर्व्वं पारावारतरणार्थमुक्तं इदानीं नदीमार्गेण दूराध्वनि गन्तव्ये प्रबलवेगस्थिरोदकनद्यादिदेशग्रीष्मवर्षादिकालापेक्षया तरमूल्यं कल्पनीयं एतच्च नदीतीरेषु बोद्धव्यं समुद्रे तु वाताधीनपोतगमनत्वात् स्वायत्तत्वाभावे तरपण्यविशेषज्ञापकं नदीवद्योजनादिकं नास्ति अतस्तच्चोचितमेव तरपण्यं ग्राह्यम्॥४०६॥

गर्भिणी तु द्विमासादिस्तथा प्रव्रजितोमुनिः। ब्राह्मणालिंगिनश्चैव नदाप्यास्तारिकन्तरे॥४०७॥

गर्भिणीति। संजातगर्भा स्त्री मासद्वयादूर्द्धं तथा प्रव्रजितो भिक्षुर्मुनिर्वानप्रस्थोब्राह्मणास्च लिंगिनोब्रह्मचारिणः तरमूल्यं तरे न दाप्याः॥४०७॥

यन्नावि किञ्चिद्दाशानां विशीर्य्येतापराधतः।
तद्दाशैरेव दातव्यं समागम्य स्वतोंशतः॥ ४०८॥

यन्नावीति। नौकारूढानां यत्किञ्चिन्नाविकापराधेन नष्टं द्रव्यं तन्नाविकैरेव मिलित्वा यथाभागन्दातव्यम्॥ ४०८॥

एष नौयायिनामुक्तो व्यवहारस्य निर्णयः। दाशा
पराधतस्तोये दैविके नास्ति निग्रहः॥ ४०९॥

एष नाविति। नाविकापराधात् यदुदके नष्टं तन्नाविकैरेव दातव्यमिति पूर्व्वोक्तमनूदितं दैविके नास्ति निग्रहइति विधातुं नौयायिनामेष व्यवहारस्य निर्णयउक्तः दैवोपजातवात्यादिना नौभङ्गेन धनादिनाशे नाविकानां न दण्डः॥ ४०९॥

वाणिज्यं कारयेद्वैश्यं कुशीदं कृषिमेव च। पशूनां
रक्षणञ्चैव दास्यं शूद्रं द्विजन्मनाम्॥ ४१०॥

वाणिज्यमिति। वाणिज्यकुसीदकृषिपशुरक्षणानि वैश्यं कारयेत् शूद्रञ्च राजा द्विजातीनां दास्यं कारयेत्। अकुर्वाणौ वैश्यशूद्रौ राज्ञोदण्ड्यावित्येवमर्थोयमिहोपदेशः॥ ४१०॥

क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणोवृत्तिकर्षितौ। बिभृ
यादानृशंस्येन स्वानि कर्म्माणि कारयन्॥ ४११॥

क्षत्रियमित्यादि। ब्राह्मणः क्षत्रियवैश्यौ भृत्यभावेन पीड़ितौ

करुणया स्वानि कर्म्माणि रक्षणक्षयादीनि कारयन् ग्रासा च्छादनादिना पोषयेत्। एवं धनवान् ब्राह्मणः तावुपगताव विभ्रत् राज्ञा दण्डनीयइति प्रकरणसामर्थ्याद्गम्यते ॥ ४११ ॥

दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान्। अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षट् ॥ ४१२ ॥

दास्यन्त्विति। प्रभवतोभावः प्राभवत्यं ब्राह्मणः कृतोपनय नान् द्विजातीननिच्छतः प्रभुत्वेन लोभाद्दास्यकर्म्मपादधाव नादि कारयन् षट् शतानि दण्ड्यः ॥ ४१२ ॥

शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा। दास्या यैव हि सृष्टोसौ ब्राह्मणस्य स्वयम्भुवा ॥ ४१३ ॥

शूद्रंत्विति। शूद्रम्पुनर्भक्तादिभृतमभृतं वा दास्यं कारयेत यस्मादसौ ब्राह्मणस्य दास्यायैव प्रजापतिना सृष्टः ॥ ४१३ ॥

न स्वामिना निसृष्टोपि शूद्रोदास्याद्विमुच्यते। निसर्गजं हि तत्तस्य कस्तस्मात्तदपोहति ॥ ४१४ ॥

न स्वामिनेति। यस्मादसौ ध्वजाहृतत्वादिना दासत्वं गतः स तेन त्यक्तः स्वदास्याभावेपि शूद्रोब्राह्मणस्य दास्यान्न

विमुच्यते यस्माद्दास्यं शूद्रस्य सहजं कः शूद्रत्वजातिमिव दास्य मपनयति अदृष्टार्थमप्यवश्यं शूद्रेण ब्राह्मणादिद्विजशुश्रूषा कर्त्तव्येत्येवंपरमेतत् अन्यथा वक्ष्यमाणदास्यकरणपरिगणन मनर्थकं स्यात् ॥ ४१४ ॥

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्त्रिमौ ।
पैत्रिकोदण्डदासश्च सप्तैते दासयोनयः ॥ ४१५ ॥

ध्वजेति । संग्रामे स्वामिसकाशाज्जितो भक्तलोभाभ्युपगत दासोभक्तदासः तथा स्वदासीपुत्रः मूल्येन क्रीतोऽन्येन दत्तः पित्रादिक्रमागतः दण्डादिधनशुद्ध्यर्थं स्वीकृतदास्यभावइत्येतानि सप्त ध्वजाहृतत्वादीनि दासत्वकरणानि ॥ ४१५ ॥

भार्य्या पुत्रश्च दासश्च त्रयएवाधनाः स्मृताः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ४१६ ॥

भार्य्येति । भार्य्यापुत्रदासास्त्रयोऽमी निर्द्धना एव मन्वादिभिः स्मृता यस्मात् यद्धनन्तेऽर्ज्जयन्ति यस्य ते भार्य्यादयस्तास्य तद्धनम्भवति एतच्च भार्य्यादीनाम्पारतन्त्र्यप्रदर्शनार्थं

परं अध्यग्न्यादेः षड्विधस्य स्त्रीधनस्य वक्ष्यमाणत्वात् धन साध्याद्दृष्टार्थकर्म्मोपदेशाच्च भार्य्यादीनामप्यत्यधिकरणे पत्न्या अपि यागाधिकारस्य उक्तत्वात् स्त्रीपुंसयोर्मध्य एकधने चानुमति द्वारेण स्त्रिया अपि कर्तृत्वात् ॥ ४१६ ॥

विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत्। न हि तस्यास्ति किञ्चित्स्वं भर्तृहार्य्यधनो हि सः ॥४१७॥

विस्रब्धमिति। निर्व्विचिकित्समेव प्रभुत्वाद्दासशूद्राद्धन ग्रहणं कुर्य्यात् ब्राह्मणः यतस्तस्य किञ्चिदपि स्वं नास्ति यस्मा द्भर्तृग्राह्यधनोऽसौ। एवञ्चापदि बलादपि दासात् ब्राह्मणो धनं गृह्णन्न राज्ञा दण्डनीय इत्येवमर्थमेतदुच्यते ॥ ४१७ ॥

वैश्यशूद्रौ प्रयत्नेन स्वानि कर्म्माणि कारयेत्। तौ हि च्युतौ स्वकर्म्मभ्यः क्षोभयेतामिदञ्जगत् ॥ ४१८॥

वैश्येति। वैश्यं कृष्यादीनि शूद्रञ्च द्विजातिशुश्रूषादीनि कर्म्माणि यत्नतो राजा कारयेत् यस्मात्तौ स्वकर्म्मभ्यश्च्युतावशास्त्रीयोपार्ज्जितधनमदादिना जगदाकुलीकुर्य्यातास् ॥ ४१८॥

अहन्यहन्यवेक्षेत कर्म्मान्तान् वाहनानि च।
आयव्ययौ च नियतावाकरान् कोषमेव च ॥ ४१९॥

अहनीति। प्रत्यहन्तदधिकृतद्वारेण प्रारब्धदृष्टादृष्टार्थं कर्म्मणां निष्पत्तिं नृपतिर्निरूपयेत्तथा हस्त्यश्वादीनि किमद्य प्रविष्टं किं निःसृतमिति सुवर्णरत्नाद्युत्पत्तिस्थानानि भाण्डागारं चावेक्षेत व्यवहारदर्शनासक्तोपि राजा धर्मान्न परित्यजेदिति दर्शयितुमुक्तस्यापि पुनर्व्वचनम् ॥ ४१९ ॥

एवं सर्व्वानिमान्राजा व्यवहारान्समापयन्।
व्यपोह्य किल्बिषं सर्व्वम्प्राप्नोति परमां गतिम्॥४२०॥

एवमिति। एवमुक्तप्रकारेण एतान्सर्व्वानृणादानादीन् व्यवहारान् तत्त्वतोनिर्णयेनान्तन्नयन् राजा पापं सर्व्वमपहाय स्वर्गादिप्राप्तिरूपामुत्कृष्टां गतिं लभते॥ ४२० ॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायामष्टमोऽध्यायः॥ ० ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यामष्टमोऽध्यायः॥०

---

## ॥ ६ नवमोऽध्यायः ॥

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।
संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि शाश्वतान्॥ १ ॥

पुरुषस्येति। पुरुषस्य पत्न्याश्च धर्म्माय हितेऽन्योन्याऽव्यभिचारलक्षणे वर्त्मनि वर्त्तमानयोः संयुक्तयोर्वियुक्तयोश्च धर्म्मान् पारम्पर्य्यागतत्वेन नित्यान्वक्ष्यामि दम्पत्योः परस्परधर्म्मव्यतिक्रमे सत्यन्यतरज्ञापितेन राज्ञा दण्डेनापि स्वधर्म्मव्यवस्थापनं कर्त्तव्यमिति व्यवहारमध्येऽस्योपदेशः ॥ १ ॥

अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे॥ २॥

अस्वतन्त्रादिति। स्वीयैर्भर्त्रादिभिः सदा स्त्रियः स्वाधीनाः कार्य्या अनिषिद्धेष्वपि रूपरसादिविषयेषु प्रसज्जन्त्यःप्रसङ्गं कुर्व्वाणा आत्मवशाः कार्य्याः ॥ २ ॥

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥

पितेति। पिता विवाहात्पूर्व्वं स्त्रियं रक्षेत्पश्चाद्भर्त्ता तदभावे पुत्राः तस्मान्न स्त्री कस्याञ्चिदप्यवस्थायां स्वातन्त्र्यम्भजेत्। भर्त्ता रक्षति यौवनइत्यादि प्रायिकं अभर्तृपुत्रायास्तन्निहितायाः पित्रादिभिरपि रक्षणात् ॥ ३ ॥

कालेऽदाता पिता वाच्योवाच्यश्चानुपयन् पतिः।
मृते भर्त्तरि पुत्रस्तु वाच्योमातुररक्षिता ॥ ४ ॥

काले इति। प्रदानकाले पिता तामददत् गर्ह्योभवति प्रदानञ्चाऋतोरिति गौतमवचनात् ऋतोः प्राक् प्रदानकालः पतिश्च ऋतुकाले पत्नीमगच्छन् गर्हणीयोभवति पत्यौ मृते मातरमरक्षन् पुत्रोनिन्द्यः स्यात् ॥ ४ ॥

सूक्ष्मेभ्योपि प्रसङ्गेभ्यः स्त्रियोरक्ष्याविशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ५ ॥

सूक्ष्मेभ्यइति। स्वल्पेभ्योपि दुःसङ्गेभ्योदौःशील्यसंपादकेभ्योविशेषेण स्त्रियोरक्षणीयाः किंपुनर्म्महद्भ्यः यस्मादुपेक्षितरक्षणाद्द्वयोः पितृभर्तृगणयोः सन्तापन्दापयेयुः ॥ ५ ॥

इमं हि सर्व्ववर्णानां पश्यन्तोधममुत्तमम्।
यतन्ते रक्षितुम्भार्य्याम्भर्त्तारो दुर्ब्बला अपि॥ ६॥

इममिति। सर्व्वेषां ब्राह्मणादिवर्णानाम्भार्य्यारक्षणलक्षणं धर्म्मं वक्ष्यमाणश्लोकरीत्या सर्व्वधर्म्मेभ्य उत्कृष्टञ्जानन्तोऽन्ध पङ्ग्वादयोपि भार्य्यां रक्षितुं यतेरन्॥ ६॥

स्वां प्रसूतिञ्चरित्रञ्च कुलमात्मानमेव च। स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन् हि रक्षति॥ ७॥

स्वामिति। यस्माद्भार्य्यां यत्नतोरक्षणे असंकीर्णविशुद्धापत्योत्पादनेन स्वसन्ततिं तथा शिष्टसमाचारं पितृपितामहाद्यन्वयं आत्मानं विशुद्धसन्तानिमित्तोर्द्ध्वदैहिकलाभेन स्वधर्म्मञ्च विशुद्धभार्य्यस्याधानादावप्यधिकाराद्रक्षति तस्मात्स्त्रियोरक्षितुं यतेतेति पूर्व्वस्य विशेषः॥ ७॥

पतिर्भार्य्यां संप्रविश्य गर्भोभूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्याञ्जायते पुनः॥ ८॥

पतिरिति। पतिः शुक्ररूपेण भार्य्यां संप्रविश्य गर्भतामापाद्य तस्याम्भार्य्यायां पुत्ररूपेण जायते। तथा च श्रुतिः। आत्मा वै पुत्रनामासीति। जायायास्तदेव जायात्वं यतोऽस्यां पतिः पुनर्जायते। तथा च बह्वृचब्राह्मणं पतिर्जायां प्रविशति गर्भोभूत्वेह

मातरं। तस्यां पुनर्नवोभूत्वा दशमे मासि जायते। तज्जाया जाया भवति यदस्याञ्जायते पुनः। ततश्चासौ रक्षणीयेत्येतदर्थं नामनिर्वचनम्॥ ८॥

यादृशम्भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः॥ ९॥

यादृशमिति। यस्माद्यादृशं पुरुषं शास्त्रेण विहितं प्रतिषिद्धं वा स्त्री तादृशं शास्त्रोक्तपुरुषसेवनेनोत्कृष्टं निषिद्धपुरुषसेवनेन च निकृष्टं पुत्रञ्जनयति तस्मादपत्यविशुद्ध्यर्थम्पत्नीं यत्नतो रक्षेत्॥ ९॥

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्॥ १०॥

कथं रक्षणीयेत्यतआह नेति। कश्चिद्बलात्संरोधादिनापि स्त्रियो रक्षितुन्न शक्तस्तत्रापि व्यभिचारदर्शनात्। किन्त्वेतैर्वक्ष्यमाणैरक्षणोपाययोगैस्ता रक्षयितुं समर्थाः॥ १०॥

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मेऽन्नपक्त्याञ्च पारिणाह्यस्य वेक्षणे॥ ११॥

तानुपायानाह अर्थस्येति। धनस्य संग्रहणे विनियोगे च

द्रव्यशरीरशुद्धौ भर्त्तृश्चिश्रुश्रूषादिकेऽन्नसाधने पारिणाह्यस्य गृहोपकरणस्य शय्यासनकुण्डकटाहादेरवेक्षणएनान्नियोजयेत् वेक्षणे अवश्यादिलोपः ॥ ११ ॥

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः॥ १२॥

अरक्षिताइति। आप्तास्य ते आज्ञाकारिणश्च तैः पुरुषैर्गृहे रुद्धाअप्यरक्षिताभवन्ति यादुःशीलतया नात्मानं रक्षन्ति यास्तु धर्म्मज्ञतया आत्मानमात्मना रक्षन्ति ताएव सुरक्षिताभवन्ति अतोधर्म्माधर्म्मफलस्वर्गनरकप्राप्त्याद्युपदेशेन आसां संयमः कार्य्यइति मुख्यरक्षणोपायकथनपरमिदम् ॥ १२ ॥

पानं दुर्ज्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नोऽन्यगेहवासश्च नारीसंदूषणानि षट्॥ १३॥

पानमिति। मद्यपानं असत्पुरुषसंसर्गः भर्त्रा सह विरहः इतस्ततश्च भ्रमणं अकालस्वापः परगृहनिवासइत्येतानि षट् स्त्रियाव्यभिचाराख्यदोषजनकानि तस्मादेतेभ्योएतारक्षणीयाः ॥ १३ ॥

नैता रूपम्परीचन्ते नासां वयसि संस्थितिः।
सुरूपम्वा विरूपम्वा पुमानित्येव भुञ्जते॥ १४॥

नैतादति। नैताः कमनीयं रूपं विचारयन्ति न चासां यौवनादिके वयसि आदरो भवति किन्तु सुरूपं कुरूपं वा पुमानित्येतावतैव तमुपभुञ्जते॥ १४॥

पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः।
रक्षितायत्नतोपीह भर्त्तृष्वेता विकुर्व्वते॥ १५॥

अपि च पौंश्चल्यादिति। पुंसो दर्शनेन सम्भोगाद्यभिलाष शीलत्वात् चित्तस्थैर्य्याभावात्स्वभावतः स्नेहरहितत्वाच्च एता यत्नेनापि लोके रक्षिताः सत्यो व्यभिचाराश्रयणेन भर्त्तृषु विक्रियाङ्गच्छन्ति॥ १५॥

एवं स्वभावं ज्ञात्वासाम्प्रजापतिनिसर्गजम्।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणम्प्रति॥ १६॥

एवमिति। एवं श्लोकद्वयोक्तमासां स्वभावं हिरण्यगर्भ सृष्टिकालजनितं ज्ञात्वा रक्षणार्थं प्रकृष्टं यत्नं पुरुषः कुर्य्यात् १६॥

शय्यासनमलङ्कारं कामं क्रोधमनार्जवम्।
द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत्॥ १७॥

शय्येति। शयनोपवेशनालङ्करणशीलत्वकामक्रोधानार्ज्जव परहिंसाकुत्सिताचारत्वानि सर्गादौ मनुः स्त्रीभ्यः कल्पितवान् तस्माद्यत्नतोरक्षणीयाः॥ १७॥

नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः॥१८॥

नास्तीति। जातकर्म्मादिक्रिया स्त्रीणाम्मन्त्रैर्न्नास्ति इत्येषा शास्त्रमर्य्यादा व्यवस्थिता ततश्च मन्त्रवत्संस्कारगणाभावान्न निष्पापान्तःकरणादिन्द्रियप्रमाणं धर्म्मप्रमाणश्रुतिस्मृतिरहित त्वान्न धर्म्मज्ञा अमन्त्राः पापापनोदनमन्त्रजपरहितत्वात् जातेपि पापे तन्निर्णेजनाक्षमाः अनृतवदशुभाः स्त्रियइति शास्त्रमर्य्यादा तस्माद्यत्नतोरक्षणीयाइत्यत्र तात्पर्य्यम्॥ १८॥

तथा च श्रुतयो बह्वो निगीता निगमेष्वपि।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः॥ १९॥

व्यभिचारशीलत्वं स्त्रीणां स्वभावइत्युक्तं तच्च श्रुतिं प्रमाण तयोपन्यस्यति तथा चेति। बह्व्यः श्रुतयो बहूनि श्रुतिवा क्यानि नचैतद्विद्मोब्राह्मणाः स्मोऽब्राह्मणावेत्येवमादीनि निग

मेषु स्वालक्ष्यणं स्त्रीणां व्यभिचारशीलत्वं तत्परिज्ञानार्थं पठितानि तासां श्रुतीनां मध्ये या निष्कृतिरूपाव्यभिचारप्रायश्चित्तभूतास्ताः श्रुतीः शृणुत एकस्याः श्रुतेर्वक्ष्यमाणत्वात् श्रुतिं शृणुतेत्यर्थः सुपांसुपोभवन्तीति द्वितीयैकवचने वहुवचनम् ॥ १९ ॥

यन्मे माता प्रलुलुभे विचरन्त्यऽपतिव्रता। तन्मे रेतःपिता वृक्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥

यदिति। कश्चित्पुत्रोमातुर्मानसव्यभिचारमवगम्य ब्रूते मनोवाक्कायकर्मभिः पतिव्यतिरिक्तम्पुरुषं या न कामयते सा पतिव्रता ततोऽन्या अपतिव्रता मम माता अपतिव्रता सती परगृहान् गच्छन्ती यत्प्रलुलुभे परपुरुषम्प्रति सञ्जातलोभा ऽभूत्तत्परपुरुषसङ्कल्पदुष्टं मातृरजोरूपं रेतोमम पिता शोधयत्वित्यस्य प्रकृतस्य स्त्रियाव्यभिचारशीलत्वस्यैतदितिकरणान्तं मन्त्रपादत्रयं ज्ञापकं अयञ्च मन्त्रस्मातुर्मास्यादिषु विनियुक्तः ॥ २० ॥

ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा। तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥

साम्प्रति मानसव्यभिचारप्रायश्चित्तरूपतामस्य मन्त्रस्याहध्यायतीति। भर्त्तुरप्रियं यत्किञ्चित्पुरुषान्तरगमनं स्त्री मनसापि चिन्तयति तस्य मानसस्य व्यभिचारस्य एष प्रकृतोमन्त्रः

सत्यकृशोधनोमन्वादिभिरुच्यते मातेति श्रवणात्पुत्रसेवार्थं प्रायश्चित्तरूपोमन्त्रोन मातुः ॥ २१ ॥

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥

यादृग्गुणेनेति। यथारूपेण भर्त्रा साधुनाऽसाधुना वा स्त्री विवाहविधिना संयुज्यते सा भर्तृसदृशगुणा भवति यथा समुद्रेण संयुज्यमाना नदी स्वादूदकापि क्षारजला जायते भर्त्तुरा त्मसंयमनाख्यस्त्रीरक्षणोपायान्तरोपदेशार्थमिदं ॥ २२ ॥

अक्षमाला वशिष्ठेन संयुक्ताऽधमयोनिजा।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥

अत्रोत्कर्षे दृष्टान्तमाह अक्षेति। अक्षमालाख्या निकृष्टयोनिजा वशिष्ठेन परिणीता तथा चटका मन्दपालाख्येन ऋषिणा सङ्गता पूज्यताङ्गता ॥ २३ ॥

एताश्चान्याश्च लोकेऽस्मिन्नपकृष्टप्रसूतयः। उत्कर्षं योषितः प्राप्ताः स्वैःस्वैर्भर्तृगुणैः शुभैः ॥ २४ ॥

एताइति। यद्यपि द्वे प्रकृते तथापि प्रदर्शनार्थत्वमनयो र्मत्वा एताइति बहुवचनं कृतं एताश्चान्याश्च सत्यवत्यादयो

निकृष्टप्रसूतयः स्वभर्तृगुणैः प्रकृष्टैरस्मिन् लोके उत्कृष्टता म्प्राप्ताः ॥ २४ ॥

. एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ।
प्रेत्येह च सुखोदर्कान् प्रजाधर्मान्निबोधत ॥ २५॥

एषेति। एष लोकाचारोजायापतिविषयः सदा शुभउक्तः इदानीमिह लोके परलोके च उत्तरकालसुखहेतून् किं चेत्रिणोऽपत्यमुत वीजिनइत्यादीन्प्रजाधर्मान् शृणुत ॥ २५ ॥

प्रजनार्थं महाभागाः पूजार्हागृहदीप्तयः ।
स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥ २६ ॥

प्रजेति। यद्यप्यासां रक्षणार्थं दोषाउक्तास्तथापि शक्य प्रतीकारत्वादिहदोषाभावः एतास्त्रियोमहोपकारगर्भोत्पादनार्थंस्वरूकल्याणभाजनभूताः वस्त्रालङ्कारादिदानेन सम्मानार्हाः स्वगृहशोभाकारिण्यः। स्त्रियः श्रियश्च गेहेषु तुल्यरूपा नानयोर्विशेषोविद्यते यथा निःश्रीकं गृहं नराजते एवं निःस्त्रीकमिति ॥ २६ ॥

उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ २७॥

अपिच उत्पादनमिति। अपत्यस्य जननं जातस्य परिपालनं

प्रतिदिनञ्चातिथिमित्रभोजनादेर्लोकव्यवहारस्य प्रत्यत्तं भार्य्यैव निदानम्॥२७॥

अपत्यं धर्म्मकार्य्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह॥२८॥

अपत्यमिति। अपत्योत्पादनमुक्तमप्येतदभ्यर्हितत्त्वज्ञापनार्थं पुनरभिधानं धर्म्मकार्य्याणि अग्निहोत्रादीनि परिचर्य्या उत्कृष्टा रतिः पितॄणामात्मनश्चापत्यजननादिनास्वर्ग इत्येतत्सर्व्वं भार्य्याधीनम्॥२८॥

पतिं या नाभिचरति मनोवाग्देहसंयता। सा
भर्त्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते॥२९॥

पतिमिति। या स्त्री मनोवाग्देहसंयता सती विशेषणोपादानसामर्थ्यान्मनोवाग्देहैरेव न व्यभिचरति सा भर्त्रा सहार्ज्जितान्स्वर्गादिलोकानाप्नोति इह लोके विशिष्टैः साध्वीत्युच्यते॥२९॥

व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।
शृगालयोनिञ्चाप्नोति पापरोगैश्च पीड्यते॥३०॥

व्यभिचारादिति। पुरुषान्तरसम्पर्कात् स्त्री लोके निन्द्यतां जन्मान्तरे च शृगालजातिमाप्नोति क्षयरोगादिभिश्चपीड्यते

पञ्चमाध्याये स्त्रीधर्म्मउक्तमप्येतत् श्लोकद्वयं सदपत्यसम्पत्त्यर्थ-
त्वेन महाप्रयोजनतया पुनः पठितम् ॥ ३० ॥

पुत्रम्प्रत्युदितं सद्भिः पूर्व्वजैश्च महर्षिभिः।
विश्वजन्यमिमं पुण्यमुपन्यासन्निबोधत ॥ ३१ ॥

पुत्रमिति। पुत्रमधिकृत्य शिष्टैर्मन्वादिभिः पूर्व्वोत्पन्नैश्च
महर्षिभिः अभिहितमिमं वक्ष्यमाणं सर्व्वजनहितं विचारं
शृणुत ॥ ३१ ॥

भर्त्तुः पुत्रं विजानन्ति श्रुतिद्वैधन्तु भर्त्तरि।
आहुरुत्पादकङ्केचिदपरे क्षेत्रिणं विदुः ॥ ३२ ॥

भर्त्तुरिति। भर्त्तुः पुत्रोभवतीति मुनयोमन्यन्ते भर्त्तरि द्विः
प्रकारा श्रुतिर्व्वर्त्तते केचिदुत्पादकमवोढारमपि भर्त्तारं तेन
पुत्रेण पुत्रिणमाहुः अन्येतु वोढारम्भर्त्तारमनुत्पादकमपि
अन्यजनितेन पुत्रेण पुत्रिणमाहुः ॥ ३२ ॥

क्षेत्रभूता स्मृता नारी वीजभूतः स्मृतः पुमान्।
क्षेत्रवीजसमायोगात्सम्भवः सर्व्वदेहिनां ॥ ३३ ॥

क्षेत्रेति। व्रीह्याद्युत्पत्तिस्थानं क्षेत्रं तत्तुल्या स्त्री मुनिभिः
स्मृता पुरुषस्य व्रीह्यादिवीजतुल्यः स्मृतः यद्यपि रेतोवीजं
तथापि तदधिकरणत्वात् पुरुषोवीजमिति व्यपदिश्यते

क्षेत्रबीजसमायोगात्सर्व्वप्राणिनामुत्पत्तिः एवञ्चोभयोः कारण त्वस्याविशिष्टत्वात् युक्ता विप्रतिपत्तिः ॥ ३३ ॥

विशिष्टं कुत्रचिद्बीजं स्त्रीयोनिस्त्वेव कुत्रचित्।
उभयन्तु समं यत्र सा प्रसूतिः प्रशस्यते॥ ३४ ॥

किं यत्सम्बन्धिक्षेत्रं तस्यापत्यं उत यदीयं बीजन्तस्येति विशिष्टमिति। क्वचिद्बीजप्रधानं जाता ये त्वनियुक्तायामिति न्यायेनोत्पन्नोबीजिनोबुधइव सोमस्य तथा व्यासऋष्यशृङ्गा दयोबीजिनामेव सुताः क्वचित् क्षेत्रस्य प्रधान्यं यथा यस्तल्पजः प्रमीतस्य इति वक्ष्यति अतएव विचित्रवीर्य्यक्षेत्रे क्षत्रियायां ब्राह्मणोत्पादिता अपि धृतराष्ट्रादयः क्षेत्रियाः क्षेत्रिणएव पुत्रावभूवुः यत्र पुनर्बीजयोन्योः साम्यन्तत्र वोढैव जनयिता तदपत्यम्प्रशस्तम्भवति ॥ ३४ ॥

बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते।
सर्व्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता॥ ३५ ॥

तत्र बीजप्रधान्यापेक्षन्तावदाह बीजस्येति। बीजक्षेत्रयोर्बीजं प्रधानमभिधीयते यस्मात्सर्व्वेषां भूतारम्भानां उत्पत्तिर्बीज गतवर्णरूपादिचिह्नैः उपलक्षिता दृश्यते ॥ ३५ ॥

यादृशन्तूप्यते वीजं क्षेत्रे कालोपपादिते।
तादृग्रोहति तत्तस्मिन्वीजं स्वैर्व्यञ्जितं गुणैः॥ ३६॥

यादृशमिति। यज्जातीयं वीजं ब्रीह्यादि ग्रीष्मादिकाले कर्षणादिना संस्कृते क्षेत्रे उप्यते तज्जातीयमेव तद्वीजमात्मीयै र्वर्णादिभिरुपलक्षितन्तस्मिन् क्षेत्रे जायते॥ ३६॥

इयम्भूमिर्हि भूतानां शाश्वती योनिरुच्यते। नच योनिगुणान् कांश्चिद्वीजम्पुष्यति पुष्टिषु॥ ३७॥

एवमन्वयप्रकारेण वीजप्राधान्यं प्रदर्श्य व्यतिरेकमुखेन दर्शयितुमाह इयमिति। हिरवधारणे इयमेव भूमिर्भूतार भ्मानान्तरुगुल्मलतादीनां नित्या योनिः कारणं क्षेत्रात्मकं सर्व्व लोकैरुच्यते नच भूम्याख्ययोनिधर्मान् कांश्चिदपि मृत्स्वरूप कादीन् वीजं स्वविकारेषु अङ्कुरकाण्डाद्यवस्थासु भजते भज त्यर्थत्वात् पुष्यतेः सकर्मता तस्माद्योनिगुणानुवर्त्तनाभावान्न वीजस्य प्राधान्यं॥ ३७॥

भूमावप्येककेदारे कालोप्तानि कृषीवलैः।
नानारूपाणि जायन्ते वीजानीह स्वभावतः॥ ३८॥

अपिच भूमाविति। भूमावेकस्मिन्नपि केदारे कर्षकैर्व्वपन

कालोप्तानि व्रीहिमुद्गादीनि नानारूपाण्येव वीजस्वभावाज्जायन्ते नतु भूमेरेकत्वादेकरूपाणि भवन्ति ॥ ३८ ॥

व्रीहयः शालयोमुद्गास्तिलामाषास्तथा यवाः। यथावीजम्प्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥

तथाहि व्रीहीति। व्रीहयः षष्टिकाः शालयः कलमाद्याः तथा मुद्गादयोवीजस्वभावानतिक्रमेण नानारूपाणि जायन्ते ॥ ३९ ॥

अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते। उप्यते यद्धि यद्वीजं तत्तदेव प्ररोहति ॥ ४० ॥

एवञ्चसति अन्यदिति। व्रीहिरुप्तोमुद्गादिर्जायते इत्येतन्न सम्भवति यस्माद्यद्यदेव वीजं उप्यते तत्तदेव जायते एवं वीजगुणानुवर्त्तनात् क्षेत्रधर्माननुवृत्तेश्च व्रीह्यादौ मनुष्येष्वपि वीज प्राधान्यं ॥ ४० ॥

तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना। आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥ ४१ ॥

सम्प्रति क्षेत्रप्राधान्यमाह तदिति। तद्वीजं सहजप्रज्ञावता पित्रादिभिरनुशिष्टेन ज्ञायतेऽनेनेतिज्ञानं वेदः एवं विज्ञान

नपि तदङ्गादिशास्त्राणि तद्वेदिना आयुरिच्छता न कदाचित् परजायायां वपनीयम् ॥ ४१ ॥

अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः।
यथा वीजं नवप्तव्यं पुंसा परपरिग्रहे ॥ ४२ ॥

अत्रेति। अतीतकालज्ञा अस्मिन्नर्थे वायुप्रोक्तागाथाः छन्दोविशेषयुक्तानि वाक्यानि कथयन्ति यथा परपुरुषेण पर पत्न्यां वीजं न वप्तव्यमिति ॥ ४२ ॥

नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः। तथा
नश्यति वै क्षिप्रं वीजम्परपरिग्रहे ॥ ४३ ॥

नश्यतीति। यथान्येन विद्धं मृगं कृष्णसारं तस्मिन्नेव छिद्रे यस्मादन्यस्य विध्यतः आविद्धः क्षिप्तः शरोनिष्फलोभवति पूर्व्व इन्त्रैव हतत्वात् तस्यैव तन्मृगलाभात् एवं परपत्न्यां उप्तं वीजं शीघ्रमेव निष्फलं भवति गर्भग्रहणानन्तरं क्षेत्रिणः अपत्य लाभात् ॥ ४३ ॥

पृथोरपीमां पृथिवीं भार्य्यां पूर्व्वविदोविदुः।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतोमृगम् ॥ ४४ ॥

पृथोरिति। इमामपि पृथ्वीं पृथुना पूर्व्वम्परिगृहीतत्वात् नेकराजसम्बन्धेपि पृथोर्भार्य्यामित्यतीतज्ञा जानन्ति तथा

स्थाणुं छिन्दन्ति स्थाणुछेदः कर्म्मण्यण् येन स्थाणुमुत्पाद्य क्षेत्रं कृतं तस्यैव तत्क्षेत्रं वदन्ति तथा शरादिशल्यं येन पूर्व्वं मृगे क्षिप्तं तस्यैव तं मृगमाहुः एवञ्च पूर्व्वपरिगृहीतुः स्वामित्वाद्वोढुरेवापत्यम्भवति न जनयितुः ॥ ४४ ॥

एतावानेव पुरुषोयज्जायात्मा प्रजेति ह ।
विप्राः प्राहुस्तथा चैतद्योभर्त्ता सा स्मृताङ्गना॥४५॥

एतावानिति। नैकः पुरुषोभवति अपितु भार्य्यास्वदेहमपत्यानीत्येतत्परिमाणएव पुरुषः तथाच वाजसनेयब्राह्मणं। अर्द्धोह वा एष आत्मनो यज्जाया तस्मात् यावज्जायां न विन्दते नैतावत्प्रजायते असर्व्वोहि तावद्भवति अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि सर्व्वोभवति। तथा चैतद्वेदविदो विप्रावदन्ति योभर्त्ता सैव भार्य्या स्मृतेति एवञ्च तस्यामुत्पादितं भर्त्तुरेवापत्यम्भवतीति ॥ ४५ ॥

न निष्क्रयविसर्गाभ्याम्भर्त्तुर्भार्य्या विमुच्यते।
एवं धर्म्मं विजानीमः प्राक्प्रजापतिनिर्म्मितं ॥ ४६ ॥

यतश्च दम्पत्योरैक्यमतः नेति। निष्क्रयो विक्रयः विसर्गस्त्यागः न ताभ्यां स्त्री भर्त्तुर्भार्य्यात्वादपैत्येवं पूर्व्वं प्रजापतिना

स्मृतं नित्यं धर्म्मं मन्यामहे एवञ्च क्रयादिनापि परस्त्रियमात्म सात्कृत्वा तदुत्पादितापत्यं क्षेत्रिण एव भवति न वीजिनः ॥४६॥

सकृदंशोनिपतति सकृत्कन्या प्रदीयते। सकृ दाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ४७॥

सकृदित्यादि। पित्रादिधनविभागो भ्रातॄणां धर्म्मतः कृतः सकृदेव भवति न पुनरन्यथा क्रियतइति तथा कन्या पित्रा दिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते एवञ्च अन्येन पूर्व्व मन्यस्मै दत्तायां पश्चात्पित्रादिभिः प्राप्तायामपि जनितमपत्यं न वीजिनोभवतीत्येतदर्थमस्योपन्यासः तथा कन्यातोन्यस्मि न्नपि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीय तइति त्रीण्येतानि साधूनां सकृद्भवन्ति। यद्यपि कन्यादानस्य सकृत्करणं प्रकृतोपयुक्तं तथापि प्रसङ्गादंशदानयोरपि सकृ त्ताभिधानं सकृदाह ददानीत्यनेनैव कन्यादानस्यापि सकृत्क रणसिद्धौ प्रकृतोपयोगित्वादेव पृथगभिधानम् ॥ ४७ ॥

यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च। नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥ ४८॥

यथेति। यथा गवादिषु परकीयेष्वात्मवृषभादिकं नियुज्य वत्सोत्पादकोन तद्भागी तथा परकीयभार्य्यास्वपि नोत्पादकः प्रजाभागी भवति ॥ ४८ ॥

स्थाणुं छिन्दन्ति स्थाणुच्छेदः कर्म्मण्वण् येन स्थाणुमुत्पाट्य क्षेत्रं कृतं तस्यैव तत्क्षेत्रं वदन्ति तथा शरादिशल्यं येन पूर्व्वं मृगे क्षिप्तं तस्यैव तं मृगमाहुः एवञ्च पूर्व्वपरिगृहीतुः स्वामित्वाद्वो ढुरेवापत्यम्भवति न जनयितुः ॥ ४४ ॥

एतावानेव पुरुषोयज्जायात्मा प्रजेति ह ।
विप्राः प्राहुस्तथा चैतद्योभर्त्ता सा स्मृताङ्गना॥४५॥

एतावानिति । नैकः पुरुषोभवति अपितु भार्य्यास्वदेहमपत्यानीत्येतत्परिमाणएव पुरुषः तथाच वाजसनेयब्राह्मणं । अर्द्धोह वा एष आत्मनो यज्जाया तस्मात् यावज्जायां न विन्दते नैतावत्प्रजायते असर्व्वोहि तावद्भवति अथ यदैव जायां विन्दतेऽथ प्रजायते तर्हि सर्व्वोभवति। तथाचैतद्वेदविदो विप्रावदन्ति योभर्त्ता सैव भार्य्या स्मृतेति एवञ्च तस्यामुत्पादितं भर्त्तुरेवापत्यम्भवतीति ॥ ४५ ॥

न निष्क्रयविसर्गाभ्याम्भर्त्तुर्भार्य्या विमुच्यते।
एवं धर्म्मं विजानीमः प्राक्प्रजापतिनिर्मितं ॥ ४६ ॥

यतश्च दम्पत्योरैक्यमतः नेति। निष्क्रयो विक्रयः विसर्गस्त्यागः न ताभ्यां स्त्री भर्त्तुर्भार्य्यात्वादपैत्येवं पूर्व्वं प्रजापतिना

स्मृतं नित्यं धर्मं मन्यामहे एवञ्च क्रयादिनापि परस्त्रियमात्म
सात्कृत्वा तदुत्पादितापत्यं क्षेत्रिण एव भवति न वीजिनः ॥४६॥

• सकृदंशोनिपतति सकृत्कन्या प्रदीयते। सकृ
दाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ४७॥

सकृदित्यादि। पित्रादिधनविभागो भ्रातॄणां धर्म्मतः कृतः
सकृदेव भवति न पुनरन्यथा क्रियतइति तथा कन्या पित्रा
दिना सकृदेकस्मै दत्ता न पुनरन्यस्मै दीयते एवञ्च अन्येन पूर्व्वं
मन्यस्मै दत्तायां पश्चात्पित्रादिभिः प्राप्तायामपि जनितमपत्यं
न वीजिनोभवतीत्येतदर्थमस्योपन्यासः तथा कन्यातोन्यस्मि
न्नपि गवादिद्रव्ये सकृदेव ददानीत्याह न पुनस्तदन्यस्मै दीय
तइति त्रीण्येतानि साधूनां सकृद्भवन्ति। यद्यपि कन्यादानस्य
सकृत्करणं प्रकृतोपयुक्तं तथापि प्रसङ्गादंशदानयोरपि सकृ
त्त्वाभिधानं सकृदाह ददानीत्यनेनैव कन्यादानस्यापि सकृत्क
रणसिद्धौ प्रकृतोपयोगित्वादेव पृथगभिधानम् ॥ ४७ ॥

यथा गोश्वोष्ट्रदासीषु महिष्यजाविकासु च।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥ ४८॥

यथेति। यथा गवादिषु परकीयेष्वात्मवृषभादिकं नियुज्य
वत्सोत्पादकोन तद्भागी तथा परकीयभार्य्यास्वपि नोत्पादकः
प्रजाभागी भवति ॥ ४८ ॥

येऽक्षेत्रिणोवीजवन्तः परक्षेत्रप्रवापिणः। ते वै शस्यस्य जातस्य न लभन्ते फलं क्वचित्॥ ४९॥

य इति। क्षेत्रस्वामिनो ये न भवन्ति अथच वीजस्वामिनः सन्तः परक्षेत्रे वीजं वपन्ति ते तत्र क्षेत्रजातस्य धान्यादेः फलं क्वचिदपि देशे न लभन्तइति प्रकृतस्य दृष्टान्तः॥ ४९॥

यदन्यगोषु वृषभो वत्सानां जनयेच्छतम्। गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्॥ ५०॥

यदन्येति। यदन्यदीयगवीषु वृषभो वत्सशतमपि जनयेत्सर्व्वे ते वत्साः स्त्रीगवीस्वामिनो भवन्त्येव न वृषभस्वामिनः वृषभस्य यत् शुक्रसेचनं तद्वृषभस्वामिनो निष्फलमेव भवति यथा गोश्वोष्ट्रेत्यनेनोत्पादकस्य प्रजाभागित्वं न भवतीत्येतत्परत्वेन दृष्टान्तउक्तः अयन्तु क्षेत्रस्वामिनः प्रजाभागित्वम्भवतीत्येतत्परत्वेन अतो न पुनरुक्तिः॥ ५०॥

तथैवाक्षेत्रिणो वीजं परक्षेत्रप्रवापिणः। कुर्व्वन्ति क्षेत्रिणामर्थं न वीजी लभते फलम्॥ ५१॥

तथैवेति। यथा गवादिगर्भेषु तथैव स्व्यपत्यस्वाम्यरहिताः सन्तः परकीयभार्य्यायां ये वीजं वपन्ति ते क्षेत्रस्वामिनामेवापत्यलक्षणमर्थं कुर्व्वन्ति वीजसेक्ता त्वपत्याख्यं फलं न लभते॥ ५१॥

फलन्त्वनभिसन्धाय क्षेत्रिणां वीजिनान्तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्गरीयसी ॥ ५२ ॥

फलमिति। यदस्यामुत्पत्स्यतेऽपत्यं तदावयोरुभयोरेवैवं यत्र नियमो न कृतस्तत्र निःसन्दिग्धमेव क्षेत्रिणोऽपत्यं उक्तरीत्या वीजात्क्षेत्रम्बलवत् ॥ ५२ ॥

क्रियाभ्युपगमात्त्वेतद्वीजार्थं यत्प्रदीयते। तस्येह भागिनौ दृष्टौ वीजी क्षेत्रिकएव च ॥ ५३ ॥

क्रियेति। यदत्रापत्यं भविष्यति तदावयोरेवेति नियम्यैतत्क्षेत्रं स्वामिना वीजवपनार्थं यद्वीजिनो दीयते तस्यापत्यस्य लोके वीजिक्षेत्रिणौ द्वावपि भागिनौ दृष्टौ ॥ ५३ ॥

ओघवाताहृतं वीजं यस्य क्षेत्रे प्ररोहति।
क्षेत्रिकस्यैव तद्वीजन्न वप्ता लभते फलम् ॥ ५४ ॥

ओघेति। यद्वीजञ्जलवेगवाताभ्यां अन्यदीयक्षेत्रादानीतं यस्य क्षेत्रे जायते तत्क्षेत्रस्वामिनएव तद्वीजम्भवति नतु येन वीजमुप्तं स तत्फलं लभते एवञ्च स्वभार्य्याभ्रमेण परभार्य्यागमने समायम्प्रत्तो भवितेत्यवगमेपि क्षेत्रिणएवापत्यमित्यनेन दर्शितम् ॥ ५४ ॥

एषधर्म्मोगवाश्वस्य दास्युष्ट्राजाविकस्य च।
विहङ्ग महिषीणाञ्च विज्ञेयः प्रसवम्प्रति ॥ ५५ ॥

एषइति। एषैव व्यवस्था गवाश्वादीनां सन्ततिम्प्रति ज्ञातव्या यत्क्षेत्रस्वाम्येव गवाश्वादिसन्ततिस्वामी नतु वृषभादिस्वामी नियमेतु कृते सत्येतयोरेव सन्ततिस्वाम्यम् ॥ ५५ ॥

एतद्वः सारफल्गुत्वं वीजयोन्योः प्रकीर्त्तितं। अतः परम्प्रवक्ष्यामि योषितान्धर्म्ममापदि ॥ ५६ ॥

एतदिति। एतद्वीजयोन्योः प्राधान्याप्राधन्यं युष्माकमुक्तं अतोऽनन्तरं स्त्रीणां सन्तानाभावे यत्कर्त्तव्यं तद्वक्ष्यामि ॥५६॥

भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य सा।
यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा स्मृता ॥५७॥

भ्रातुरिति। ज्येष्ठस्य भ्रातुर्या भार्य्या सा कनिष्ठस्य भ्रातुर्गुरुपत्नी भवति कनिष्ठस्य च भ्रातुर्या भार्य्या सा ज्येष्ठभ्रातुः स्नुषा मुनिभिः स्मृता ॥ ५७ ॥

ज्येष्ठोयवीयसो भार्य्यां यवीयान्वाग्रजस्त्रियं।
पतितौभवतोगत्वा नियुक्तावप्यनापदि ॥ ५८॥

ज्येष्ठइति। ज्येष्ठकनिष्ठभ्रातराविंतरेतरभार्य्यांङ्गत्वा सन्ता नाभावं विना नियुक्तावपि पतितौ स्याताम्॥ ५८॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये॥ ५९ ॥

देवरादिति। सन्तानाभावे स्त्रिया पत्यादिगुरुनियुक्तया देवरादन्यस्माद्वा सपिण्डात् सम्यग्वक्ष्यमाणघृताक्तादिनियम वत्पुरुषगमनेनेष्टा प्रजा उत्पादयितव्या ईप्सितेत्यभिधान मर्य्यात्कार्य्याचमपुत्रोत्पत्तौ पुनर्गमनार्थम्॥ ५९॥

विधवायान्नियुक्तस्तु घृताक्तोवाग्यतोनिशि। एक मुत्पादयेत्पुत्रन्न द्वितीयं कथञ्चन॥ ६०॥

विधवायामिति। विधवायामित्यपत्योत्पादनयोग्यपत्यभाव परमिदं जीवत्यपि पत्यौ अयोग्यपत्यादिगुरुनियुक्तो घृताक्तसर्व्व गात्रोमौनी रात्रावेकं पुत्रं जनयेत् न कथञ्चिद्द्वितीयम्॥ ६०॥

एषधर्म्मोगवाश्वस्य दास्युष्ट्राजाविकस्य च।
विहङ्ग महिषीणाञ्च विज्ञेयः प्रसवम्प्रति ॥ ५५ ॥

एषइति। एषैव व्यवस्था गवाश्वादीनां सन्ततिम्प्रति ज्ञातव्या यत्क्षेत्रस्वाम्येव गवाश्वादिसन्ततिस्वामी नतु वृषभादिस्वामी नियमे तु कृते सत्येतयोरेव सन्ततिस्वाम्यम् ॥ ५५ ॥

एतद्वः सारफल्गुत्वं वीजयोन्योः प्रकीर्त्तितं। अतः परम्प्रवक्ष्यामि योषितान्धर्म्ममापदि ॥ ५६ ॥

एतदिति। एतद्वीजयोन्योः प्राधान्याप्राधन्यं युष्माकमुक्तं अतोऽनन्तरं स्त्रीणां सन्तानाभावे यत्कर्त्तव्यं तद्वक्ष्यामि ॥५६॥

भ्रातुर्ज्येष्ठस्य भार्य्या या गुरुपत्न्यनुजस्य सा।
यवीयसस्तु या भार्य्या स्नुषा ज्येष्ठस्य सा स्मृता ॥५७॥

भ्रातुरिति। ज्येष्ठस्य भ्रातुर्या भार्य्या सा कनिष्ठस्य भ्रातुर्गुरुपत्नी भवति कनिष्ठस्य च भ्रातुर्या भार्य्या सा ज्येष्ठभ्रातुः स्नुषा मुनिभिः स्मृता ॥ ५७ ॥

ज्येष्ठोयवीयसो भार्य्यां यवीयान्वाग्रजस्त्रियं।
पतितौभवतोगत्वा नियुक्तावप्यनापदि ॥ ५८॥

ज्येष्ठइति। ज्येष्ठकनिष्ठभ्रातरावितरेतरभार्य्यांगत्वा सन्ता नाभावं विना नियुक्तावपि पतितौ स्याताम्॥ ५८॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।
प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये॥ ५९ ॥

देवरादिति। सन्तानाभावे स्त्रिया पत्यादिगुरुनियुक्तया देवरादन्यस्माद्वा सपिण्डात् वक्ष्यमाणघृताक्तादिनियम वत्पुरुषगमनेनेष्टा प्रजा उत्पादयितव्या ईप्सितेत्यभिधान मर्थात्कार्य्यात्त्वमपुत्रोत्पत्तौ पुनर्गमनार्थम्॥ ५९ ॥

विधवायान्नियुक्तस्तु घृताक्तोवाग्यतोनिशि। एक
मुत्पादयेत्पुत्त्रन्न द्वितीयं कथञ्चन॥ ६०॥

विधवायामिति। विधवायामित्यपत्योत्पादनयोग्यपत्यभाव परमिदं जीवत्यपि पत्यौ अयोग्यपत्यादिगुरुनियुक्तो घृताक्तसर्व्व गात्रोमौनी रात्रावेकं पुत्रं जनयेत् न कथञ्चिद्द्वितीयम्॥ ६०॥

द्वितीयमेके प्रजनम्मन्यन्ते स्त्रीषु तद्विदः। अनिर्वृत्तन्नियोगार्थम्पश्यन्तो धर्म्मतस्तयोः ॥ ६१ ।

द्वितीयेति । अन्ये पुनराचार्य्या नियोगात्पुत्रोत्पादनविधिज्ञा अपुत्रएकपुत्रइति शिष्टप्रवादादनिष्पन्नं नियोगप्रयोजनं मन्यमानाः स्त्रीषु पुत्रोत्पादनं द्वितीयं धर्म्मतो मन्यन्ते ॥ ६१ ॥

विधवायान्नियोगार्थे निर्वृत्ते तु यथाविधि। गुरुवच्च स्नुषावच्च वर्त्तेयातान्परस्परम् ॥ ६२ ॥

विधवायामिति । विधवादिकायान्नियोगप्रयोजने गर्भधारणे यथाशास्त्रं सम्पन्ने सति ज्येष्ठो भ्राता कनिष्ठभ्रातृभार्य्या च परस्परं गुरुवत् स्नुषावच्च व्यवहरेताम् ॥ ६२ ॥

नियुक्तौ यौ विधिं हित्वा वर्त्तेयातान्तु कामतः। तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥६३॥

नियुक्ताविति । ज्येष्ठकनिष्ठभ्रातरौ परस्परभार्य्यायान्नियुक्तौ घृताक्तादिविधानन्त्यक्त्वा स्वेच्छातो वर्त्तेयातान्ता स्नुषागगुरुदारगौ पतितौ भवेतां ॥ ६३ ॥

नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः।
अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनं॥६४॥

एवं नियोगमविधाय दूषयितुमाह नान्यस्मिन्निति। ब्राह्मणादिभिर्विधवा स्त्री भर्त्तुरन्यस्मिन् देवरादौ न नियोजनीया यस्मात् स्त्रियमन्यस्मिन्नियुञ्जानाः ते स्त्रीणामेकपतित्वधर्ममनादिसिद्धं नाशयेयुः ॥ ६४ ॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्त्यते क्वचित्।
न विवाहविधावुक्तं विधवावेदनम्पुनः॥ ६५ ॥

नोद्वाहिकेष्विति। अर्य्यमणं नु देवमित्येवमादिषु विवाहप्रयोजनकेषु मन्त्रेषु क्वचिदपि शाखायान्न नियोगः कथ्यते नच विवाहविधायकशास्त्रेऽन्येन पुरुषेण सह पुनर्व्विवाह उक्तः॥६५॥

अयं द्विजैर्हि विद्वद्भिः पशुधर्म्मो विगर्हितः। मनुष्याणामपि प्रोक्तो वेणे राज्यम्प्रशासति॥ ६६ ॥

अयमिति। यस्मादयं पशुसम्बन्धी मनुष्याणामपि व्यवहारो विद्वद्भिर्न्निन्दितः योयमधार्म्मिके वेणसञ्ज्ञे राज्ञि राज्यं कुर्वाणे

तेन कर्त्तव्यतया प्रोक्तः अतोवेणादारभ्य प्रवृत्तोयमादिमानिति निन्द्यते ॥ ६६ ॥

स महीमखिलाम्भुञ्जन्राजर्षिप्रवरः पुरा। वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः ॥ ६७॥

स महीमिति। स वेणो महीं समग्रां पूर्व्वम्पालयन् अतएव राजर्षिश्रेष्ठो न तु धार्म्मिकत्वात्कामोपहतबुद्धिर्भ्रातृभार्य्यादिगमनरूपं वर्णसङ्करं प्रावर्त्तयत् ॥ ६७ ॥

ततः प्रभृति यो मोहात् प्रमीतपतिकां स्त्रियम्। नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥ ६८ ॥

तत इति। वेणकालात्प्रभृति यो मृतभर्तृकादि स्त्रियं शास्त्रार्थाज्ञानादपत्यनिमित्तं देवरादौ नियोजयति तं साधवो नियतं गर्हयन्ते अयञ्च लोकनियोगनिषेधः कलियुगविषयः तदाह बृहस्पतिः। उक्तो नियोगो मनुना निषिद्धः स्वयमेव तु। युगह्रासादशक्योयं कर्त्तुमन्यैर्व्विधानतः। तपोज्ञानसमायुक्ताः कृतत्रेतायुगे नराः। द्वापरे च कलौ नृणां शक्तिहानिर्हि निर्मिता। अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः। न शक्यन्तेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः। अतो यद्गोविन्दराजेन युगविशेषव्यवस्थामज्ञात्वा सर्व्वदैव सन्तानाभावे नियोगादनियोगपक्षः श्रेयानिति स्वमनीषया कल्पितं तन्मुनिव्याख्याविरोधान्नाद्रिया

महे। प्रायशो मनुवाक्येषु मुनिव्याख्यामहं लिखन्। नापरा ध्योस्मिविदुषां काहं सर्व्वविदः कुधीः॥ ६८॥

यस्याम्रियेत कन्याया वाचा सत्ये कृते पतिः। तामनेन विधानेन निजोविन्देत देवरः॥ ६९ ॥

नियोगप्रकरणत्वात्कन्यागतं विशेषमाह यस्यादृति। यस्याः कन्याया वाग्दाने कृते सति भर्त्ता म्रियते तामनेन वक्ष्यमाणेनानुष्ठानेन भर्त्तुः सोदरभ्राता परिणयेत्॥ ६९॥

यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम्। मिथो भजेताप्रसवात्सकृत्सकृदृतावृतौ॥ ७०॥

यथेति। स देवरो विवाहविधिना एनां स्वीकृत्य शुक्लवस्त्रां कायवाङ्मनःशौचशालिनीमागर्भग्रहणात् रहसि ऋतावृतावेकैकवारङ्गच्छेत्। एवं कन्यायानियोगप्रकारत्वात् विवाहस्यायद्वाच गमनोपदेशाद्यस्मै वाग्दत्ता तस्यैव तदपत्यम्भवति॥ ७०॥

न दत्वा कस्यचित्कन्यां पुनर्दद्याद्विचक्षणः। दत्वा पुनः प्रयच्छन् हि प्राप्नोति पुरुषानृतं॥७१॥

न दत्वेति। कस्मैचिद्वाचा कन्यां दत्वा तस्मिन्मृते दानगुणदोषज्ञस्तामन्यस्मै न दद्यात्। यस्मादेकस्मै दत्वाऽन्यस्मै दद

त्पुरुषानृतं सहस्रं पुरुषानृतमित्युक्तदोषमाप्नोति सप्तपदीकरणस्याजातत्वात् भार्यात्वानिष्पत्तेः पुनर्दानाशङ्कायामिदं वचनम् ॥ ७१ ॥

विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हितां।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥७२॥

विधिवदिति। अद्भिरेव द्विजाग्र्याणामित्येवमादिविधिना प्रतिगृह्यापि कन्यां वैधव्यादिलक्षणोपेतां रोगिणीं क्षतयोनित्वाद्यभिशापवतीमधिकाङ्गादिगोपनच्छद्मोपपादितां सप्तपदीकरणात्प्राक् ज्ञातां त्यजेत्तत्र तत्त्यागे दोषाभाव इत्येतदर्थं नतु त्यागार्थम् ॥ ७२ ॥

यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत्।
तस्य तद्वितथं कुर्य्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥

यस्त्विति। यः पुनर्दोषवतीं कन्यां दोषाननभिधाय ददाति तस्य कन्यादातुर्दुरात्मनो दानं तत्प्रत्यर्पणेन व्यर्थं कुर्य्यात्। एतदपि त्यागे दोषाभावकथनार्थम् ॥ ७३ ॥

विधाय वृत्तिम्भार्य्यायाः प्रवसेत्कार्य्यवान्नरः।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥७४॥

विधायेति। कार्य्ये सति मनुष्यः पत्न्याग्रासाच्छादनादि

प्रकल्प्य देशान्तरङ्गच्छेत्। यस्माद्ग्रासाद्यभावपीडिता स्त्री शीलवत्यपि पुरुषान्तरसम्पर्कम्भजेत्॥ ७४ ॥

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः॥ ७५ ॥

विधायेति। भक्ताच्छादनादि दत्वा पत्यौ देशान्तरङ्गते देहप्रसाधनपरगृहगमनरहिता जीवेत् अदत्वा पुनर्गते सूत्र निर्म्माणादिभिरनिन्दितशिल्पेन जीवेत्॥ ७५ ॥

प्रोषितो धर्म्मकार्य्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः। विद्यार्थं षट् यशोऽर्थं वा कामार्थंत्रींस्तु वत्सरान्॥७६॥

प्रोषितइति। गुर्व्वाज्ञासंप्रादनादिधर्म्मकार्य्यनिमित्तं प्रोषितः पतिरष्टौ वर्षाणि पत्न्या प्रतीक्षणीयः ऊर्द्ध्वं पतिसन्निधिङ्गच्छेत्। तदाह वशिष्ठः। प्रोषितपत्नी अष्टवर्षाण्युपासीत ऊर्द्ध्वं पतिसकाशं गच्छेदिति। विद्यार्थं प्रोषितः षड्वर्षाणि प्रतीक्ष्यः निजविद्यादिविभावनेन यशोर्थमपि प्रोषितः पतिः षडेव भार्य्यान्तरोपभोगाद्यर्थं गतस्त्रीणि वर्षाणि॥ ७६ ॥

संवत्सरम्प्रतीक्षेत द्विषन्तीं योषितम्पतिः। ऊर्द्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत्॥ ७७॥

संवत्सरमिति। पतिविषये सञ्जातद्वेषां स्त्रियं वर्षं यावत्

प्रतीक्षेत ततऊर्द्ध्वमपि द्विषन्तीं स्वदत्तमलङ्कारादिधनं हृत्वा नोपगच्छेत् यासाच्छादनमात्रन्तु देयमेव ॥ ७७ ॥

अतिक्रामेत् प्रमत्तं या मत्तं रोगार्त्तमेव वा। सा त्रीन् मासान् परित्याज्याऽविभूषणपरिच्छदा॥७८॥

अतीति। या स्त्री द्यूतादिप्रमादवन्तं मदजनकपानादिना मत्तं व्याधितं वा शुश्रूषाद्यकरणेनावजानाति सा विगता लङ्कारशय्यादिपरिच्छदा त्रीन्मासान्नोपगन्तव्या ॥ ७८ ॥

उन्मत्तम्पतितं क्लीवमवीजम्पापरोगिणम्। न त्यागोऽस्ति द्विषन्त्याश्च नच दायापवर्त्तनं॥ ७९ ॥

उन्मत्तमिति। वातादिक्षोभादप्रकृतिस्थं पतितमेकादशा ध्याये वक्ष्यमाणं नपुंसकमवीजं वाध्यरेतस्त्वादिना वीजरहितं कुष्ठाद्युपेतञ्च पतिमपरिचरन्त्यास्त्यागोन करणीयोनच धन ग्रहणं करणीयम्॥ ७९ ॥

मद्यपाऽसाधुवृत्ता च प्रतिकूला च या भवेत्। व्याधिता वाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्व्वदा॥८०॥

मद्येति। निषिद्धमद्यपानरता असाध्वाचारा भर्त्तुः प्रति कूलाचरणशीला कुष्ठादिव्याधियुक्ता भृत्यादिताडनशीला

सततमतिव्ययकारिणी या भार्य्या भवेत्साधिवेत्तव्या तस्यां सत्यामन्योविवाहः कार्य्यः ॥ ८० ॥

वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी॥ ८१ ॥

वन्ध्येति। प्रथमऋतुमारभ्याविद्यमानप्रसूता अष्टमे वर्षे ऽधिवेदनीया मृतापत्या दशमे वर्षे स्त्रीजनन्येकादशेऽप्रियवादिनी तु सद्यएव यद्यपुत्रा भवति पुत्रवत्यान्तु तस्यान्धर्म्मप्रजासम्पन्ने दारे नान्यां कुर्व्वीतान्यतरापाये तु कुर्व्वीतेत्यापस्तम्ब निषेधाद्धिवेदनन्न कार्य्यम् ॥ ८१ ॥

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः। सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित् ॥ ८२ ॥

येति। या पुनर्व्याधिता सती पत्युरनुकूला भवति शीलवती च स्यात्तामनुज्ञाप्यान्योविवाहः कार्य्यः कदाचिन्नासौ नावमाननीया ॥ ८२ ॥

अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात्।
सा सद्यः सन्निरोद्धव्या त्याज्या,वा कुलसन्निधौ ॥ ८३॥

अधीति। या पुनः कृताधिवेदना स्त्री कुपिता गृहात्

निर्गच्छति सा तदहरेव रज्ज्वादिना बद्धा स्थापनीया आकोपनिवृत्तेः पित्रादिकुलसन्निधौ वा त्याज्या ॥ ८३ ॥

प्रतिषिद्धापि चेद्या तु मद्यमभ्युदयेष्वपि। प्रेक्षा समाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥ ८४ ॥

प्रतीति। या पुनः क्षत्रियादिस्त्री भर्त्रादिनिवारिता विवाहाद्युत्सवेष्वपि निषिद्धमद्यम्पिबेत् नृत्यादिस्थानजनस मृद्धौ वा गच्छेत् सा सुवर्णकृष्णलानि षट् व्यवहारप्रकरणो क्ताज्ञा दण्डनीया ॥ ८४ ॥

यदि स्वाश्चापराश्चैव विन्देरन् योषितो द्विजाः। तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥ ८५ ॥

यदीति। यदि द्विजातयः स्वजातीयाविजातीयास्वभार्य्या उद्वहेयुस्तदा तासां द्विजातिक्रमेण वाक्सम्मानदायविभा गोत्कर्षार्थं ज्येष्ठत्वम्पूजा च वस्त्रालङ्कारादिदानेन गृहञ्च प्रधानं स्यात् ॥ ८५ ॥

भर्त्तुः शरीरशुश्रूषान्धर्म्मकार्य्यञ्च नैत्यिकम्। स्वा चैव कुर्य्यात्सर्व्वेषां नास्वजातिः कथञ्चन ॥ ८६ ॥

भर्त्तुरिति। भर्त्तुर्देहपरिचर्य्यामन्नदानादिरूपान्धर्म्मका र्य्यञ्च भिक्षादानातिथिपरिवेशनहोमीयद्रव्योपकल्पनादिमात्य

हिकं सर्व्वेषां द्विजातीनां सजातिभार्य्यैव कुर्य्यात् नतु कदाचि द्विजातीयेति ॥ ८६ ॥

यस्तु तत्कारयेन्मोहात्सजात्या स्थितयान्यया।
यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः ॥ ८७ ॥

यस्त्विति। यः पुनः स्वजातीयया सन्निहितया देहशुश्रूषादिकं कर्त्तव्यं विजातीयया मौर्ख्यात् कारयेत् स यथा ब्राह्मण्यां शूद्राज्जातो ब्राह्मणचाण्डालः तथैव पूर्व्वैर्ऋषिभिर्दृष्टइति पूर्व्वानुवादः ॥ ८७ ॥

उत्कृष्टायाभिरूपाय वराय सदृशाय च। अप्राप्तामपि तान्तस्मै कन्यान्दद्याद्यथाविधि ॥ ८८ ॥

उत्कृष्टेति। कुलाचारादिभिरुत्कृष्टाय सुरूपाय समानजातीयाय वरायाप्राप्तकालामपि विवाहयेदष्टवर्षामेवं धर्म्मो न हीयते इति दक्षस्मरणात् तस्मादपि कालात्प्रागपि कन्यां ब्राह्मविवाहविधिना दद्यात् ॥ ८८ ॥

काममामरणात्तिष्ठेद्गृहे कन्यर्त्तुमत्यपि। न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित् ॥ ८९ ॥

काममिति। संजातार्त्तवापि कन्या वरं मरणपर्य्यन्तं पितृ

गृहे तिष्ठेत् न पुनरेनां विद्यागुणरहिताय कदाचित्पित्रादि र्दद्यात् ॥ ८९ ॥

त्रीणि वर्षाण्युदीक्षेत कुमार्य्यृतुमती सती । ऊर्द्धन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९० ॥

त्रीणीति । पित्रादिभिर्गुणवद्वरायादीयमाना कन्या संजा तार्त्तवा सती त्रीणि वर्षाणि प्रतीक्षेत वर्षत्रयात् पुनःऊर्द्धमधि कगुणवरालाभे समानजातिगुणं वरं स्वयं वृणीत ॥ ९० ॥

अदीयमाना भर्त्तारमधिगच्छेद्यदि स्वयम् । नैनः किञ्चिदवाप्नोति न च यं साधिगच्छति ॥ ९१ ॥

अदीयमानेति । पित्रादिभिरदीयमाना कुमारी यथोक्त काले यदि भर्त्तारं स्वयं वृणुते तदा सा न किञ्चित्पापमवा प्नोति न च तत्पतिः पापं प्राप्नोति ॥ ९१ ॥

अलङ्कारं नाददीत पित्र्यं कन्या स्वयम्वरा । मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥ ९२ ॥

अलङ्कारमिति । स्वयंवृतपतिका कन्या वरस्वीकरणात्पूर्व्वं पितृमातृभ्रातृभिर्दत्तमलङ्कारं तेभ्यः समर्पयेत् यदा नार्प येत्तदा चौरी स्यात् ॥ ९२ ॥

पित्रे न दद्याच्छुल्कन्तु कन्यामृतुमतीं हरन्।
स हि स्वाम्यादतिक्रामेदृतूनाम्प्रतिरोधनात्॥९३॥

पित्रे नेति। ऋतुयुक्तां कन्यां वरःपरिणयन् पित्रे शुल्कं न दद्यात्। यस्मात्स पिता ऋतुकार्य्यापत्योत्पत्तिनिरोधात् कन्यायाः स्वामित्वाद्धीयते॥ ९३॥

त्रिंशद्वर्षोवहेत्कन्यां हृद्यां द्वादशवार्षिकीम्।
त्र्यष्टवर्षोऽष्टवर्षाम्वा धर्म्मे सीदति सत्वरः॥ ९४॥

त्रिंशदिति। त्रिंशद्वर्षः पुमान् द्वादशवर्षवयस्कां मनोहारिणीं कन्यामुद्वहेत् चतुर्विंशतिवर्षोवाऽष्टवर्षां गार्हस्थ्यधर्म्मेऽवसादङ्गच्छति त्वरावान् एतच्च योग्यकालप्रदर्शनपरं नतु नियमार्थं प्रायेणैतावता कालेन गृहीतवेदोभवति त्रिभागवयस्का च कन्या वोढुर्यूनोयोग्येति गृहीतवेदश्चापकुर्व्वाणको गृहस्थाश्रमं प्रति न विलम्बेतेति सत्वरइत्यस्यार्थः॥ ९४॥

देवदत्तां पतिर्भार्य्यां विन्दते नेच्छयात्मनः।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्॥९५॥

देवेति। भगोर्य्यमासविता पुरन्ध्रिर्मह्यं वोढर्गार्हपत्याय देवा इत्यादिमन्त्रलिङ्गात् या देवैर्दत्ता भार्य्या तां पतिर्लभते नतु

स्वेच्छया तां सतीं देवानाम्प्रियं कुर्व्वन् ग्रासाच्छादनादिना सदा देषाद्युपेतामपि पोषयेत् ॥ ६५ ॥

प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः ।
तस्मात्साधारणो धर्म्मः श्रुतौ पत्न्या सहोदितः॥६६॥

प्रजनेति । यस्माद्गर्भग्रहणार्थं स्त्रियः सृष्टा गर्भाधानार्थञ्च मनुष्याः तस्माद्गर्भोत्पादनमिवानयोरग्न्याधानादिरपि धर्म्मः पत्न्या सह साधारणः चौमे वसानावग्नीनादधीयातामित्यादि वेदेऽविहितः तस्माद्भार्यां विभृयादिति पूर्व्वोक्तस्य शेषः ॥ ६६ ॥

कन्यायान्दत्तशुल्कायां म्रियेत यदि शुल्कदः ।
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥ ६७ ॥

कन्येति । कन्यायां दत्तशुल्कायां सत्यामसंजातविवाहायां यदि शुल्कदो वरो म्रियते तदा देवराय पित्रादिभिरसौ कन्या दातव्या यदि सा स्वीकरोति यस्याम्रियेतेति प्रागुक्तं नियोगरूपं इदन्तु शुल्कग्रहणविषयम् ॥ ६७ ॥

आददीत न शूद्रोऽपि शुल्कं दुहितरन्ददत् ।
शुल्कं हि गृह्णन् कुरुते छन्नं दुहितृविक्रयं ॥ ६८ ॥

आददीतेति । शास्त्रानभिज्ञः शूद्रोऽपिपुत्रीं ददत् शुल्कं न गृह्णीयात् । किम्पुनः शास्त्रविद्द्विजातिः यस्मात् शुल्कं

गृह्णन् गुप्तं दुहितृविक्रयं कुरुते। न कन्यायाः पितेत्यनेन निषिद्ध मपि शुल्कग्रहणं कन्यायामिति गृहीतशुल्कायां शास्त्रीयनियम दर्शनात् शुल्कग्रहणे शास्त्रीयत्वशङ्कायां पुनस्तन्निषिध्यते॥९८॥

एतत्तु न परे चक्रुर्नापरे जातु साधवः। यद् न्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते॥ ९९ ॥

एतदिति। एतत्पुनः पूर्वे शिष्टा न कदाचित्कृतवन्तोना प्यपरे वर्त्तमानकालीनाः कुर्व्वन्ति यदन्यस्य कन्यामङ्गीकृत्य पुनरन्यस्मै दीयतइति एतच्च गृहीतशुल्ककन्याविषयं नदत्वा कस्यचित्कन्यात्वमिति गृहीतशुल्कविषयम्॥ ९९॥

नानुशुश्रुम जात्वेतत्पूर्व्वेष्वपि हि जन्मसु। शुल्क संज्ञेन मूल्येन छन्नं दुहितृविक्रयम्॥१००॥

नेति। पूर्व्वकल्पेष्वप्येतद्वृत्तमिति कदाचित् वयन्न श्रुत वन्तोयत् शुल्काभिधानेन मूल्येन कश्चित्साधुर्गूढन्दुहितृविक्रय मकार्षीदिति शुल्कनिषेधानुवादः॥ १०० ॥

अन्योन्यस्याव्यभिचारोभवेदामरणान्तिकः। एष धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः॥ १०१ ॥

अन्योन्यस्येति। भार्य्यापत्योर्मरणान्तं यावत् धर्म्मार्थकामेषु

परस्पराव्यभिचारः स्वादित्येषसंक्षेपतः स्त्रीपुंसयोः प्रकृष्टो धर्म्मो ज्ञातव्यः ॥ १०१ ॥

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ। यथानाभिचरेतान्तौ वियुक्तावितरेतरम्॥ १०२॥

तथाच सति तथेति। स्त्रीपुंसौ कृतविवाहौ तथा सदा यत्नं कुर्य्यातां यथा धर्म्मार्थकामविषये वियुक्तौ परस्परन्न व्यभिचरेतां ॥ १०२ ॥

एषस्त्रीपुंसयोरुक्तो धर्म्मो वोरतिसंहितः। आपद्यपत्यप्राप्तिश्च दायभागन्निबोधत॥ १०३॥

एषइति। एषभार्य्यापत्योरन्योन्यानुरागयुक्तो धर्म्मो युष्माकमुक्तः सन्तानाभावे चापत्यप्राप्तिरुक्ता। इदानीं दीयतइति दायः पित्रादिधनं तस्य विभागव्यवस्थां शृणुत ॥ १०२ ॥

ऊर्द्धम्पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः॥ १०४ ॥

ऊर्द्धमिति। भ्रातरोमिलित्वा पितृमरणादूर्द्धं पैतृकं मातृमरणादूर्द्धं मातृकं धनं समं कृत्वा विभजेरन् ज्येष्ठगोचरतयोद्धारस्य वक्ष्यमाणत्वात् समभागोऽयं ज्येष्ठमातरि

उद्धारमनिच्छति बोद्धव्यः पित्रोर्मरणादूर्द्धं विभागेहेतुमाह। यस्मात्ते पुत्रा जीवतोः पित्रोस्तदीयधने स्वामिनो न भवन्ति मातुरपि प्रकृतत्वात्पैतृकमित्यनेन मातृकस्यापि ग्रहणं अयञ्च पितृमरणानन्तरं विभागो जीवतः पितुरिच्छाभावे द्रष्टव्यः। पितुरिच्छया जीवत्यपि तस्मिन्विभागः। तदाह याज्ञवल्क्यः। विभागञ्चेत्पिता कुर्य्यादिच्छया विभजेत्सुतानिति ॥ १०४ ॥

ज्येष्ठएव तु गृह्लीयात् पित्र्यन्धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरन्तथा॥ १०५ ॥

यदा पुनर्ज्येष्ठोधार्म्मिकोभवति तदा ज्येष्ठइति। ज्येष्ठएव पितृसम्बन्धिधनं सर्व्वं गृह्लीयात्कनिष्ठाः पुनर्ज्येष्ठं भक्ताच्छादनाद्यर्थं पितरमिव उपजीवेयुः एवञ्च सर्व्वेषां सहैवावस्थानम्॥१०५॥

ज्येष्ठेन जातमात्रेण पुत्रीभवति मानवः। पितृणामनृणश्चैव स तस्मात्सर्व्वमर्हति ॥ १०६ ॥

ज्येष्ठेनेति। उत्पन्नमात्रेण ज्येष्ठेन संस्काररहितेनापि मनुष्यः पुत्रवान् भवति ततश्च नापुत्रस्य लोकोस्तीति श्रुतेः पुण्यलोकाभावपरिहारोभवति तथा प्रजया पितृभ्यइति श्रुतेः पुत्रेण जातमात्रेण पितृणामनृणश्च भवति अतोज्येष्ठएव सर्व्वं धनमर्हतीति पूर्व्वस्य शेषः॥ १०६ ॥

स

यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते। स एव धर्म्मजः पुत्रः कामजानितरान् विदुः॥ १०७॥

यस्मिन्निति। यस्मिन् जाते ऋणं शोधयति येन जातेना मृतत्वमाप्नोति। तथा च श्रुतिः ऋणमस्मिन्सन्नयत्यमृतत्वञ्च गच्छति। पिता पुत्रस्य जातस्य पश्येच्च जीवतोमुखमिति। स एव पितुर्द्धर्म्मेण हेतुना जातः पुत्रोभवति तेनैकेन एव ऋणापनयनाद्युपकारस्य कृतत्वात्। इतरांस्तु काममात्रहेतुकजन्मनो मुनयोजानन्ति ततश्च स एव सर्व्वन्धनं गृह्णीयादित्ययमेवाभिप्रायोऽपि शेषः॥ १०७॥

पितेव पालयेत् पुत्रान् ज्येष्ठो भ्रातॄन् यवीयसः। पुत्रवच्चापि वर्त्तेरन् ज्येष्ठे भ्रातरि धर्मतः॥ १०८॥

पितेवेति। ज्येष्ठोभ्राता विभागाभावे अनुजान् भ्रातॄन् भक्ताच्छादनादिभिः पितेव विभृयात् अनुजाश्च भ्रातरः पुत्रा इव ज्येष्ठे भ्रातरि धर्म्माय वर्त्तेरन्॥ १०८॥

ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः। ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥ १०९॥

ज्येष्ठइति। अकृतविभागोज्येष्ठो यदि धार्म्मिकोभवति तदा नुजानामपि तदनुयायित्वेन धार्म्मिकत्वात् ज्येष्ठः कुलंवृद्धिन

भति यद्यधार्म्मिकोभवति तदाऽनुजानामपि तदनुयायित्वात् ज्येष्ठः कुलन्नाशयति तथा गुणवान् ज्येष्ठो लोके पूज्यतमः साधुभिश्चागर्हितोभवति ॥ १०९ ॥

योऽज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः।
अज्येष्ठवृत्तिर्यस्तु स्यात्स सम्पूज्यस्तु बन्धुवत्॥ ११०॥

योज्येष्ठइति। योज्येष्ठोऽनुजेषु भ्रातृषु पितृवद्वर्त्तेत स पितेव मातेवाऽगर्हणीयोभवति यः पुनस्तथा न वर्त्तेत स मातुलादिबन्धुवदर्चनीयः॥ ११०॥

एवं सहवसेयुर्व्वा पृथग्वाधर्म्मकाम्यया। पृथग्विवर्द्धते धर्म्मस्तस्माद्धर्म्या पृथक्क्रिया॥ १११॥

एवमिति। एवमविभक्ताभ्रातरः सह संवसेयुः यदि वा धर्म्मकामनया कृतविभागाः पृथग्वसेयुः यस्मात्पृथगवस्थाने सति पृथक् पृथक् पञ्चमहायज्ञाद्यनुष्ठानाद्धर्म्मस्तेषां वर्द्धते तस्माद्विभागक्रिया धर्म्मार्था। तथाच वृहस्पतिः। एकपाकेन वसताम्पितृदेवद्विजार्चनम्। एकम्भवेद्विभक्तानान्तदेव स्याद्गृहे गृहे॥ १११॥

ज्येष्ठस्य विंश उद्धारः सर्व्वद्रव्याच्च यद्वरम्। ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥ ११२॥

ज्येष्ठस्येति। उद्ध्रियत इत्युद्धारः ज्येष्ठस्याविभक्तसाधारण धनादुद्धृत्य विंशतितमोभागः सर्व्वद्रव्येभ्यश्च यत् श्रेष्ठन्तद्दातव्यम्। मध्यमस्य चत्वारिंशत्तमोभागोदेयः कनिष्ठस्य पुनरशीतितमोभागोदातव्यः अवशिष्टन्धनं समं कृत्वा विभजनीयम्। ॥ ११२॥

ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम्। येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमन्धनं॥११३॥

ज्येष्ठस्येति। ज्येष्ठकनिष्ठौ पूर्व्वश्लोके यथोक्तमुद्धारं गृह्णीयातां ज्येष्ठकनिष्ठव्यतिरिक्ताये मध्यमास्तेषामवान्तरज्येष्ठकनिष्ठतामनपेक्ष्य मध्यमस्योक्तचत्वारिंशद्भागः प्रत्येकन्दातव्यः मध्यमानामवान्तरज्येष्ठकनिष्ठतयाभागे वैषम्यवारणार्थमिदम् ॥ ११३॥

सर्व्वेषान्धनजातानामाददीताग्र्यमग्रजः। यच्च सातिशयं किञ्चिद्दशतश्चाप्नुयाद्वरम्॥ ११४॥

सर्व्वेषामिति। सर्व्वेषान्धनप्रकाराणां मध्यात् यत् श्रेष्ठन्धनं ज्येष्ठस्तद्धनं गृह्णीयात् सर्व्वद्रव्याच्च यद्वरमित्युक्तमनूदितं समु

चयबोधनाय यद्येकमपि प्रकृष्टं द्रव्यं विद्यते तदपि ज्येष्ठ एव गृह्णीयात्तथा दशतः पशूनामिति गोतमस्मरणात्। दशभ्यो गवादिपशुभ्य एवैकं श्रेष्ठं ज्येष्ठो लभते इदञ्च यदि ज्येष्ठो गुणवानितरे निर्गुणास्तद्विषयं॥ ११४॥

उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्म्मसु।
यत्किञ्चिदेव देयन्तु ज्यायसे मानवर्द्धनं॥ ११५॥

सर्व्वेषां समगुणत्वे तु उद्धार इति। दशतः प्राप्नुयाद्वरमिति योयमुद्धार उक्तः सोयमध्ययनादिकर्म्मसम्पन्नानां भ्रातॄणां ज्येष्ठस्य नास्ति तथापि यत्किञ्चिदल्पमपि द्रव्यं पूजावृद्धिकरञ्ज्येष्ठाय देयं एवञ्च समगुणेषूद्धारप्रतिषेधदर्शनात्पूर्व्वञ्च गुणोत्कर्षापेक्षयोद्धारवैषम्यं बोद्धव्यम्॥ ११५॥

एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत्।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना॥ ११६॥

एवमिति। एवमुक्तप्रकारेण समुद्धृतविंशद्भागादिके धने समान् भागान् भ्रातॄणां कल्पयेत्। विंशतितमभागादौ पुनरनुद्धृतद्रव्ये वक्ष्यमाणभागकल्पना भवेत्॥ ११६॥

एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धन्ततोऽनुजः ।
अंशमंशं यवीयांसइति धर्म्मोव्यवस्थितः ॥ ११७ ॥

एकेति । एकाधिकमंशं द्वावंशाविति यावत् ज्येष्ठपुत्रोगृह्णीयात् । अधिकमर्द्धं यत्रांशे सार्द्धमंशं ज्येष्ठादनन्तरजातोगृह्णीयात्कनिष्ठाः पुनरेकैकमंशं गृह्णीयुरिति व्यवस्थितोधर्म्मः इदन्तु ज्येष्ठतदनुजयोर्व्विद्यादिगुणवत्त्वापेक्षया कनिष्ठानाञ्च निर्गुणत्वे वोद्धव्यं ज्येष्ठतदनुजयोरधिकदानदर्शनात् ॥ ११७ ॥

स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागम्पतिताः स्युरदित्सवः ॥ ११८ ॥

स्वेभ्यइति । ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारोभ्रातरः स्वजात्यपेक्षया स्वेभ्यश्चतुरोंशान् हरेद्विप्रइत्यादिना वक्ष्यमाणेभ्योभागेभ्य आत्मीयादात्मीयाद्भागाच्चतुर्थभागम्पृथक्पृथक् कन्याभ्योऽनूढाभ्योभगिनीभ्यः या यस्य सोदर्य्याभगिनी तस्या एव संस्कारार्थमित्येवन्दद्युः सोदर्य्याभावे विमातृजैरुत्कृष्टैरपकृष्टैरपि संस्कार्य्याएव तथाच याज्ञवल्क्यः । असंस्कृतास्तु संस्कार्य्याभ्रातृभिः पूर्व्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम् । यदि भगिनीसंस्कारार्थञ्चतुर्भागन्दातुन्नेच्छन्ति तदा पतिताभवेयुः एतेनैकजातीयवैमात्रेयवऊपुत्र

भगिनीसद्भावेपि सोदर्य्यभगिनीभ्यश्चतुर्थभागदानमवगन्तव्यम् ॥ ११८ ॥

अजाविकं सैकशफन्नजातु विषमम्भजेत्। अजाविकन्तु विषमं ज्येष्ठस्यैव विधीयते ॥ ११९ ॥

अजेति। एकशफा अश्वादयः छागमेषादि एकशफसहितं विभागकाले समं कृत्वा विभक्तुमशक्यन्तन्न विभजेत्किन्तु ज्येष्ठस्यैव तत्स्यात् नतु तत्तुल्यद्रव्यान्तरदानेन समीकृत्य विक्रीय वा तन्मूल्यं विभजेत्। अजाविकमिति पशुद्वन्द्वादिभाषयैकवद्भावः ॥ ११९ ॥

यवीयान् ज्येष्ठभार्य्यायाम्पुत्रमुत्पादयेद्यदि। समस्तत्र विभागः स्यादिति धर्म्मोव्यवस्थितः ॥१२०

यवीयानिति। कनिष्ठोयदि ज्येष्ठभ्रातृभार्य्यायान्नियोगेन पुत्रञ्जनयेत्तदा तेन पितृव्येण सह तस्य क्षेत्रजस्य समोविभागः स्यान्नतु पितृवत्सोद्धारोभवति इतिभागव्यवस्था नियता अनियोगोत्पन्नस्यानंशित्वं वक्ष्यति यद्यपि समेत्य भ्रातरः सममित्युक्तन्तथाप्यस्मादेव लिङ्गात्पौत्रस्यापि मृतपितृकस्य पैतामहधने पितृवद्विभागोऽस्तीति गम्यते ॥ १२० ॥

उपसर्ज्जनम्प्रधानस्य धर्म्मतो नोपपद्यते । पिता प्रधानम्प्रजने तस्माद्धर्म्मेण तम्भजेत् ॥ १२१ ॥

उपेति । ज्येष्ठभ्रातुः क्षेत्रजः पुत्रोपि पितेव सोद्धार विभागी युक्तइतीमां शङ्कां निराकृत्य पूर्व्वोक्तमेव द्रढयति अप्र धानं क्षेत्रजः पुत्रः प्रधानस्य क्षेत्रिणः पितुर्द्धर्म्मेण सोद्धारविभाग ग्रहणरूपेण न सम्बध्यते क्षेत्र्यपि पिता क्षेत्रद्वारेणापत्योत्पादने प्रधानं स्यात्तस्मात्पूर्व्वोक्तेनैव धर्म्मेण विभागव्यवस्थारूपेण पितृ व्येण सह तंक्षेत्रजं विभजेदिति पूर्व्वस्यैव शेषः ॥ १२१ ॥

पुत्रः कनिष्ठोज्येष्ठायां कनिष्ठायाञ्च पर्व्वजः । कथन्तत्र विभागः स्यादितिचेत्संशयोभवेत् ॥ १२२ ॥

पुत्रइति । यदि प्रथमोढायां कनीयान् पुत्रोजातः पश्चादू ढायाञ्च ज्येष्ठस्तदा तत्र कथं विभागोभवेदिति संशयो यदि स्यात्किं मातुरुद्वाहक्रमेण पुत्रस्य ज्येष्ठत्वमुत स्वजन्मक्रमे णेति तदा ॥ १२२ ॥

एकं वृषभमुद्धारं संहरेत स पूर्व्वजः । ततोऽप रेऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥ १२३ ॥

एकमिति । पूर्व्वस्यां जातः पूर्व्वजः स्थापोः संज्ञाछन्दसोर्ब्ब हुलमिति ह्रस्वत्वं यः कनिष्ठोप्येकं वृषभमुद्धारं गृह्णीयात्ततः

श्रेष्ठवृषभादन्ये ये सन्त्यश्रेष्ठवृषभाः ते तस्माज्ज्यैष्ठिनेयात् मातृजनानां कनिष्ठिनेयानां प्रत्येकं एकैकशोभवन्तीति तुद्वाहक्रमेण ज्यैष्ठ्यं ॥ १२३ ॥

ज्येष्ठस्तु जातोज्येष्ठायां हरेद्वृषभषोडशाः। ततः स्वमातृतः शेषाभजेरन्निति धारणा ॥ १२४ ॥

ज्येष्ठइति। प्रथमोढायाम्पुनर्योजातोजन्मना च भ्रातृभ्यो ज्येष्टः स वृषभः षोडशोयासां गवान्ताग्गृह्णीयात् पञ्चदशगा एकं वृषभमित्यर्थः ततोऽनन्तरं येऽन्ये वह्वीभ्योमातृभ्यो जातास्ते स्वमातृगतोद्वाहज्येष्ठतापेक्षया शेषागाविभजेरन्निति निश्चयः ॥ १२४ ॥

सदृशस्त्रीषु जातानां पुत्राणामविशेषतः। न मातृतोजैष्ठ्यमस्ति जन्मतोजैष्ठ्यमुच्यते ॥ १२५ ॥

सदृशेति। समानजातीयस्त्रीषु जातानां पुत्राणां जातिगत विशेषाभावे सति न मातृक्रमेण जैष्ठ्यमृषिभिरुच्यते किन्तुजन्म क्रमेणैवातः कनिष्ठाजोपि पूर्वोक्तमेव विंशभागद्व्यंशादिकं गृह्णीयात् एवञ्च मातृज्यैष्ठस्य विहितप्रतिषिद्धत्वात् षोडशी ग्रहणाग्रहणवद्विकल्पः सच गुणवन्निर्गुणतया भ्रातृणां गुरु

लघुत्वावगमाद्व्यवस्थितः। अतएव जन्मविद्यागुणज्येष्ठोद्व्यंशं दायादवाप्नुयात् इति वृहस्पत्यादिभिर्जन्मज्येष्ठस्य विद्या द्युत्कर्षेणोद्धारोत्कर्ष उक्तः। एवञ्च निर्गुणस्यैकवृषभमिति मन्दगुणस्य वृषभषोडशादिति मातृज्यैष्ठ्याश्रयणेन उद्धारो बोद्धव्यः। मातृज्यैष्ठ्यविधिन्त्वर्थवादं मेधातिथिर्वदन्। न सम्यगाह गोविन्दराजस्त्वन्यमतं जगौ॥ १२५॥

**जन्मज्येष्ठेन चाह्वानं सुब्राह्मण्यास्वपि स्मृतम्।**
**यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता॥ १२६॥**

न केवलं विभागे जन्मज्यैष्ठ्यं किन्तु जन्मेति। सुब्राह्मण्याख्यो मन्त्रो ज्योतिष्टोमे इन्द्रस्याह्वानार्थं प्रयुज्यते तत्र प्रथम पुत्रेण पितरमुद्दिश्याह्वानं क्रियते अमुकस्य पिता यजते इत्येव मृषिभिः स्मृतं तथा यमयोर्गर्भ एककालं निषिक्तयोरपि जन्मक्रमेणैव ज्येष्ठता स्मृता गर्भेष्विति बहुवचनं स्त्रीबहुत्वापेक्षया॥ १२६॥

**अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।**
**यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्॥ १२७॥**

अपुत्र इति। अविद्यमानपुत्रो यदस्यामपत्यं जायेत तन्मम श्राद्धाद्यौर्द्ध्वदेहिककरं स्यादिति कन्यादानकाले जामात्रा सह सम्मतिपत्तिरूपेण विधानेन दुहितरं पुत्रिकां कुर्य्यात्॥ १२७॥

अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाः।
विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः॥१२८॥

अत्र परकृतिरूपमर्थवादमाह अनेनेति। दक्षः प्रजापतिः पुत्रोत्पादनविधिज्ञः स्ववंशवृद्ध्यर्थमनेनोक्तविधानेन कृत्स्नादुहितॄः पूर्वं पुत्रिकाः स्वयं कृतवान् कार्त्स्न्ये अथ शब्दः॥१२८॥

ददौ स दश धर्म्माय कश्यपाय त्रयोदश। सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम्॥१२९॥

ददाविति। स दक्षो भाविपुत्रिकापुत्रलाभेन प्रीतात्मा अलङ्कारादिना सत्कृत्य दश पुत्रिका धर्म्माय त्रयोदश कश्यपाय सप्तविंशतिञ्चन्द्राय द्विजानामोषधीनाञ्च राज्ञे दत्तवान् सत्कारवचनमन्येषामपि पुत्रिकाकरणे सत्कारे लिङ्गं दशेत्यादि च बह्वीनामपि पुत्रिकाकरणज्ञापकम्॥१२९॥

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा। तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥१३०॥

यथैवेति। आत्मस्थानीयः पुत्रः आत्मा वै पुत्रनामासीति मन्त्रलिङ्गात् तत्समा च दुहिता तस्या अप्यङ्गेभ्य उत्पादात्। अत

स्वस्यां पुत्रिकायां पितुरात्मस्वरूपायां विद्यमानायामपुत्रस्य मृतस्य पितुर्द्धनं पुत्रिकाव्यतिरिक्तः कथमन्यो हरेत् ॥ १३० ॥

मातुस्तु यौतकं यत्स्यात्कुमारीभागएव सः। दौहित्रएव च हरेदपुत्रस्याखिलन्धनम् ॥ १३१ ॥

मातुरिति। मातुर्यद्धनं तत्तस्यां मृतायां कुमारीभाग एव स्यात् न पुत्राणां तत्र भागः। कुमारी चानूढाभिप्रेता तथाच गौतमः। स्त्रीधनं दुहितॄणामदत्तानामप्रतिष्ठितानाञ्च। अपुत्रस्य च मातामहस्य मृतस्य दौहित्रएव प्रकृतत्वात्पौत्रिकेयः समग्रन्धनं गृह्णीयात् ॥ १३१ ॥

दौहित्रोह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्। स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥ १३२ ॥

दौहित्रइति। दौहित्रः प्रकृतत्वात्पौत्रिकेयएव तस्य मातामहधनग्रहणं अनन्तरोक्तजनकधनग्रहणपिण्डदानार्थोयमारम्भः पितृशब्दस्य तत्रैव प्रसिद्धत्वात् अन्यस्य पौत्रिकेयः पुत्रान्तररहितस्य जनकस्य समग्रन्धनं गृह्णीयात् सएव पितृमातामहाभ्यां द्वौ पिण्डौ दद्यात् पिण्डदानं श्राद्धोपलक्षणार्थं पौत्रिकेयत्वेन जनकधनग्रहणपिण्डदानव्यामोहनिरासार्थं वचनम् ॥ १३२ ॥

पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥१३३॥

पौत्रेति। पौत्रपौत्रिकेययोर्लोके धर्मकृत्ये च न कश्चिद्विशे
षोऽस्ति यस्मात्तयोर्मातापितरौ तस्य देहादुत्पन्नाविति पूर्वस्ये
वानुवादः ॥ १३३ ॥

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते। सम
स्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः॥१३४॥

पुत्रिकायामिति। कृतायाम्पुत्रिकायां यदि तत्कर्त्तुः पुत्रो
ऽनन्तरं जायते तदा तयोर्विभागकाले समोविभागोभवेत्
नोद्धारः पुत्रिकायै देयः यस्माज्ज्येष्ठायाअपि तस्याउद्धार
विषये ज्येष्ठता नादरणीया ॥ १३४ ॥

अपुत्रायां मृतायान्तु पुत्रिकायां कथञ्चन।
धनन्तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन्॥ १३५ ॥

अपुत्रेति। अपुत्रायाम्पुत्रिकायां कथञ्चन मृतायां तदी
यधनं तद्भर्त्तैवाविचारयन् गृह्णीयात्पुत्रिकायाः पुत्रसमत्वेनान
पत्यस्य पत्नीरहितस्य मृतपुत्रस्य पितुर्धनग्रहणप्रसक्तौ तन्नि
वारणार्थमिदं वचनम्॥ १३५ ॥

अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम्॥१३६॥

अकृतेति। अकृता वा कृतावेति पुत्रिकाया एव द्वैविध्यं तत्र यदपत्यं भवेदस्यान्तन्मम स्यात्स्वधाकरमित्यभिधाय कन्या दानकाले वरानुमत्या या क्रियते सा कृता अभिसन्धिमात्र कृता वाक्यंव्यवहारेण न कृता। तथाच गौतमः अभिसन्धि मात्रात्पुत्रिकेत्येकेषामिति अतएव पुत्रिकाधर्मशङ्कयेति प्राग विवाह्यत्वमुक्तम्। पुत्रिकैव कृता अकृता वा यं पुत्रं समानजाती यादोढुरुत्पादयेत्तेन दौहित्रेण पौत्रकार्य्यकरणात्पौत्रिकेयवा न्मातामहः पौत्री तयाचासौ तस्मै पिण्डं दद्यात्। गोविन्दराज स्त्वकृता वेत्यपुत्रिकैव दुहिता तत्पुत्रोपि मातामहधने पौत्रि केयइव मातामह्यादिसत्त्वेप्यधिकारीत्याह तन्न पुत्रिकाया एव पुत्रतुल्यत्वेन अपुत्रिकातत्पुत्रयोस्तुल्यत्वायोगादिति ॥१३६॥

पुत्रेण लोकान् जयति पौत्रेणानन्त्यमस्नुते।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम्॥१३७॥

पुत्रेणेति। पुत्रेण जातेन स्वर्गादिलोकान् प्राप्नोति पौत्रेण तेष्वेव चिरकालमवतिष्ठते तदनन्तरं पुत्रस्य पौत्रेणादित्यलो कम्प्राप्नोति अस्य च दायभागप्रकरणे अभिधानं पितुर्द्धने

पत्न्यादिसद्भावेऽपि पुत्रस्य तदभावे पौत्रस्य इत्येवं पुंस्त्वा नाधिकारबोधनार्थम् ॥ १३७ ॥

पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः। तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा ॥ १३८ ॥

पुन्नाम्न इति। यस्मात्पुन्नामधेयनरकात्सुतः पितरन्त्रायते तस्मात् त्राणात् आत्मनैव ब्रह्मणा पुत्र इति प्रोक्तः तस्मान्महोपकारकत्वात्पुत्रस्य युक्तं तदीयपुंस्त्वानस्य दायभागित्वमिति पूर्व्वदार्ढ्यार्थमिदम् ॥ १३८ ॥

पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते। दौहित्रोऽपि ह्यमुत्रैनं सन्तारयति पौत्रवत् ॥ १३९ ॥

पौत्रेति। दौहित्रः पुत्रिकापुत्रः पौत्रदौहित्रयोर्लोके कश्चिद्विशेषो न सम्भाव्यते यस्माद्दौहित्रोऽपि मातामहं परलोके निस्तारयति एतच्च पौत्रिकेयस्य पौत्रेण साम्यप्रतिपादनं पुत्रिकाकरणानन्तरजातपौत्रेण सह धने तुल्यभागबोधनार्थं ॥ १३९ ॥

मातुः प्रथमतः पिण्डं निर्व्वपेत्पुत्रिकासुतः। द्वितीयन्तु पितुस्तस्यास्तृतीयन्तत्पितुः पितुः ॥ १४० ॥

मातुरित्यादि। पौत्रिकेयः प्रथमं मात्रे पिण्डं द्वितीयं मातुः पित्रे तृतीयं मातुः पितामहाय दद्यात्। पित्रादीनान्तु पित्रे मातामहाय चेत्युक्तत्वात्पितृक्रमेणैव पिण्डदानम् ॥ १४० ॥

उपपन्नोगुणैः सर्व्वैः पुत्रो यस्य तु दत्त्रिमः। स हरेतैव तद्रिक्थं सम्प्राप्तोप्यन्यगोत्रतः॥ १४१॥

उपपन्नइति। पुत्राऋक्थहराः पितुरिति द्वादशपुत्राणामेव ऋक्थहरत्वं वच्यति दशापरे तु क्रमशइति औरसक्षेत्रजाभावे दत्तकस्य पितुर्ऋक्थहरत्वं प्राप्तमेव अतः सत्यप्यौरसपुत्रे दत्तकस्य सर्व्वगुणोपपन्नस्य पितृऋक्थभागप्राप्त्यर्थमिदं वचनं यस्य दत्तकः पुत्रोऽध्ययनादिसर्व्वगुणोपपन्नोभवति सोऽन्यगोत्रादागतोपि सत्यप्यौरसे पितृरिक्थभागं गृह्णीयात्। अत्र एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुरिति औरसस्य सर्व्वोत्कर्षाभिधानात्तेन नास्य समभागित्वं किन्तु क्षेत्रजोक्तषष्ठभागित्वमेवास्य न्याय्यं। गोविन्दराजस्तु औरसक्षेत्रजाभावे सर्व्वगुणोपपन्नस्यैव दत्तकस्य पितृऋक्थभागित्वार्थमिदं वचनमित्यवोचत्तन्न कृत्रिमादीनान्निर्गुणानामपि पितृऋक्थभागित्वन्दत्तकस्य तु तत्पूर्व्वपठितस्यापि सर्व्वगुणोपपन्नस्यैव न निर्गुणस्येत्यन्याय्यत्वात्॥ १४१॥

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्वचित्। गोत्रऋक्थानुगः पिण्डो व्यपैति ददतः स्वधा॥ १४२॥

गोत्रेति। गोत्रधने जनकसम्बन्धिनी दत्तको न कदाचि

त्माप्नुयात्। पिण्डस्य गोत्ररिक्थानुगामी यस्य गोत्ररिक्थे भजते तस्यैव सपिण्डो दीयते तस्मात्पुत्रं ददतो जनकस्य स्वधा पिण्डश्राद्धादि तत्पुत्रकर्तृकन्निवर्त्तते ॥ १४२ ॥

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात्।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥१४३॥

अनियुक्तेति। योगुर्व्वादिनियोगं विना जातो यश्च सपुत्रायां नियोगेनापि देवरादेः कामादुत्पादितस्तावुभौ क्रमेण जारोत्पन्नकामाभिलाषजौ धनभागं नार्हतः ॥ १४३ ॥

नियुक्तायामपि पुमान्नार्य्यां जातोऽविधानतः।
नैवार्हः पैतृकं रिक्थम्पतितोत्पादितो हि सः॥१४४॥

नियुक्तायामिति। नियुक्तायामपि स्त्रियां घृताभ्यक्तत्वादि नियोगेतिकर्त्तव्यतां विना पुत्रोजातः स क्षेत्रिकस्य पितुर्द्धनं लब्धुं नार्हति यस्मादसौ पतितेनोत्पादितः नियुक्तौ यौ विधिं हित्वेत्यनेन पतितस्योक्तत्वात् ॥ १४४ ॥

हरेत्तत्र नियुक्तायां जातः पुत्रोयथौरसः। क्षेत्रिकस्य तु तद्बीजं धर्म्मतः प्रसवश्च सः ॥ १४५ ॥

हरेदिति। तत्र नियुक्तायां योजातः क्षेत्रजः पुत्रऔरस

इव धनं हरत् यस्माद्यत्तस्य कारणभूतं वीजन्तत्क्षेत्रस्वामिन एव तत्कार्य्यकरणत्वात्। अपत्यमपि धर्म्मतस्तदर्थमेव। यवीयान् ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद्यदीत्यनेन क्षेत्रजस्य पितामह धने पितृव्येन सह समभागस्य प्रोक्तत्वात्। गुणवतः क्षेत्र जस्य औरसवत्सोद्धारभागप्राप्त्यर्थमिदं औरसतुल्यत्वाविधानं ॥ १४५ ॥

धनं योविभयाद्भ्रातुर्म्मृतस्य स्त्रियमेव च। सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥ १४६ ॥

धनमिति। योमृतस्य भ्रातुः स्थावरजङ्गमन्धनं पत्न्या रक्षणाक्षमया समर्पितं रक्षेत् ताञ्च पुष्णीयात् स नियोग धर्म्मेण तस्यां भ्रातुरपत्यमुत्पाद्य तस्यापत्यस्य दद्यात् एतच्च धनं योविभृयात् भ्रातुरित्यभिधानात् विभक्तभ्रातृविषयं यवीयान् ज्येष्ठभार्य्यायामिति तु अविभक्तविषयं समभागाभि धानात् ॥ १४६ ॥

या नियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयात्। तं कामजमरिक्थीयं वृथोत्पन्नं प्रचक्षते ॥ १४७ ॥

येति। या स्त्री गुर्व्वादिभिरनुज्ञाता देवराद्वाऽन्यतोवा सपिण्डात्पुत्रमुत्पादयेत् स यदि कामजो भवति तदा तम रिक्थभाजं मन्वादयोवदन्ति अकामजएव रिक्थभागी सच

व्याहृतोनारदेन। मुखात् मुखम्परिहरन् गात्रैर्गात्राण्यसंस्पृशन्। कुले तदवशेषे च सन्तानार्थं न कामतइति॥१४७॥

एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु। बह्वीषु चैकजातानां नानास्त्रीषु निबोधत॥१४८॥

एतदिति॥ समानजातीयासु भार्य्यासु एकेन भर्त्रा जातानामेष विभागविधिर्बोद्धव्यः। इदानीं नानाजातीयासु स्त्रीषु बह्वीषु उत्पन्नानां पुत्राणां विभागं शृणुत॥१४८॥

ब्राह्मणस्यानुपूर्व्वेण चतस्रस्तु यदि स्त्रियः। तासां पुत्रेषु जातेषु विभागेऽयं विधिः स्मृतः॥१४९॥

ब्राह्मणस्येति। ब्राह्मणस्य यदि क्रमेण ब्राह्मण्याद्यास्चतस्रो भार्य्या भवेयुः तदा तासां पुत्रेषूत्पन्नेषु अयं वक्ष्यमाणोविभागविधिर्म्मन्वादिभिरुक्तः॥१४९॥

कीनाशोगोवृषोयानमलङ्कारश्च वेश्म च। विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः॥१५०॥

कीनाशइति। कीनाशः कर्षकः गवां सेक्ता वृषोयानमश्वादि अलङ्कारो अङ्गुरीयकादिः वेश्म गृहञ्च प्रधानं यावन्तश्चांशा

शेष्वेकः प्रधानभूतोंशइत्येतद्ब्राह्मणीपुत्रस्योद्धारार्थं देयं अवशिष्टं वक्ष्यमाणरीत्या विभजनीयम् ॥ १५० ॥

त्र्यंशंदायाद्धरेद्विप्रोद्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्द्धमेवांशमंशं शूद्रासुतोहरेत् ॥ १५१ ॥

त्र्यंशमित्यादि । त्रीनंशान् ब्राह्मणीपुत्रोधनाद्गृह्णीयात् द्वा क्षत्रियापुत्रः सार्द्धं वैश्यापुत्रः अंशं शूद्रासुतः एवञ्च यत्र ब्राह्मणीक्षत्रियापुत्रौ द्वावेव विद्येते तत्र पञ्चधाकृते धने त्रयो भागाब्राह्मणस्य द्वौ क्षत्रियापुत्रस्य अनयैव दिशा ब्राह्मणी वैश्यापुत्रादौ द्विवर्ड़पुत्रादौ च कल्पना कार्य्या ॥ १५१ ॥

सर्व्वम्वा रिक्थजातन्तु दशधा परिकल्प्य च ।
धर्म्यं विभागं कुर्व्वीत विधिनानेन धर्म्मवित् ॥ १५२ ॥

सर्व्वमिति । यद्वा सर्व्वंरिक्थप्रकारमनुद्धृतोद्धारं दशधा कृत्वा विभागधर्म्मज्ञोधर्म्मादनपेतं विभागं अनेन वक्ष्यमाण विधिना कुर्व्वीत ॥ १५२ ॥

चतुरोंशान्हरेद्विप्रः स्त्रीनंशान् क्षत्रियासुतः ।
वैश्यापुत्रोहरेद्व्यंशमंशं शूद्रासुतोहरेत् ॥ १५३ ॥

चतुरइति । चतुरोभागान् ब्राह्मणो गृह्णीयात् त्रीन्

क्षत्रियापुत्त्रोद्दौ वैश्यापुत्त्रः एकं शूद्राजः अत्रापि ब्राह्मणी क्षत्रियापुत्त्रसद्भावे सप्तधा कृते धने चत्वारोभागाब्राह्मणस्य त्रयः क्षत्रियापुत्त्रस्य एवं ब्राह्मणीवैश्यापुत्त्रादौ द्विवक्रपुत्त्रेषु च कल्पना कार्य्या॥ १५३॥

यद्यपि स्यात्तु सत्पुत्त्रोप्यसत्पुत्त्रोपि वा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्त्राय धर्म्मतः॥ १५४॥

यद्यपीति। यदि ब्राह्मणे द्विजातिस्त्रीषु सर्व्वासु विद्यमान पुत्त्रः स्यात् अविद्यमानपुत्त्रोवा तथापि शूद्रापुत्त्रायानन्तराधिकारी यस्तेषु दशमभागादधिकं धर्म्मतोन दद्यात्। एवञ्च शूद्रापुत्त्रविषये निषेधादविद्यमानसजातिपुत्त्रस्य क्षत्रियावैश्यापुत्त्रौ सर्व्वस्वरिक्थहरौ स्यातां॥ १५४॥

ब्राह्मणक्षत्रियविशां शूद्रापुत्त्रोन रिक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनम्भवेत्॥ १५५॥

ब्राह्मणेति। ब्राह्मणक्षत्रियवैश्यानां शूद्रापुत्त्रोधनभाक् न भवति किन्तु यदेवधनमस्मै पिता दद्यात्तदेव तस्य भवेत् एवञ्च पूर्व्वोक्तविभागनिषेधात् विकल्पः स च गुणवदगुणापेक्षः अथवा अनूढशूद्रापुत्त्रविषयोयन्दशमभागनिषेधः॥ १५५॥

समवर्णासु ये जाताः सर्व्वे पुत्राद्विजन्मनाम्।
उद्धारं ज्यायसे दत्वा भजेरन्नितरे समम् ॥ १५६ ॥

समवर्णास्विति। द्विजातीनां समानजातिभार्य्यासु ये पुत्राजाता स्ते सर्व्वे ज्येष्ठायोद्धारन्दत्वा अवशिष्टं समभागं कृत्वा ज्येष्ठेन सहान्ये विभजेरन्॥ १५६॥

शूद्रस्य तु सवर्णैव नान्या भार्य्या विधीयते। तस्या
ञ्जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्॥ १५७॥

शूद्रस्येति। शूद्रस्य पुनः समानजातीयैव भार्य्योपदिश्यते नोत्कृष्टा अपकृष्टा वा तस्याञ्च ये जातास्ते यदि पुत्रशतमपि तदा समभागाएव भवेयुः तेनोद्धारः कस्यचिन्न देयः॥१५७॥

पुत्रान् द्वादश यानाह नृणां स्वायम्भुवोमनुः।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः॥१५८॥

पुत्रानिति। यान् द्वादश पुत्रान् हैरण्यगर्भोमनुराह तेषां मध्यादाद्याः षड्बान्धवाः गोत्रदायादाश्च तस्माद्बान्धवत्वेन सपिण्डसमानोदकानां पिण्डोदकदानादि कुर्व्वन्त्यनन्तरा भावे च गोत्रदायं गृह्णन्ति पितृऋक्थभाक्तस्य पुत्राऋक्थहराः

पितुरिति द्वादशविधपुत्राणामेव वक्ष्यमाणत्वात्। उत्तरे षट् न गोत्रधनहराभवन्ति बान्धवास्तु भवन्ति ततश्च बन्धुकार्य्य मुदकक्रियादि कुर्व्वन्ति। मेधातिथिस्तु षडदायादबान्धवा इत्युत्तरषट्कस्यादायादत्वमबान्धवत्वञ्चाह तन्न बौधायनेन बन्धुत्वस्याभिहितत्वात् तदाह। कानीनश्च सहोढश्च क्रीतं पौनर्भवन्तथा। स्वयन्दत्तन्निषादश्च गोत्रभाजः प्रचक्षते ॥ १५८ ॥

औरसः क्षेत्रजश्चैव दत्तः कृत्रिमएव च। गुढोत्पन्नोऽपविद्धश्च दायादाबान्धवाश्च षट् ॥ १५९ ॥

औरसइति। औरसादयोवक्ष्यमाण लक्षणाः षट् ऋक्थभाजोबान्धवाश्च भवन्ति ॥ १५९ ॥

कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा। स्वयन्दत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ १६० ॥

कानीनश्चेति। कानीनादयोवक्ष्यमाणलक्षणाः षट् गोत्रऋक्थहरान भवन्ति बान्धवाश्च भवन्तीति ॥ १६० ॥

यादृशम्फलमाप्नोति कुप्लवैः सन्तरन् जलम्।
तादृशम्फलमाप्नोति कुपुत्रैः सन्तरंस्तमः॥ १६१॥

औरसेन सह क्षेत्रजादीनाम्पाठात्तुल्यलाशङ्कायां तन्निरासार्थमाह यादृशमिति। तृणादिनिर्मितकुत्सितोडुपादिभिरुदकन्तरन् यथाविधम्फलं प्राप्नोति तथाविधमेव कुपुत्रैः क्षेत्रजादिभिः पारलौकिकं दुःखं दुस्तरं प्राप्नोति इत्यनेन क्षेत्रजादीनां मुख्यौरसपुत्रवत्सम्पूर्णकार्य्यकरणक्षमत्वं न भवतीति दर्शितम्॥ १६१॥

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥ १६२॥

यदीति। अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्म्मत इति याज्ञवल्क्योक्तविषये यदा क्षेत्रिकस्य पितुः क्षेत्रजानन्तरमौरसः पुत्रो भवति तदा तावौरसक्षेत्रजौ एकरिक्थिनौ एकस्य पितुर्य्यद्यपि रिक्थार्हौ भवतः तथापि यद्यस्य जनकसम्बन्धि धनं तदेव स गृह्णीयात् न क्षेत्रजः क्षेत्रिकपितुः। यत्तु वक्ष्यति षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। औरसो विभजन् दायमिति तत्पुत्रवद्बीजिविषयं। यत्तु याज्ञवल्क्येन। उभयसम्बन्धिरिक्थहरत्वमुक्तन्तत्क्षेत्रिकपितुरौरसपुत्राभावे बोद्धव्यं। मेधातिथिगोविन्दराजौ तु

औरसमनियुक्तापुत्रञ्च विषयीकृत्येमं श्लोकं व्याचचाते। तन्न अनियुक्तापुत्रस्याक्षेत्रजत्वादनियुक्तासुतश्चेत्यनेन तस्य ऋक्थ ग्रहणनिषेधात् यद्येकऋक्थिनावित्यनन्वयाच्च ॥ १६२ ॥

एकएवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः। शेषा णामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥ १६३ ॥

एकइति। व्याध्यादिना प्रथममौरसपुत्राभावे क्षेत्रजादिषु कृतेषु पश्चादौषधादिना विगतव्याधेरौरसे उत्पन्ने सतीद मुच्यते औरसएवैकः पुत्रः पितृधनस्वामी शेषाणां क्षेत्रज व्यतिरिक्तानां तस्य षष्ठांशादेर्वक्ष्यमाणत्वात् पापसम्बन्धपरि हारार्थं ग्रासाच्छादनन्दद्यात् ॥ १६३ ॥

षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्। और सोविभजन्दायम्पित्र्यं पञ्चममेव वा ॥ १६४ ॥

षष्ठमिति। औरसः पुत्रः पितृसम्बन्धिदायं विभजन् क्षेत्र जस्य ततः षष्ठमंशं पञ्चमं वा दद्यात् निर्गुणसगुणापेक्षश्चायं विकल्पः ॥ १६४ ॥

औरसक्षेत्रजौ पुत्रौ पितृऋक्थस्य भागिनौ। दशापरे तु क्रमशोगोत्रऋक्थांशभागिनः ॥ १६५ ॥

औरसेति। औरसक्षेत्रजौ पुत्रावुक्तप्रकारेण पितृधनहरौ

स्यातां अन्ये पुनर्दश दत्तकादयः पुत्रागोत्रभाजोभवन्ति पूर्व्वाभावेपरः परइत्येवं क्रमेण धनांशहराश्च ॥ १६५ ॥

स्वे क्षेत्रे संस्कृतायान्तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात्पुत्रम्प्रथमकल्पितम् ॥ १६६ ॥

स्वइति। स्वभार्य्यायां कन्यावस्थायामेव कृतविवाह संस्कारायां यं स्वयमुत्पादयेत् तम्पुत्रं औरसं मुख्यं विद्यात्। सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसपुत्रं विद्यादिति बौधायनदर्शनात् सजातीयायामेव स्वयमुत्पादितऔरसो ज्ञेयः ॥ १६६ ॥

यस्तल्पजः प्रमीतस्य क्लीवस्य व्याधितस्य वा। स्वध
र्म्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥ १६७ ॥

यइति। योमृतस्य नपुंसकस्य प्रसवविरोधिव्याध्युपेतस्य वा भार्य्यायां घृताभ्यक्तत्वादिनियोगधर्म्मेण गुरुनियुक्तायां जातः स क्षेत्रजः पुत्रोमन्वादिभिः स्मृतः ॥ १६७ ॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशम्प्रीतिसंयुक्तं स ज्ञेयोदत्त्रिमः सुतः ॥ १६८ ॥

मातेति। शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकः

तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतइति वशिष्ठ स्मरणात् माता पिता वा परस्परानुज्ञया यं पुत्रं परिग्रहीतुः समानजातीयं तस्यैव पुत्राभावनिमित्तायामापदि प्रीतियुक्तं नतु भयादिना उदकपूर्व्वं दद्यात् स दत्रिमाख्यः पुत्रोविज्ञेयः ॥ १६८ ॥

सदृशन्तु प्रकुर्य्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ १६९ ॥

सदृशमिति। यत्पुनः समानजातीयम्पित्रोः पारलौकिक श्राद्धादिकरणाकरणाभ्यां गुणदोषौ भवतइत्येवमादिज्ञं पुत्रगुणैश्च मातापित्रोराराधनादियुक्तं पुत्रं कुर्य्यात् स कृत्रिमाख्यः पुत्रो बोद्धव्यः ॥ १६९ ॥

उत्पद्यते गृहे यस्य नच ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ १७० ॥

उत्पद्यतइति। यस्य गृहे अवस्थितायाम्भार्य्यायां पुत्रउत्पद्यते सजातीयोऽयम्भवतीति ज्ञानेपि कस्मात्पुरुषविशेषाज्जातो साविति न ज्ञायते स गृहे अप्रकाशमुत्पन्नस्तस्य पुत्रः स्याद्यदीयायाम्भार्य्यायां जातः ॥ १७० ॥

मातापितृभ्यामुत्सृष्टन्तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ १७१ ॥

मातेति। मातापितृभ्यान्त्यक्तं तयोरन्यतरमरणे अन्यतरेण वा त्यक्तं पुत्रं स्वीकुर्य्यात् सोऽपविद्धाख्यः पुत्र उच्यते॥१७१॥

पितृवेश्मनि कन्या तु यं पुत्रञ्जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ १७२ ॥

पित्रिति। पितृगृहे कन्या यं पुत्रं अप्रकाशं जनयेत् तं कन्यापरिणेतुः पुत्रं नाम्ना कानीनं वदेत् ॥ १७२ ॥

या गर्भिणी संस्क्रियते ज्ञाता ज्ञातापि वा सती। वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ १७३ ॥

येति। या गर्भवती अज्ञातगर्भा ज्ञातगर्भा वा परिणीयते स गर्भस्तस्यां जातः परिणेतुः पुत्रो भवति सहोढ इति व्यपदिश्यते ॥ १७३ ॥

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्। स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा ॥ १७४ ॥

क्रीणीयादिति। यः पुत्रार्थं मातापित्रोः सकाशात् यं क्रीणीयात् स क्रीतकस्तस्य पुत्रो भवति क्रेतुर्गुणैस्तुल्यो हीनो वा भवेत्

न तत्र जातितः सादृश्यवैसादृश्ये। सजातीयेष्वयम्प्रोक्तस्तनयेषु मयाविधिरिति याज्ञवल्क्येन सर्व्वेषामेव पुत्राणां सजातीयत्वाभिधानात् तेन मानवेपि क्रीतव्यतिरिक्ताः सर्व्वे पुत्राः सजातीया बोद्धव्याः ॥ १७४ ॥

या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भवउच्यते ॥ १७५ ॥

येति। या भर्त्रा परित्यक्ता मृतभर्त्तृका वा स्वेच्छया अन्यस्य पुनर्भार्य्या भूत्वा यमुत्पादयेत्स उत्पादकस्य पौनर्भवः पुत्र उच्यते ॥ १७५ ॥

सा चेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥ १७६ ॥

साचेदिति। सा स्त्री यद्यक्षतयोनिः सत्यन्यमाश्रयेत्तदा तेन पौनर्भवेन भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति यद्वा कौमारम्पतिमुत्सृज्यान्यमाश्रित्य पुनस्तमेव प्रत्यागता भवति तदा तेन कौमारेण भर्त्रा पुनर्विवाहाख्यं संस्कारमर्हति॥१७६॥

मातापितृविहीनोयस्त्यक्तोवा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृतः ॥ १७७ ॥

मातेति। योमृतमातापितृकस्त्यागोचितकारणं विना द्वेषादिना ताभ्यां त्यक्तोवा आत्मानं यस्मै ददाति स स्वयन्दत्ताख्यः तस्य पुत्रोमन्वादिभिः स्मृतः ॥ १७७ ॥

यं ब्राह्मणस्तु शूद्रायाङ्कामादुत्पादयेत्सुतम्। स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७८ ॥

यमिति। विन्नास्वेषविधिः स्मृतइति याज्ञवल्क्यदर्शनात् परिणीतायामेव शूद्रायां ब्राह्मणः कामाद्यं पुत्रञ्जनयेत्स जीवन्नेव शवतुल्यइति पारशवः स्मृतः यद्यप्ययं पितृुपकारार्थं श्राद्धादिकं करोति तथाप्यसंपूर्णोपकारकत्वात् शवव्यपदेशः ॥ १७८ ॥

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतोभवेत्।
सोनुज्ञातोहरेदंशमिति धर्मोव्यवस्थितः ॥ १७९ ॥

दास्यामिति। ध्वजाहृताद्युक्तलक्षणायान्दास्यां दाससम्बन्धिन्यां वा दास्यां शूद्रस्य यः पुत्रोजायते स पित्रा अनुज्ञात परिणीता पुत्रैः समानभागभाग्भवेदिति तुल्यभागं लभत इति शास्त्रव्यवस्था नियता ॥ १७९ ॥

क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥१८०॥

क्षेत्रजेति। एतान् क्षेत्रजादीन् एकादश पुत्रान्पुत्रोत्पादन विधिलोपः पुत्रकर्त्तव्यश्राद्धादिलोपश्च माभूदित्येवमर्थं पुत्र प्रतिच्छन्दकान्मुनयश्राहुः॥ १८०॥

य एतेऽभिहिताः पुत्राः प्रसङ्गादन्यवीजजाः।
यस्य ते वीजतोजातास्तस्य ते नेतरस्य तु॥ १८१॥

यइति। य एते क्षेत्रजादयोऽन्यवीजोत्पन्नाः पुत्राश्चौरस पुत्रप्रसङ्गेनोक्ताः ते यद्वीजोत्पन्नास्तस्यैव पुत्रा भवन्ति न क्षेत्रिका देरिति सत्यौरसे पुत्रे पुत्रिकायाञ्च सत्यां न ते कर्त्तव्याइत्येव म्परमिदं अन्यवीजजाइत्येकादशपुत्रोपलक्षणार्थं स्ववीजजाता वपि पौनर्भवशौद्रौ न कर्त्तव्यौ अतएव वृद्धवृहस्पतिः। आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः कृतं। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्व्विना॥ १८१॥

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत्। सर्व्वां स्तांस्तेन पुत्रेण पुत्रिणोमनुरब्रवीत्॥ १८२॥

भ्रातॄणामिति। भ्रातॄणामेकमातापितृकाणां मध्ये यद्येकः

पुत्रवान् स्यात् अन्येच पुत्ररहितास्तदा तेनैकपुत्रेण सर्व्वान् भ्रातॄन्सपुत्रान्मनुराह ततश्च तस्मिन्सति अन्ये पुत्रप्रतिनिधयोन कर्त्तव्याः सएव पिण्डदोंशहरश्च भवतीत्यनेनोक्तं एतच्च पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा। तत्सुतइति याज्ञवल्क्य वचनाद्भ्रातृपर्य्यन्ताभावे बोद्धव्यं ॥ १८२ ॥

सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्म्मनुः ॥ १८३ ॥

सर्वासामिति। एकपतिकानां सर्व्वासां स्त्रीणां मध्ये यद्येका पुत्रवती स्यात्। तदा तेन पुत्रेण सर्व्वास्ताः पुत्रयुक्तामनुराह ततश्च सपत्नीपुत्रे सति स्त्रिया न दत्तकादिपुत्राः कर्त्तव्या इत्येत दर्थमिदं ॥ १८३ ॥

श्रेयसः श्रेयसोभावे पापीयानृक्थमर्हति। बहवश्चेत्तु सदृशाः सर्व्वे रिक्थस्य भागिनः ॥ १८४ ॥

श्रेयसइति। औरसादीनां सर्वेषां पुत्राणामुक्तत्वात् औरसादीनुपक्रम्य तेषां पूर्वः पूर्वः श्रेयान्स एव दायहरः सचान्यान्विभृयादिति विष्णुवचनात्। औरसादीनां पुत्राणां पूर्वपूर्वाभावे परःपरश्चक्थमर्हति पूर्व्वसद्भावे परसंवर्द्धनं सएव कुर्य्यात्। एवञ्च सिद्धे पुत्रत्वे शूद्रापुत्रस्य द्वादशपुत्रमध्ये पाठः

क्षेत्रजादिसद्भावे धनानर्हत्वज्ञापनार्थत्वेन सार्थकः अन्यथा तु क्षत्रियावैश्यापुत्रवदौरसत्वात् क्षेत्रजादिसद्भावेपि धनं लभेत। पूर्व्वस्य परसंवर्द्धनमात्रज्ञापवादेतरविषये द्रष्टव्यं क्षेत्रजगुणव द्दत्तकपुत्रयोः पञ्चमं षष्ठंवा भागं औरसोदद्यादिति विहित त्वात्। यदितु समानरूपाः पौनर्भवादयोबहवः पुत्रास्तदा सर्व्वएव विभज्य ऋक्थं गृह्णीयुः॥ १८४॥

न भ्रातरो न पितरः पुत्राऋक्थहराः पितुः।
पिता हरेदपुत्रस्य ऋक्थं भ्रातर एव च ॥ १८५॥

नेति। न सोदरभ्रातरोन पितरः किन्तु औरसाभावे क्षेत्र जादयोगौणपुत्राः पितृऋक्थहराभवन्तीति अनेनोच्यते औरसस्य तु एकएवौरसः पुत्रइत्यनेनैव सिद्धत्वात्। अविद्यमान मुख्यामुख्यपुत्रस्य पत्नीदुहितृरहितस्य च पिता धनं गृह्णीया त्तेषां मातुस्त्वभावे भ्रातरोधनं गृह्णीयुः एतच्चानन्तरम्प्रपञ्चयिष्यामः॥ १८५॥

त्रयाणामुदकङ्कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। चतुर्थः सम्प्रदातैषाम्पञ्चमोनोपपद्यते ॥ १८६॥

इदानीं क्षेत्रजादीनामप्यपुत्रपितामहादिधनेप्यधिकारं दर्शयितुमाह त्रयाणामिति। त्रयाणाम्पित्रादीनां उदकदानं

कार्य्यं त्रिभ्यएव च तेभ्यः पिण्डोदेयः चतुर्थस्य पिण्डोदकयोर्दाता पञ्चमस्यात्र सम्बन्धोनास्ति तस्माद्युक्तोऽपुत्रपितामहादिधने गौणपौत्राणामधिकारः औरसपुत्रपौत्रयोस्तु. पुत्रेण लोकान् जयतीत्यनेनैवपितामहादिधनभागित्वमुक्तम् ॥१८६॥

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेत्। अत ऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्यएव वा ॥१८७॥

अनन्तरइति। अस्य सामान्यवचनस्यौरसादिसपिण्डमात्रविषयत्वे वैयर्थ्यात्तस्यानुक्तपत्न्यादिदायप्राप्त्यर्थमिदं। सपिण्डमध्यात्सन्निकृष्टतरोयः सपिण्डः पुमान् स्त्री वा तस्य मृतधनम्भवति तत्रैकएवौरसः पुत्रइत्युक्तत्वात्सएव मृतधनेऽधिकारी क्षेत्रजगुणवद्दत्तकयोस्तु यथोक्तं पञ्चमं षष्ठं वा भागन्दद्यात् कृत्रिमादिपुत्राणां संवर्द्धनमात्रं कुर्य्यात्। औरसाभावे पुत्रिकातत्पुत्रस्य। दौहित्रएव च हरेदपुत्रस्याखिलन्धनमित्युक्तत्वादौरसपुत्ररहितएव तत्रापुत्रोविवक्षितः तदभावे क्षेत्रजादयएकादशपुत्राः क्रमेण पितृधनाधिकारिणः। परिणीतशूद्रापुत्रस्तु दशमभागमात्राधिकारी नाधिकन्दशमाद्द्यात् शूद्रापुत्रायेत्याद्युक्तत्वात् दशमभागावशिष्टन्धनं सन्निकृष्टसपिण्डोगृह्णीयात् त्रयोदशविधपुत्राभावे पत्नी सर्व्वभर्तृधनभागिनी। यदाह याज्ञवल्क्यः। पत्नी दुहितरश्चैव पितरौ

भ्रातरस्तथा। तत्सुतो गोत्रजो बन्धुः शिष्यस्सब्रह्मचारिणः। एषामभावे पूर्व्वस्य धनभागुत्तरोत्तरः। स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वयं विधिः। वृहस्पतिरप्याह। आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा। यस्य नोपरता भार्य्या देहार्द्धन्तस्य जीवति। जीवत्यर्द्धं शरीरे तु कथमन्यः स्वमाप्नुयात्। सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः। अपुत्रस्य प्रमीतस्य पत्नी तद्भागहारिणी। पूर्व्वप्रणीताग्निहोत्रं मृते भर्त्तरि तद्धनम्। विन्देत्पतिव्रता नारी धर्म्म एष सनातनः। जङ्गमं स्थावरं हेम कुप्यन्धान्यमथाम्बरम्। आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्। पितृव्यगुरुदौहित्रान् भर्तृस्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानथातिथींस्त्रियः। तत्सपिण्डा बान्धवा वा ये तस्याः परिपन्थिनः। हिंस्युर्धनानि तान्राजा चौरदण्डेन शासयेत्। वृद्धमनुः। अपुत्रा शयनम्भर्त्तुः पालयन्ती व्रते स्थिता। पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमर्थं लभेत च। यदुक्तं। स्त्रीणान्तु जीवनन्दद्यादिति संवर्द्धनमात्रवचनं तद्दुःशीलाधार्म्मिकव्यभिचारचैव नस्यपत्नीविषयं अतोयन्मेधातिथिना पत्नीनामंशभागित्वं निषिद्धं तदसम्बद्धम्। पत्नीनामंशभागित्वं वृहस्पत्यादिसम्मतम्। मेधातिथिर्निराकुर्व्वन् न प्रोणाति सतामनः। पत्न्यभावे ष्यपुत्रिका दुहिता तदभावे पिता माता च तयोरभावे सोदर्य्यभ्राता तदभावे तत्सुतः। मातर्य्यपि च वृत्तायाम्पितुर्माता

हरेद्धनं इति वक्ष्यमाणत्वात् पितृमाता। तदभावे अन्योपि सन्निकृष्टसपिण्डोमृतधनं गृह्णीयात्। तद्यथा पितामहसन्ताने ऽविद्यमाने प्रपितामहसन्तानएव एवमन्यदप्यूह्यं अतऊर्द्ध्वं सपिण्डसन्तानाभावे समानोदकआचार्य्यः शिष्यस्य क्रमेण धनं गृह्णीयात्॥ १८७॥

सर्व्वेषामप्यभावे तु ब्राह्मणारिक्थभागिनः।
त्रैविद्याः शुचयो दान्तास्तथाधर्म्मो न हीयते॥१८८॥

सर्व्वेषामिति। एषामभावइति वक्तव्ये सर्व्वेषामभावइति यदुक्तन्तत्ब्रह्मचार्य्यादेरपि धनहारित्वार्थं सर्व्वेषामभावे ब्राह्मणा वेदत्रयाध्यायिनो बाह्यान्तरशौचयुक्ताजितेन्द्रियाधन हारिणो भवन्ति तएव च पिण्डदाः तथासति धनिनोमृतस्य श्राद्धादिधर्म्महानिर्न्न भवति॥ १८८॥

अहार्य्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः।
इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः॥ १८९ ॥

अहार्य्यमिति। ब्राह्मणसम्बन्धिधनं न राज्ञा कदाचिद्ग्राह्य मिति शास्त्रमर्य्यादा किन्तूक्तलक्षणब्राह्मणाभावे ब्राह्मण

मात्रेभ्योपि देयं क्षत्रियादिधनं पुनः पूर्व्वोक्तऋक्थहराभावे राजा गृह्णीयात् ॥ १८९ ॥

संस्थितस्यानपत्यस्य सगोत्रात्पुत्रमाहरेत्। तत्र यद्दक्थजातं स्यात्तत्तस्मिन् प्रतिपादयेत्॥ १९० ॥

संस्थितस्येति। अनपत्यस्य मृतस्य भार्य्या समानगोत्रात् पुंसोगुरुनियुक्ता सती नियोगधर्म्मेण पुत्रमुत्पादयेत् तस्मिन् मृतविषये यत् धनजातम्भवेत्तत्तस्मिन् पुत्रे समर्पयेत्। देवराद्वा सपिण्डाद्वा इत्युक्तत्वात् सगोत्रान्नियोगप्राप्त्यर्थं तज्जस्य च ऋक्थभागित्वार्थमिदम् ॥ १९० ॥

द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रियाधने। तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः॥ १९१ ॥

द्वाविति। यद्येकऋक्थिनौ स्यातामित्यौरसक्षेत्रजयोरुक्तमिदन्त्वौरसपौनर्भवविषयं यदोत्पन्नौरसभर्त्तुर्मृतत्वात् बालापत्यतया स्वामिधनं स्वीकृत्य पौनर्भवभर्त्तुः सकाशात्पुत्रान्तरं जनयेत् तस्यापि च पौनर्भवस्य भर्त्तुर्मृतत्वात् ऋक्थहरान्तराभावात् धनं गृहीतवती पश्चात्तौ द्वाभ्यां जातौ यदि विवदे

यातां स्त्रीहस्तगतधने तदा तयोर्यस्य यज्जनकसम्बन्धिधनं स तदेव गृह्णीयात् नत्वन्यपितृजोन्यजनकस्य ॥ १९१ ॥

जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ १९२ ॥

जनन्यामिति। मातरि मृतायां सोदर्य्यभ्रातरोभगिन्यश्च सोदर्य्याअनूढाः मातृधनं समं कृत्वा गृह्णीयुः ऊढास्तु धनानुरूपं सम्मानं लभन्ते। तदाह बृहस्पतिः। स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी। अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्। ततस्त्वनूढानाम्पितृधनद्वोढानां मातृधनं भ्रात्रा स्वांशाच्चतुर्थभागोदेयः ॥ १९२ ॥

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामह्याधनात् किञ्चित्प्रदेयं प्रीतिपूर्व्वकं ॥१९३॥

यादति। तासां दुहितॄणां या अनूढा दुहितरः ताभ्योपि मातामहीधनाद्यथा तासां पूजा भवति तथा प्रीत्या किञ्चिद्दातव्यम् ॥ १९२ ॥

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतिकर्म्मणि।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥ १९४॥

अध्यग्नीति। अध्यग्नीत्यव्ययं विभक्तिसमीपेत्यादिना सूत्रेण समीपार्थे अव्ययीभावः विवाहकाले अग्निसन्निधौ यत्पित्रादि दत्तं तदध्यग्नि स्त्रीधनं तदाह कात्यायनः। विवाहकाले यत्स्त्रीभ्योदीयते ह्यग्निसन्निधौ। तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्। यत्तु पितृगृहाद्भर्तृगृहं नीयमानया लब्धं तदध्यावाहनिकम्। तथाच कात्यायनः। यत्पुनर्लभते नारी नीयमाना तु पैतृकात्। अध्यावाहनिकन्नाम तत् स्त्रीधनमुदाहृतम्। यत्तु प्रीतिहेतुकर्म्मणि भर्त्रादिदत्तं तथा भ्रात्रा पित्रा समयान्तरे यद्दत्तं एवं षट्प्रकारकं स्त्रीधनं स्मृतम्॥ १९४॥

अन्वाधेयञ्च यद्दत्तम्पत्या प्रीतेन चैव यत्। पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनम्भवेत्॥ १९५॥

अन्वाधेयमिति। अन्वाधेयं व्याख्यातङ्कात्यायनेन। विवाहात्परतोयत्तु लब्धम्भर्तृकुले स्त्रिया। अन्वाधेयन्तदुक्तन्तु लब्धं बन्धुकुले तथा। विवाहादूर्द्ध्वं भर्तृकुले पितृकुले वा यत्स्त्रिया लब्धं भर्त्रा च प्रीतेन दत्तं यत् अध्यग्न्यादि पूर्व्वश्लोकउक्तन्तद्भर्त्तरि जीवति मृतायाः स्त्रियाः सर्व्वधनं तदपत्यानाम्भवति॥ १९५॥

ब्राह्मदैवार्षगान्धर्व्वप्राजापत्येषु यद्वसु। अप्रजायामतीतायाम्भर्त्तुरेव तदिष्यते॥ १९६ ॥

ब्राह्मेति। ब्राह्मादिषु पञ्चसु विवाहेषूक्तलक्षणेषु यत्स्त्रियः षड्विधन्धनं तदनपत्यायां मृतायाम्भर्त्तुरेव मन्वादिभिरिष्यते ॥ १९६ ॥

यत्त्वस्याः स्याद्धनन्दत्तं विवाहेष्वासुरादिषु।
अप्रजायामतीतायां मातापित्रोस्तदिष्यते॥ १९७॥

यदिति। यत्पुनः स्त्रिया आसुरराक्षसपैशाचेषूक्तलक्षणेषु विवाहेषु यत्स्त्रियाः षड्विधमपिधनं तदनपत्यायां मृतायां मातापित्रोरिष्यते॥ १९७॥

स्त्रियान्तु यद्भवेद्वित्तम्पित्रा दत्तं कथञ्चन। ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत्॥ १९८॥

स्त्रियामिति। ब्राह्मणस्य नानाजातीयासु स्त्रीषु क्षत्रियादिस्त्रियामनपत्यपतिकायां मृतायां तस्याः पितृदत्तं धनं सजातिविजातिसापत्यकन्यापुत्रसद्भावेपि ब्राह्मणी सापत्न्येयी कन्या गृह्णीयात्तदभावे तदपत्यस्य तद्धनम्भवेत्॥ १९८ ॥

न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात्।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया ॥१९९॥

नेति। भ्रात्रादिबहुसाधारणात्कुटुम्बधनात् भार्य्यादिभिः स्त्रीभीरलालङ्काराद्यर्थं धनसञ्चयनन्न कर्त्तव्यं नापि च भर्त्तुराज्ञां विना भर्त्तृधनादपि कार्य्यं ततश्च नेदं स्त्रीधनम् ॥१९९॥

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तम्भजेरन्दायादा भजमानाः पतन्ति ते ॥ २०० ॥

पत्यावित्यादि। भर्त्तरि जीवति तत्सम्मत्या योऽलङ्कारः स्त्रीभिर्द्धृतः तस्मिन्मृते विभागकाले तं पुत्रादयो न भजेरन्। भजमानाः पापिनोभवन्ति ॥ २०० ॥

अनंशौ क्लीवपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥ २०१ ॥

अनंशाविति। नपुंसकपतितजात्यन्धश्रोत्रविकलोन्मत्तजडमूकाः ये च कुणिपंग्वादयोविकलेन्द्रियास्ते पित्रादिधनहरा न भवन्ति किन्तु ग्रासाच्छादनभागिनः ॥ २०१ ॥

सर्व्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा।
ग्रासाच्छादनमत्यन्तम्पतितोह्यददद्भवेत्॥ २०२॥

तदेवाह सर्व्वेषामिति। सर्व्वेषामेषां क्लीवादीनां ग्रासक्लृप्तेन ऋक्थहारिणा यावज्जीवं स्वशक्त्या ग्रासाच्छादनन्देयं अददत्पापी स्यात्॥ २०२॥

यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति॥ २०३॥

यदीति। कथञ्चनेत्यभिधानात् क्लीवादयोविवाहानर्हा इति सूचितं यदि कथञ्चिदेषां विवाहेच्छा भवेत् तदा क्लीवस्य क्षेत्रजउत्पन्ने तेषामुत्पन्नापत्यानामपत्यं धनभाग्भवति॥२०३॥

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति।
भागोयवीयसान्तत्र यदि विद्यानुपालिनः॥ २०४॥

यत्किञ्चिदिति। पितरि मृते सति भ्रातृभिः सहाविभक्तो ज्येष्ठः यत्किञ्चित् स्वेन पौरुषेण धनं लभते ततोधनात् विद्याभ्यासवतां कनिष्ठभ्रातृणां भागो भवति नेतरेषाम्॥ २०४॥

अविद्यानान्तु सर्व्वेषामीहातश्चेद्धनम्भवेत्। समस्तत्र विभागः स्यादपित्र्यइति धारणा ॥ २०५ ॥

अविद्यानामिति। सर्व्वेषां भ्रातॄणां कृषिवाणिज्यादिचेष्टया यदि धनं स्यात् तदा पित्र्यवर्ज्जिते तस्मिन् धने स्वार्जिते समोविभागः स्यात् नतूद्धारइति निश्चयः ॥ २०५ ॥

विद्याधनन्तु यद्यस्य तत्तस्यैव धनम्भवेत्। मैत्र्यमौद्वाहिकञ्चैव माधुपर्क्किकमेव च ॥ २०६ ॥

विद्येति। विद्यामैत्रीविवाहार्जितं माधुपर्क्किकं मधुपर्कदानकाले पूज्यतया यल्लब्धं तस्यैव तत्स्यात् यत्किञ्चित् पितरीत्यस्याऽयमपवादः। विद्याधनञ्च व्याहृतं कात्यायनेन। परभक्तप्रदानेन प्राप्ता विद्या यदान्यतः। तया प्राप्तञ्च विधिना विद्याप्राप्तन्तदुच्यते। उपन्यस्ते च यल्लब्धं विद्यया पणपूर्व्वकम्। विद्याधनन्तु तद्विद्यात् विभागे न विभज्यते। शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात्। स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत्। विद्याधनन्तु तत्प्राहुर्विभागे न विभज्यते॥ अतोयन्मेधातिथिगोविन्दराजाभ्यां माधुपर्क्किकमार्त्विज्यधनं व्याख्यातं तदयुक्तं विद्याधनत्वात् ॥ २०६ ॥

भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा। स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनम्॥२०७॥

भ्रातॄणामिति। राजानुगमनादिकर्म्मणा योधनमर्जितुं शक्तोभ्रातॄणां साधारणं धनं नेच्छति स स्वीयादंशात् किञ्चि दुपजीवनन्दत्वा भ्रातृभिः पृथक्कार्य्यः तेन तत्पुत्रास्तत्र धने कालान्तरे न विवदन्ते॥ २०७॥

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जयेत्। स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥ २०८॥

अनुपघ्नन्निति। पितृधनानुपघातेन यत्कृष्यादिक्लेशादर्जयेत् तत् स्वचेष्टाप्राप्तमनिच्छन् भ्रातृभ्योदातुन्नार्हति॥२०८॥

पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्। न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्ज्जितम्॥ २०९॥

पैतृकमिति। यत्पुनः पितृसम्बन्धिधनं तेनासामर्थ्येनोपेक्षितत्वादनवाप्तं पुत्रः स्वशक्त्या प्राप्नुयात्तत्स्वयमर्जितमनिच्छन् पुत्रैः सह न विभजेत्॥ २०९॥

विभक्ताः सह जीवन्तोविभजेरन् पुनर्यदि। सम
स्तात्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥ २१०॥

विभक्तादिति। पूर्व्वं सोद्धारं निरुद्धारं वा विभक्ता भ्रातरः पश्चादेकीकृत्य धनं सहजीवन्तो यदि पुनर्विभागं कुर्व्वन्ति तदा तात्र समो विभागः कार्य्यः ज्येष्ठस्योद्धारो न देयः॥ २१०॥

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥ २११॥

येषामिति। येषां भ्रातृणां मध्ये कश्चिद्विभागकाले प्रव्रज्यादिना स्वांशाद्धीयेत मृतो वा भवेत्तस्य भागो न लुप्येत॥ २११॥

सोदर्य्याविभजेरंस्तं समेत्य सहिताः समम्।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः॥ २१२॥

किन्तु सोदर्य्यादित्यादि। सोदर्य्याभ्रातरः समागम्य सहिताः भगिन्यश्च सोदर्य्यास्तमंशं समं कृत्वा विभजेरन् सोदर्य्याणां सापत्न्यानामपि मध्यात् ये मिश्रीकृतधनत्वेनैक योगक्षेमास्ते विभजेयुः न सर्व्वे सोदर्य्याः सापत्न्यावा। एतच्च पुत्र पत्नीपितृमात्रभावे द्रष्टव्यम्॥ २१२॥

योज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन् यवीयसः।
सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः॥२१३॥

योज्येष्ठइति। यो ज्येष्ठो भ्राता लोभात्कनीयसोभ्रातॄन् वंचयेत्सज्येष्ठभ्रातृपूजाशून्यः सोद्धारभागरहितश्च राजदण्ड्यश्च स्यात्॥२१३॥

सर्व्वएव विकर्म्मस्था नार्हन्ति भ्रातरो धनम्। न चादत्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम्॥२१४॥

सर्व्वएवेति। अपतिताअपि ये भ्रातरो द्यूतवेश्यासेवादिविकर्म्मासक्तास्ते ऋक्थं नार्हन्ति नच कनिष्ठेभ्योऽननुकल्प्य ज्येष्ठः साधारणधनादात्मार्थमसाधारणधनं कुर्य्यात्॥२१४॥

भ्रातॄणामविभक्तानां यद्युत्थानम्भवेत्सह। न पुत्रभागं विषमं पिता दद्यात्कथञ्चन॥२१५॥

भ्रातॄणामिति। भ्रातॄणां पित्रा सहावस्थितानां अविभक्तानां यदि सहधनार्जनार्थमुत्थानम्भवेत्तदा विभागकाले न कस्यचित्पुत्रस्याधिकम्पिता कदाचिद्दद्यात्॥२१५॥

ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युर्व्विभजेत स तैः सह॥ २१६॥

ऊर्द्धमिति। यदा जीवतैव पित्रा पुत्राणामिच्छया विभागः कृतः तदा विभागादूर्द्धं जातः पुत्रः पितरि मृते पितृद्रव्यमेव गृह्णीयात्। ये कृतविभागाः पित्रा सह पुनर्म्मिश्रीकृतधनास्तैः सहासौ पितरि मृते विभजेत्॥ २१६॥

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।
मातर्य्यपि च वृत्तायाम्पितुर्म्माता हरेद्धनम्॥ २१७॥

अनपत्यस्येति। अनपत्यस्य पुत्रस्य धनं माता गृह्णीयात् पूर्व्वं पिता हरेदपुत्रस्य द्रव्यमित्युक्तत्वात् इह माता हरेदित्यनेन याज्ञवल्क्येन पितराविति एकशेषकरणात्। विष्णुना च अपुत्रस्य धनम्पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामी त्येकशेषस्यैव कृतत्वात् मातापितरौ विभज्य गृह्णीयातां। मातरि मृतायाम्पत्नीपितृभ्रातृभ्रातृजाभावे पितुर्म्माता धनं गृह्णीयात्॥ २१७॥

ऋणे धने च सर्व्वस्मिन् प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्व्वं समतां नयेत्॥ २१८॥

ऋणइति। ऋणे पित्रादिधार्य्यमाणे धने च तदीये सर्व्वस्मिन्

यथाशास्त्रं विभक्ते सति पश्चाद्यत्किञ्चित्पैतृकं ऋणन्धनं वा विभागकालेऽज्ञातमुपलभ्येत तत्सर्वं समं कृत्वा विभजनीयं न तु शोध्यं ग्राह्यं न वा ज्येष्ठस्योद्धारो देयः ॥ २१८ ॥

वस्त्रम्पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः। योगक्षेमम्प्रचारञ्च न विभाज्यं प्रचक्षते ॥ २१९ ॥

वस्त्रमिति। वस्त्रं वाहनमाभरणं अविभागकाले यद्येनोपभुक्तन्तस्यैव न विभाज्यं एतच्च नातिन्यूनाधिकमूल्यविषयं यत्तु बहुमूल्यमाभरणादिकन्तद्विभाज्यमेव तद्विषयमेव विक्रीय वस्त्राभरणमिति वृहस्पतेर्व्विभागवचनं कृतान्नमोदनशक्त्वादि तन्न विभजनीयं तत्रातिप्रचुरतरमूल्यं शक्त्वादि तावन्मात्रमूल्यधनेन कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यतइति वृहस्पतिवचनाद्विभजनीयमेव उदकं कूपादिगतं सर्व्वैरुपभोग्यमविभजनीयं स्त्रियोदास्याद्यायास्तुल्यभागा न भवन्ति ता न विभाज्याः किन्तु तुल्यं कर्म्म कारयितव्याः योगक्षेमं मन्त्रिपुरोहितादि योगक्षेमहेतुत्वात् प्रचारोगवादीनाम्प्रचारमार्गः एतत्सर्व्वं मन्वादयोऽविभाज्यमाहुः ॥ २१९ ॥

अयमुक्तोविभागो वः पुत्राणाञ्च क्रियाविधिः। क्रमशः क्षेत्रजादीनां द्यूतधर्म्मन्निबोधत ॥ २२० ॥

अयमिति। एष दायभागः पुत्राणां क्षेत्रजादीनां क्रमेण

विभागकरणप्रकारोयुष्माकमुक्तः। इदानींद्यूतव्यवस्थां शृणुत ॥ २२० ॥

द्यूतं समाह्वयञ्चैव राजा राष्ट्रान्निवारयेत्। राज्या न्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ २२१ ॥

द्यूतमिति। द्यूतसमाह्वयौ वक्ष्यमाणलक्षणौ राजा स्वराष्ट्रा न्निवर्त्तयेत् यस्मादेतौ द्वौ दोषो राज्ञां राज्यविनाशकारिणौ ॥ २२१ ॥

प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ। तयो र्नित्यम्प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥ २२२ ॥

प्रकाशमिति। प्रकटमेतच्चौर्य्यं यत् द्यूतसमाह्वयौ तस्मा त्तन्निवारणे राजा नित्यं यत्नयुक्तः स्यात् ॥ २२२ ॥

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते। प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥ २२३ ॥

अप्राणिभिरिति। अक्षशलाकादिभिरप्राणैर्यत्क्रियते तल्लोके द्यूतं कथ्यते यः पुनः प्राणिभिः मेषकुक्कुटादिभि पणपूर्व्वकं क्रियते स समाह्वयो ज्ञेयः लोकप्रसिद्धयोरप्यनयोर्लक्षणकथनं परिहारार्थम् ॥ २२३ ॥

द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत वा। तान्स
र्व्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ २२४ ॥

द्यूतमिति। द्यूतसमाह्वयौ यः कुर्य्यात् योवा सभिकः
कारयेत्तेषामपराधापेक्षया राजा हस्तच्छेदादिवधं कुर्य्यात्।
यज्ञोपवीतादिद्विजचिह्नधारिणः शूद्रान् हन्यात् ॥ २२४ ॥

कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान्।
विकर्म्मस्थान् शौण्डिकांश्च क्षिप्रं निर्व्वासयेत्पुरात्।२२५।

कितवानिति। द्यूतादिसेविनो नर्त्तकगायनान्वेदविद्विषः श्रुति
स्मृतिवाह्यव्रतधारिणः अनापदि परकर्म्मजीविनः शौण्डिकान्
मद्यकरान् मनुष्यान् क्षिप्रं राजा राष्ट्रान्निर्व्वासयेदिति कितव
प्रसङ्गेनान्येषामप्यभिधानं ॥ २२५ ॥

एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः।
विकर्म्मक्रियया नित्यम्बाधन्ते भद्रिकाः प्रजाः॥२२६॥

अत्र हेतुमाह एतदिति। एते कितवादयो गूढचौरा राज्ञो
राष्ट्रे वसन्तो नित्यं वञ्चनात्मकक्रियया सज्जनान् पीडयन्ति
॥ २२६ ॥

द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत्। तस्मा द्यूतन्न सेवेत हास्यार्थमपि बुद्धिमान्॥ २२७॥

द्यूतमिति। नेदानीमेवेदं किन्तु पूर्व्वस्मिन्नपि कल्पे द्यूत मेतदतिशयेन वैरकरं दृष्टं अतः प्राज्ञः परिहासार्थमपि तन्न सेवेत॥२२७॥

प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः। तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा॥२२८॥

प्रच्छन्नमिति। यो मनुष्यः तत् द्यूतं गूढम्प्रकटं वा कृत्वा सेवेत तस्य यथा नृपतेरिच्छा भवति तथाविधो दण्डो भवति। ॥२२८॥

क्षत्रविट्शूद्रयोनिस्तु दण्डन्दातुमशक्नुवन्। आनृण्यङ्कर्म्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥२२९॥

इदानीं पराजितानां धनाभावे सतीदमाह क्षत्रेति। क्षत्र वैश्यशूद्रजातीयोनिर्द्धनत्वेन धनं दातुमसमर्थः तदुचितकर्म्म करणेन धनशोधनं कुर्य्यात्। ब्राह्मणः पुनः यथालाभं क्रमेण दद्यान्न कर्म्मकारयितव्यः॥२२९॥

स्त्रीबालोन्मत्तवृद्धानान्दरिद्राणाञ्च रोगिणां ।
शिफाविदलरज्ज्वाद्यैर्व्विदध्यान्नृपतिर्दमम् ॥ २३० ॥

स्त्रीति। स्त्रीबालादीनां पुनः शिफावेणुदलप्रहाररज्जु बन्धनादिभिर्द्दमनं राजा कुर्य्यात् ॥ २३० ॥

ये नियुक्तास्तु कार्य्येषु हन्युः कार्य्याणि कार्य्यिणां।
धनोष्मणा पच्यमानास्तान्निस्वान्कारयेन्नृपः ॥२३१॥

ये नियुक्तास्त्विति। ये व्यवहारावेक्षणादिषु कार्य्येषु राज्ञा नियुक्ता उत्कोचधनतेजसा विकारं भजन्तः अर्थ्यादीनां कार्य्याणि नाशयेयुः तान् गृहीतसर्व्वस्वान् राजा कारयेत् ॥ २३१ ॥

कूटशासनकर्तॄंश्च प्रकृतीनाञ्च दूषकान्। स्त्री
बालब्राह्मणघ्नांश्च हन्याद्विट्सेविनस्तथा ॥ २३२ ॥

कूटेति। कूटराजाज्ञालेखकान् अमात्यानाञ्च भेदकान् स्त्रीबालब्राह्मणघातिनः शत्रुसेविनश्च राजा हन्यात् ॥ २३२ ॥

तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत्।
कृतन्तद्धर्म्मतोविद्यान्न तद्भूयोनिवर्त्तयेत् ॥ २३३ ॥

तीरितमिति। यत्र क्वचिद्दणादानादिव्यवहारे यत्कार्य्यं

धर्म्मतस्तीरितं पार तीर कर्म्मसमाप्ताविति चुरादौ पाठात् शास्त्र व्यवस्थानिर्णीतं अनुशिष्टन्दण्डपर्य्यन्ततां च नीतं स्यात् तत्कृतमङ्गीकुर्य्यात् न पुनर्निवर्त्तयेत्। एतच्चाकारणात् अतः कारणकृतं निवर्त्तयेदेव ॥ २३३ ॥

अमात्याः प्राड्विवाकोवा यत्कुर्य्युः कार्य्यमन्यथा। तत्स्वयं नृपतिः कुर्य्यात्तान्सहस्रञ्च दण्डयेत्॥२३४॥

अमात्याइति। राजामात्याः प्राड्विवाको वा व्यवहारेक्षणे नियुक्ता यदसम्यग्व्यवहारनिर्णयं कुर्य्युः तत्स्वयं राजा कुर्य्यात् पणसहस्रञ्च तान् दण्डयेत्। इदञ्चोत्कोचधनग्रहणेतर विषयं उत्कोचग्रहणे ये नियुक्तास्त्वित्युक्तत्वात्॥ २३४ ॥

ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः। एते सर्व्वे पृथक्ज्ञेया महापातकिनो नराः॥ २३५ ॥

ब्रह्महेति। यो मनुष्यो ब्राह्मणं हतवान् स ब्रह्महा सुरापो द्विजातिः पैष्ट्याः पाता ब्राह्मणस्य पैष्टीमाध्वीगौडीनां तस्करो ब्राह्मणसुवर्णहारी मनुष्यःयश्च कश्चिद्गुरुपत्नीगामीत्येते सर्व्वे प्रत्येकं महापातकिनोबोद्धव्याः ॥ २३५ ॥

चतुर्णामपि चैतेषाम्प्रायश्चित्तमकुर्व्वताम्।
शारीरं धनसंयुक्तन्दण्डं धर्म्यम्प्रकल्पयेत्॥ २३६ ॥

चतुर्णामिति। चतुर्णामप्येषां महापातकिनां प्रायश्चित्तम कुर्व्वतां शारीरं धनग्रहणेन च धनसम्बन्धं अपराधानुसारेण धर्म्मादनपेतं वक्ष्यमाणन्दण्डं कुर्य्यात्॥ २३६ ॥

गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्॥२३७॥

गुरुतल्पइति। नांक्या राज्ञा ललाटे स्युः इतिवक्ष्यमाण त्वात् ललाटमेवाङ्कनस्थानमवगम्यते तत्र गुरुपत्नीगमने याव ज्जीवस्थायि तप्तलोहेन ललाटे भगाकृतिं गुरुपत्नीगमनचिह्न ङ्कार्य्यं एवं सुरापाने कृते पातुर्द्दीर्घं सुराध्वजाकारं सुवर्णाप हारे सत्यपहर्त्तुः कुक्कुरपादरूपं कार्य्यं ब्रह्महणि कबन्धः पुमान् कर्त्तव्यः॥ २३७॥

असम्भोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः।
चरेयुः पृथिवीं दीनाः सर्व्वधर्म्मवहिष्कृताः॥२३८॥

असंभोज्याइति। अन्नादिकंनैते भोजयितव्या न चैतेयाजनीयाः

नाध्येते अध्यापनीया नाध्येतैः कन्यादानसम्बन्धः कर्त्तव्यः एते च निर्द्धनत्वात् याचनादिदैन्ययुक्ताः सर्व्वश्रौतादिकर्म्मव र्ज्जिताः पृथ्वीम्पर्य्यटेयुः ॥ २३८ ॥

ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः।
निर्दया निर्न्नमस्कारास्तन्मनोरनुशासनं ॥ २३९ ॥

ज्ञातीति। ज्ञातिभिः सम्बन्धिभिर्म्मातुलाद्यैरेते कृताङ्कास्त्य जनीयाः नचैषां दया कार्य्या नाध्येते नमस्कार्य्यादृतीयं मनो राज्ञा ॥ २३९ ॥

प्रायश्चित्तन्तु कुर्व्वाणाः सर्व्वे वर्णा यथोदितम्।
नांक्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसं ॥ २४०॥

प्रायश्चित्तमिति। शास्त्रविहितं प्रायश्चित्तम्पुनः कुर्व्वाणा ब्राह्म णादयस्त्रयोवर्णा राज्ञा ललाटे अङ्कनीया न भवेयुः उत्तम साहसं पुनर्दण्डनीयाः ॥ २४० ॥

आगःसु ब्राह्मणस्यैव कार्य्यो मध्यमसाहसः।
विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः ॥२४१॥

आगःस्विति। इतरे कृतवन्तस्त्वित्युत्तरश्लोके श्रूयमाणाऽ

कामतइति अत्रापि योजनीयं तेनाकामतइति एष्वपराधेषु गुणवतो ब्राह्मणस्य मध्यमसाहसो दण्डः कार्य्यः पूर्व्वोक्तस्तूत्तमसाहसो निर्गुणस्य द्रष्टव्यः कामतस्त्वेष्वपराधेषु धनधान्यादिपरिच्छदसहितो ब्राह्मणो देशान्निर्व्वास्यः ॥ २४१ ॥

इतरे कृतवन्तस्तु पापान्येतान्यकामतः। सर्व्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥ २४२ ॥

इतरइति। ब्राह्मणादन्ये पुनः क्षत्रियादयः एतानि पापानि अनिच्छन्तः कृतवन्तः सर्व्वस्वहरणमर्हन्ति इदञ्च सर्व्वस्वहरणं पूर्व्वोक्तेनोत्तमसाहसेन सह वृत्तापेक्षया व्यवस्थापनीयं इच्छया पुनरेषामेतेष्वपराधेषु प्रवासनम्वधोर्हति प्रवासनम्परासननिसूदनं निर्हिंसनमिति वधपर्य्यायं प्रवासनशब्दं पठन्त्याभिधानिकाः ॥ २४२ ॥

नाददीत नृपः साधुर्म्महापातकिनो धनम्। आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥ २४३ ॥

नाददीतेति। धार्म्मिको राजा महापातकिसम्बन्धिधनं दण्डरूपं न गृह्णीयात् लोभात् पुनस्तद्गृह्णन् महापातकदोषेण संयुज्यते ॥ २४३ ॥

अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत्। श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत्॥ २४४॥

•का तर्हि दण्डधनस्य प्रतिपत्तिरित्येतदर्थमाह अप्स्विति। तद्दण्डधनं नद्यादिजले प्रक्षिप्य वरुणाय दद्यात् श्रुतवृत्तसम्पन्न ब्राह्मणाय वा दद्यात्॥ २४४॥

ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः। ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः॥ २४५॥

ईशइति। महापातकिदण्डधनस्य वरुणः स्वामी यस्माद्राज्ञामपि दण्डधारित्वात् प्रभुः तथा ब्राह्मणः समस्तवेदाध्यायी सर्व्वस्य जगतः प्रभुः अतः प्रभुत्वात्तौ दण्डधनमर्हतः॥ २४५॥

यत्र वर्जयते राजा पापकृद्भ्यो धनागमम्। तत्र कालेन जायन्ते मानवा दीर्घजीविनः॥ २४६॥

निष्पद्यन्ते च शस्यानि यथोप्तानि विशां पृथक्। बालाश्च न प्रमीयन्ते विकृतन्नच जायते॥ २४७॥

यत्रेति। निष्पद्यन्तइति। यत्र देशे प्रकृतं महापातकिधनं राजा न गृह्णाति तत्र परिपूर्णेन कालेन मनुष्या उत्प

यन्ते दीर्घायुषश्च भवन्ति। वैश्यानाञ्च यथैव धान्यादिशस्या न्युप्तानि तथैव पृथक् पृथक् जायन्ते अकालेन बाला म्रियन्ते दीर्घजीविनइत्युक्तोप्यादरार्थं बालानां पुनर्वचनं व्यङ्गञ्च न किञ्चित् भूतमुत्पद्यते ॥ २४६ ॥ २४७ ॥

ब्राह्मणान् बाधमानन्तु कामादवरवर्णजम्।
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८ ॥

ब्राह्मणानिति। शरीरपीडाधनग्रहणादिना शूद्रमिच्छातो ब्राह्मणान् बाधमानं हस्तच्छेदादिभिरुद्वेगकरैर्वधोपायैर्नृपो हन्यात् ॥ २४८ ॥

यावानबध्यस्य वधे तावान् बध्यस्य मोक्षणे।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥ २४९ ॥

यावानिति। अबध्यस्य वधे यावानधर्मो नृपतेः शास्त्रेण ज्ञातः तावानेव बध्यस्य त्यागेपि यथाशास्त्रं दण्डं कुर्व्वतो धर्मः स्यात्तस्मात्तं कुर्य्यात् ॥ २४९ ॥

उदितोयं विस्तरशो मिथो विवदमानयोः। अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥

उदितइति। अष्टादश ऋणादानादिषु व्यवहारपदेषु पर

स्परं विवदमानयोरर्थिप्रत्यर्थिनोः कार्य्यनिर्णयोयं विस्तरेणोक्तः ॥ १५० ॥

एवं धर्म्याणि कार्य्याणि सम्यक्कुर्व्वन्महीपतिः।
देशानलब्धांल्लिप्सेत लब्धांश्च परिपालयेत्॥ २५१॥

एवमिति। अनेनोक्तप्रकारेण धर्म्मादनपेतान् व्यवहारान् निर्णयन् राजा जनानुरागात् अलब्धान् देशान् लब्धुमिच्छेत् लब्धांश्च सम्यक् पालयेत् एवं सम्यग्व्यवहारदर्शनस्यालब्धदेशप्राप्त्यर्थत्वमुक्तम्॥ २५१ ॥

सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः। कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम्॥ २५२॥

सम्यगिति। जाङ्गलं शस्यसम्पन्नं इत्युक्तरीत्या सम्यगाश्रितदेशस्तत्र सप्तमाध्यायोक्तप्रकारेण कृतदुर्गश्चौरसाहसिकादिकण्टकनिराकरणे प्रकृष्टयत्नं सदा कुर्य्यात्॥ २५२॥

रक्षणादार्य्यवृत्तानां कण्टकानाञ्च शोधनात्।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः॥ २५३॥

रक्षणादिति। यस्मात्साध्वाचाराणां रक्षणाच्चौरादीनाञ्च

शासनात् प्रजापालनोद्युक्ता राजानः स्वर्गं गच्छन्ति। तस्मात्क
एटकोद्धरणे यत्नं कुर्य्यात् ॥ २५३ ॥

अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥ २५४ ॥

अशासन्निति। यथापुनर्नृपतिश्चौरादीननिराकुर्व्वन् षड्भा
गाद्युक्तं करं गृह्णाति तस्मै राष्ट्रवासिनो जनाः कुप्यन्ति
कर्म्मान्तरार्जितापस्य स्वर्गप्राप्तिरनेन दुष्कृतेन प्रतिबध्यते
॥ २५४ ॥

निर्भयन्तु भवेद्यस्य राष्ट्रम्बाहुबलाश्रितम्। तस्य
तद्वर्द्धते नित्यं सिच्यमान इव द्रुमः ॥ २५५ ॥

निर्भयमिति। यस्य राज्ञोबाहुवीर्य्याश्रयेण राष्ट्रं चौरादि
भयरहितम्भवति तस्य नित्यन्तद्वृद्धिं गच्छति उदकसेकेनैव
वृक्षः ॥ २५५ ॥

द्विविधांस्तस्करान् विद्यात्परद्रव्यापहारकान्।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ २५६ ॥

द्विविधानिति। चारा एव चौरज्ञाने हेतुत्वात् चक्षुरिव यस्यासौ

राजा चारैरेव प्रकटगूढतया द्विप्रकारान् परधनग्राहिणो जानीयात्॥ २५६ ॥

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः॥ २५७॥

प्रकाशेति। तेषां पुनश्चौरादीनां मध्याद्ये तुलाप्रतिमानोपचयापचयादिना हिरण्यादिपण्यविक्रयिणः परधनमनुचितेन गृह्णन्ति ते प्रकाशवञ्चकाः स्तेनाः चौराः सन्धिच्छेदादिना गुप्ताः अटव्याश्रयाश्च परधनं गृह्णन्ति ते प्रच्छन्नवञ्चकाः॥२५७॥

उत्कोचकाश्चोपधिकावञ्चकाः कितवास्तथा।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥ २५८॥
असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः॥२५९॥
एवमादीन्विजानीयात्प्रकाशाँल्लोककण्टकान्।
निगूढचारिणश्चान्याननार्य्यानार्य्यलिङ्गिनः॥ २६०॥

किञ्चउत्कोचकाइति। असम्यगिति। एवमिति। उत्कोचका ये कार्य्यिभ्योधनं गृहीत्वा कार्य्यमयुक्तं कुर्व्वन्ति औपाधिका

भयदर्शनात् ये धनमुपजीवन्ति वञ्चका ये सुवर्णादिद्रव्यं गृहीत्वाऽपद्रव्यप्रक्षेपेण वञ्चयन्ति कितवाः द्यूतसभाकृयदेविनः धनपुत्रलाभादिमङ्गलममलमादिश्य ये वर्त्तन्ते ते मङ्गला देशवृत्ताः भद्राः कल्याणाचारप्रच्छन्नपापाये धनग्राहिणः ईक्षणिका हस्तरेखाद्यवलोकनेन शुभाशुभफलकथनजीविनः महामात्रा हस्तिशिक्षाजीविनः चिकित्सकाः चिकित्साजीविनः असम्यक्कारिणइति महामात्रचिकित्सकविशेषणं शिल्पोपचार युक्ताश्चित्रलेखाद्युपायजीविनः तेष्वनियुज्यमानशिल्पोपाय प्रोत्साहनेन धनं गृह्णन्ति। पण्यस्त्रियश्च परवशीकरणकुशला इत्येवमादीन् प्रकाशलोकवञ्चकान् चारैर्जानीयात्। अन्या नपि प्रच्छन्नचारिणः शूद्रादीन् ब्राह्मणादिवेशधारिणो धन ग्राहिणो जानीयात्॥२५८॥ २५९॥ २६०॥

तान्विदित्वा सुचरितैर्गूढैस्तत्कर्म्मकारिभिः।
चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत्॥ २६१॥

तानिति। तानुक्तान्वञ्चकान्सभ्यैः प्रच्छन्नैस्तत्कर्म्मकारिभि र्वणिजास्तेये वणिग्भिरित्येवमादिभिः पुरुषैरेतद्व्यतिरिक्तैः सप्तमाध्यायोपदिष्टकापटिकादिभिश्चारैरनेकस्थानस्थैर्ज्ञात्वा प्रोत्साद्य स्ववशान् कुर्य्यात्॥ २६१॥

तेषां दोषानभिख्याप्य स्वेस्वेकर्म्मणि तत्त्वतः। कुर्व्वीत शासनं राजा सम्यक् सारापराधतः॥२६२॥

तेषामिति। तेषाम्प्रकाशाप्रकाशतस्कराणां स्वकर्म्मणि चौर्य्यादौ ये पारमार्थिकादोषाः सन्धिच्छेदादयः तान् लोके प्रख्याप्य तद्गतधनशरीरादिसामर्थ्यापेक्षया अपराधापेक्षया च राजा दण्डं कुर्य्यात्॥ २६२ ॥

न हि दण्डादृते शक्यः कर्त्तुं पापविनिग्रहः। स्तेनानां पापबुद्धीनान्निभृतञ्चरतां क्षितौ॥ २६३ ॥

न हीति। यस्माच्चौराणां पापाचरणबुद्धीनां विनीतवेषेण पृथिव्याञ्चरतां दण्डव्यतिरेकेण पापक्रियायां नियमं कर्त्तुमशक्यं अतएषां दण्डं कुर्य्यात्॥ २६३ ॥

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः। चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च॥ २६४ ॥

जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च। शून्यानि चाप्यगाराणि वनान्युपवनानि च॥ २६५॥

एवं विधान्नृपो देशान् गुल्मैः स्थावरजङ्गमैः। तस्करप्रतिषेधार्थञ्चारैश्चाप्यनुचारयेत्॥ २६६ ॥

सभेति। जीर्णेति। एवमिति। सभा ग्रामनगरादौ नियतं

जनसमूहस्थानमपां जलदानगृहं अपूपविक्रयवेश्म पण्यस्त्रीगृहं मद्यान्नविक्रयस्थानानि चतुष्पथाः प्रख्यातवृक्षमूलानि जनसमूहस्थानानि जीर्णवाटिका अटव्यः शिल्पगृहाणि शून्यगृहाणि आम्रादिवनानि कृत्रिमोद्यानानि एवं प्रकारान् देशान् सैन्यैः पदातिसमूहैः स्थावरजंगमैः एकस्थानस्थितैः प्रचारिभिश्चान्यैश्चारैस्तस्करनिवारणार्थं प्रचारयेत् प्रायेणैवंविधे देशेऽन्नपानस्त्रीसम्भोगाद्यन्वेषणार्थं तस्करा अवतिष्ठन्ते ॥ २६४॥२६५॥२६६॥

तत्सहायैरनुगतैर्न्नानाकर्म्मप्रवेदिभिः । विद्यादुत्सादयेच्चैव निपुणैः पूर्व्वतस्करैः ॥ २६७॥

तदिति । तेषां साहाय्यमतिपाद्यमानैस्तच्चरितानुवृत्तिभिः सन्धिच्छेदादिकर्म्मानुष्ठानवेदिभिः पूर्व्वचौरैश्चाररूपैश्चौरमायानिपुणैः तस्करान् जानीयादुत्सादयेच्च ॥ २६७ ॥

भक्ष्यभोज्योपदेशैश्च ब्राह्मणानाञ्च दर्शनैः । शौर्य्यकर्म्मापदेशैश्च कुर्य्युस्तेषां समागमम् ॥ २६८ ॥

भक्ष्येति । ते पूर्व्वचौराश्चारभूता आगच्छत वयं गच्छामः तत्र मोदकपायसादीन्यश्नीमः इत्येवम्भक्ष्यभोज्यव्याजेनास्माकं

देशे ब्राह्मणोऽस्ति सोऽभिलषितार्थसिद्धिं जानाति तत्सख्याम इत्येवं ब्राह्मणानां दर्शनैः कश्चिदेक एव बहुभिः सह योत्स्यति तत्सख्याम इत्येवं शौर्य्यकर्म्मव्याजेन तेषां चौराणां राज्ञो दण्डधारकपुरुषाः समागमं कुर्य्युः ग्राहयेयुश्च ॥ २६८ ॥

ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये। तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान्॥ २६९ ॥

य इति। ये चौरास्तत्र भक्ष्यभोज्यादौ निग्रहशङ्कया नोपसर्पन्ति ये च मूले राजनियुक्तपुराणचौरवर्गे प्रणिहिताः सावधानभूताः न तैः सह सङ्गतिं भजन्ते तांश्चौरांस्तेभ्य एव ज्ञात्वा तदेकतापन्नमित्रपित्रादिज्ञातिस्वजनसहितान् बलादाक्रम्य राजा हन्यात्॥ २६९ ॥

न होढेन विना चौरं घातयेद्धार्म्मिको नृपः। सहोढं सोपकरणं घातयेदविचारयन्॥ २७० ॥

न होढेनेति। धार्म्मिको राजा हृतद्रव्यसन्धिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावं न घातयेत् किन्तु हृतद्रव्येण चौर्य्योपकरणेन च निश्चितचौरभावमविचारयन् घातयेत्॥२७०॥

जनसमूहस्थानमपा जलदानगृहं अपूपविक्रयवेश्मपण्यस्त्रीगृहं मद्यान्नविक्रयस्थानानि चतुष्पथाः प्रख्यातवृक्षमूलानि जनसमूहस्थानानि जीर्णवाटिका अटव्यः शिल्पगृहाणि शून्यगृहाणि आम्रादिवनानि कृत्रिमोद्यानानि एवं प्रकारान् देशान् सैन्यैः पदातिसमूहैः स्थावरजंगमैः एकस्थानस्थितैः प्रचारिभिश्चान्यैश्चारैस्तस्करनिवारणार्थं प्रचारयेत् प्रायेणैवंविधे देशेऽन्नपानस्त्रीसम्भोगाद्यन्वेषणार्थं तस्करा अवतिष्ठन्ते ॥ २६४॥२६५॥२६६॥

तत्सहायैरनुगतैर्नानाकर्म्मप्रवेदिभिः। विद्यादुत्सादयेच्चैव निपुणैः पूर्व्वतस्करैः॥ २६७॥

तदिति। तेषां साहाय्यमतिपाद्यमानैस्तच्चरितानुवृत्तिभिः सन्धिच्छेदादिकर्म्मानुष्ठानवेदिभिः पूर्व्वचौरैश्चारकूपैश्चौरमायानिपुणैः तस्करान् जानीयादुत्सादयेच्च ॥ २६७ ॥

भक्ष्यभोज्योपदेशैश्च ब्राह्मणानाञ्च दर्शनैः। शौर्य्यकर्म्मापदेशैश्च कुर्य्युस्तेषां समागमम्॥ २६८ ॥

भक्ष्येति। ते पूर्व्वचौराश्चारभूता आगच्छता समद्गृहङ्गच्छामः तत्र मोदकपायसादीन्यश्नीमः इत्येवम्भक्ष्यभोज्यव्याजेनास्माकं

देशे ब्राह्मणोऽस्ति सोऽभिलषितार्थसिद्धिं जानाति तस्यश्यामइत्येवं ब्राह्मणानान्दर्शनैः कश्चिदेकएव बहुभिः सह योत्स्यति तम्पश्याम इत्येवं शौर्य्यकर्म्मव्याजेन तेषां चौराणां राज्ञोदण्डधारकपुरुषाः समागमं कुर्य्युः ग्राहयेयुश्च ॥ २६८ ॥

ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये। तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान्॥ २६९ ॥

यइति। ये चौरास्तत्र भक्ष्यभोज्यादौ निग्रहशङ्कया नोपसर्पन्ति ये च मूले राजनियुक्तपुराणचौरवर्गे प्रणिहिताः सावधानभूताः न तैः सह सङ्गतिं भजन्ते तांश्चौरांस्तेभ्यएव ज्ञात्वा तदेकतापन्नमित्रपित्रादिज्ञातिस्वजनसहितान् बलादाक्रम्य राजा हन्यात्॥ २६९ ॥

न होढेन विना चौरं घातयेद्धार्म्मिको नृपः। सहोढं सोपकरणङ्घातयेदविचारयन्॥ २७० ॥

न होढेनेति। धार्म्मिको राजा हृतद्रव्यसन्धिच्छेदोपकरणव्यतिरेकेणानिश्चितचौरभावं न घातयेत् किन्तु हृतद्रव्येण चौर्य्योपकरणेन च निश्चितचौरभावमविचारयन् घातयेत्॥२७०॥

ग्रामेष्वपि च ये केचिच्चौराणाम्भक्तदायकाः । भाण्डावकाशदाश्चैव सर्व्वांस्तानपि घातयेत्॥२७१॥

ग्रामेष्विति । ग्रामादिष्वपि ये केचिच्चौराणाञ्चौरत्वं ज्ञात्वा भक्तदाः चौर्य्योपयुक्तभाण्डादिगृहावस्थानं ये ददति तानपि नैरन्तर्य्याद्यपराधगोचरापेक्षया घातयेत् ॥ २७१ ॥

राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान्। अभ्याघातेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतं ॥ २७२ ॥

राष्ट्रेष्विति। ये राष्ट्रेषु रक्षा नियुक्ताः ये च सीमान्तवासिनोऽङ्कूराः सन्तः चौर्य्योपदेशे मध्यस्था भवन्ति तान् चोरवच्छिप्रं दण्डयेत् ॥ २७२ ॥

यश्चापि धर्म्मसमयात्प्रच्युतो धर्म्मजीवनः। दण्डेनैव तमप्योषेत्स्वकाद्धर्म्माद्धि विच्युतं ॥ २७३ ॥

यश्चापीति । याजनप्रतिग्रहादिना परस्य यागदानादि धर्म्ममुत्पाद्य यो जीवति स धर्म्मजीवनो ब्राह्मणः सोपि धर्म्ममर्य्यादायाश्च्युतो भवति तमपि स्वधर्म्मात्परिभ्रष्टं दण्डेनोपतापयेत् ॥ २७३ ॥

ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने। शक्ति
तो नाभिधावन्तो निर्व्वास्याः सपरिच्छदाः॥२७४॥

ग्रामेति। ग्रामलुण्ठने तस्करादिभिः क्रियमाणे हिताभङ्गे जलसेतुभङ्गे जाते। क्षेत्रोत्पन्नशस्यनाशने वृत्तिभङ्गे चेति मेधातिथिः। पथि चौरदर्शने तन्निकटवर्त्तिनो यथाशक्तितो ये रक्षान्न कुर्व्वन्ति ते शय्यागवाश्वादिपरिच्छदसहिता देशान्निर्व्वासनीयाः॥२७४॥

राज्ञः कोषापहर्त्तॄंश्च प्रतिकूलेषु च स्थितान्।
घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्॥२७५॥

राज्ञइति। राज्ञोधनगृहात् धनापहारिणस्तथा तदाज्ञाव्याघातकारिणः शत्रूणाञ्च राज्ञा सह वैरवृद्धिकारिणोऽपराधापेक्षया करचरणजिह्वाछेदनादिभिर्नानाप्रकारदण्डैर्घातयेत्॥२७५॥

सन्धिं छित्वा तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः।
तेषाञ्छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेत्॥२७६॥

सन्धिमिति। ये रात्रौ सन्धिच्छेदं कृत्वा परधनं तस्करा

मुष्णन्ति तेषां राजा हस्तद्वयं छित्वा तीक्ष्णे शूले तानारोपयेत् ॥ २७६ ॥

अङ्गुली ग्रन्थिभेदस्य छेदयेत् प्रथमे ग्रहे।
द्वितीये हस्तचरणौ तृतीये बधमर्हति ॥ २७७ ॥

अङ्गुलीइति। पटप्रान्तादिस्थितं सुवर्णादिकं ग्रन्थिमोचणेन यश्चोरयति स ग्रन्थिभेदः तस्य प्रथमे द्रव्यग्रहणे अङ्गुली च्छेदयेत् ते चाङ्गुष्ठतर्जन्यौ। उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकाविति याज्ञवल्क्यवचनात्। द्वितीये ग्रहणे हस्तपादौ छेदयेत्तृतीये ग्रहणे बधार्हो भवति ॥ २७७ ॥

अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान्।
सन्निधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः ॥ २७८ ॥

अग्निदानिति। ग्रन्थिभेदादिकारिणो विज्ञाय अग्निभक्तशस्त्रावस्थानप्रदान् मुष्यतइति मोषश्चौरधनं तस्यावस्थापकान् चौरवद्राजा निगृह्णीयात् ॥ २७८ ॥

तडागभेदकं हन्यादप्सु शुद्धबधेन वा। तद्वापि
प्रतिसंस्कुर्य्याद्दाप्यस्तूत्तमसाहसम् ॥ २७९ ॥

तडागेति। यः स्नानदानादिना जनोपकारकं तडागं सेतु

भेदादिना विनाशयति तानप्सु मज्जनेन प्रकारान्तरेण वा हन्यात्। यद्वा यदि तडागन्पुनः संस्कुर्य्यात्तदोत्तमसाहसन्दण्ड्यः॥ २७९ ॥

कोष्ठागारायुधागारदेवतागारभेदकान्। हस्त्यश्वरथहर्त्तृंश्च हन्यादेवाऽविचारयन्॥ २८०॥

कोष्ठेति। राजसम्बन्धिधान्यादिधनागारायुधगृहयोर्देवप्रतिमागृहस्य च बहुधनव्ययसाध्यस्य विनाशकान् हस्त्यश्वरथस्य चापहर्त्तॄन् शीघ्रमेव हन्यात् यत्तु संक्रमध्वजयष्टिदेवताप्रतिमाभेदिनः पञ्चशतदण्डं वक्ष्यति सोऽस्मादेव देवतागारभेदकस्य बधविधानान्मृन्मयपूजिताज्झितदेवताप्रतिमाविषयो द्रष्टव्यः॥ २८०॥

यस्तु पूर्व्वनिविष्टस्य तडागस्योदकं हरेत्। आगमं वाप्यपां भिंद्यात्स दाप्यः पूर्व्वसाहसं॥२८१॥

यस्त्विति। यः पुनः प्रजार्थम्पूर्व्वं केनचित्कृतस्य तडागस्य उदकमेव गृह्णाति कृत्स्नतडागोदकनाशने बधदण्डः प्रागुक्तः तथोदकगमनमार्गं सेतुबन्धादिना यो नाशयति स प्रथमसाहसन्दण्ड्यः॥ २८१॥

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि। स द्वौ कार्षापणौ दद्यादमेध्यञ्चाशु शोधयेत्॥ २८२॥

समुत्सृजेदिति। अनार्त्तः सन् योराजपथेषु पुरीषं कुर्य्यात्स कार्षापणद्वयन्दण्डं दद्यात्तच्चामेध्यं शीघ्रमेवापसारयेत्॥२८२॥

आपद्गतोऽथवा वृद्धोगर्भिणी बालएव वा। परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥ २८३॥

आपद्गतइति। व्याधितवृद्धगर्भिणीबाला न दण्डनीयाः किन्तु ते पुनः किं कृतमिति परिभाषणीयाः तच्चामेध्यं शोधनीयादिति शास्त्रमर्य्यादा॥ २८३॥

चिकित्सकानां सर्व्वेषां मिथ्याप्रचरतान्दमः। अमानुषेषु प्रथमो मानुषेषु तु मध्यमः॥ २८४॥

चिकित्सकानामिति। सर्व्वेषां कायशल्यादिभिषजां दुश्चिकित्सां कुर्व्वतान्दण्डः कर्त्तव्यः तत्र गवाश्वादिविषये दुश्चिकित्सायां प्रथमसाहसन्दण्डो मानुषविषये पुनर्म्मध्यमसाहसः॥ २८४॥

संक्रमध्वजयष्टीनाम्प्रतिमानाञ्च भेदकः। प्रतिकुर्य्याच्च तत्सर्व्वं पञ्च दद्याच्छतानि च॥ २८५॥

संक्रमेति। संक्रमो जलोपरिगमनार्थङ्काष्ठशिलादिरूपः

ध्वजः चिह्नं राजद्वारादौ यष्टिः पुष्करिण्यादौ प्रतिमाश्च चन्द्रा स्तन्मय्यादयस्तासां विनाशकः पञ्चशतपणान् दद्यात् तच्च विनाशितं सर्व्वम्पुनर्नवं कुर्यात् ॥ २८५ ॥

अदूषितानां द्रव्याणान्दूषणे भेदने तथा। मणीनामपवेधे च दण्डः प्रथमसाहसः ॥ २८६ ॥

अदूषितानामिति। अदुष्टद्रव्याणां अपद्रव्यप्रक्षेपेण दूषणे मणीनाञ्च माणिक्यादीनां अभेद्यानां विदारणे वेध्यानामपि मुक्तादीनामनवस्थानवेधने प्रथमसाहसो दण्डः कार्य्यः सर्व्वत्र परकीयद्रव्यनाशे द्रव्यान्तरदानादिना स्वामितुष्टिः कार्य्या ॥ २८६ ॥

समैर्हि विषमं यस्तु चरेद्वै मूल्यतो पि वा। स प्राप्नुयाद्दमम्पूर्व्वन्नरो मध्यममेव वा ॥ २८७ ॥

समैरिति। समैः सममूल्यदातृभिः सहोत्कृष्टापकृष्टद्रव्यदानेन योविषमं व्यवहरति सममूल्यं द्रव्यन्दत्वा यः कस्यचिद्बहुमूल्यं कस्यचिदल्पमूल्यमितिविषमं मूल्यं गृह्णाति सोऽनुबन्धविशेषापेक्षया प्रथमसाहसं मध्यमसाहसं वा दण्डं प्राप्नुयात् ॥ २८७ ॥

बन्धनानि च सर्व्वाणि राजमार्गे निवेशयेत्। दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः ॥२८८॥
प्राकारस्य च भेत्तारम्परिखाणाञ्च पूरकम्। द्वाराणाञ्चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत्॥ २८९ ॥

बन्धनानीति। प्राकारस्येति। बन्धनगृहाणि सर्व्वजनदृश्ये राजमार्गे कुर्य्यात् यत्र निगडबन्धनाद्युपेताः क्षुत्तृष्णाभिभूता दीर्घकेशनखश्मश्रवः कृशाः पापकारिणोऽन्यैरकार्य्यकारिभिरकार्य्यनिवृत्त्यर्थं दृश्येरन् राजा गृहपुरादिसम्बन्धिनः प्राकारस्य भेदकन्तदीयानामेव परिखाणां पूरयितारं तद्गतानां द्वाराणाम्भञ्जकं शीघ्रमेव देशान्निर्व्वासयेत्॥ २८८॥ २८९॥

अभिचारेषु सर्व्वेषु कर्त्तव्यो द्विशतो दमः। मूलकर्म्मणि चानाप्तैः कृत्यासु विविधासु च॥ २९०॥

अभिचारेष्विति। अभिचारहोमादिषु शास्त्रीयेषु मारणोपायेषु लौकिकेषु च मूलनिखननपदपांशुग्रहणादिषु कृतेषु अनुत्पन्नमरणफलेषु द्विशतपणग्रहणरूपोदण्डः कर्त्तव्यः। मरणे तु मानुषमारणदण्डः एवं मातापितृभार्य्यादिव्यतिरिक्तैः असत्यैर्व्यामोह्य धनग्रहणाद्यर्थं वशीकरणे तथा कृत्यास्तुचाटनापाटवादिहेतुषु क्रियमाणासु नानाप्रकारासु द्विशतपणदण्डएव कर्त्तव्यः॥ २९०॥

अबीजविक्रयी चैव बीजोत्कृष्टन्तथैव च। मर्य्यादाभेदकश्चैव विकृतम्प्राप्नुयाद्वधम्॥ २९१॥

अबीजेति। अबीजं पयोप्ररोहासमर्थं ब्रीह्यादिप्ररोहसमर्थमिति कृत्वा योविक्रीणीते तथा अपकृष्टमेव कतिपयोत्कृष्टप्रक्षेपेण सर्व्वमिदं सोत्कर्षमिति कृत्वा योविक्रीणीते यश्च ग्रामनगरादिसीमां विनाशयति स विकृतनासाकरचरणकर्णादिरूपं वधम्प्राप्नुयात्॥ २९१॥

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः। प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः॥ २९२॥

सर्व्वेति। सर्व्वकण्टकानाम्मध्ये अतिशयेन पापतमं सुवर्णकारं तुलाच्छद्मकषपरिवर्त्तापद्रव्यप्रक्षेपादिना हेमादिचौर्य्ये प्रवर्त्तमानं अनुबन्धापेक्षयाज्ञाविशेषेण सर्व्वदेहं खण्डशः छेदयेत्॥ २९२॥

सीताद्रव्यापहरणे शस्त्राणामौषधस्य च। कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत्॥ २९३॥

सीतेति। कृष्यमाणभूमिद्रव्याणां हलकुद्दालादीनामपह

रणे खड्गादीनाञ्च शस्त्राणां औषधस्य च कल्याणघृतादेः चौर्य्ये सत्युपयोगकालेतरकालापेक्षया प्रयोजनापेक्षया च राजा दण्डं कुर्य्यात्॥ २९३ ॥

स्वाम्यमात्यौ पुरं राष्ट्रङ्कोषदण्डौ सुहृत्तथा।
सप्तप्रकृतयोह्येताः सप्ताङ्गं राज्यमुच्यते॥ २९४॥

स्वामीति। स्वामी राजा अमात्योमन्त्र्यादिः पुरं राज्ञः कृत दुर्गनिवासनगरं राष्ट्रं देशः कोषो वित्तनिचयः दण्डो हस्त्यश्व रथपादातं मित्त्रन्त्रिविधं सप्तमाख्यायोक्तमित्येताः सप्त प्रकृतयो ऽङ्गानि सप्ताङ्गमिदं राज्यमित्युच्यते॥ २९४॥

सप्तानाम्प्रकृतीनान्तु राज्यस्यासां यथाक्रमम्।
पूर्व्वम्पूर्व्वं गुरुतरं जानीयाद्व्यसनं महत्॥ २९५॥

ततः किमित्याह सप्तानामिति। आसां राज्यस्य प्रकृतीनां सप्तानां क्रमोक्तानामुत्तरस्याविनाशमपेक्ष्य पूर्व्वस्याः पूर्व्वस्या विनाशरूपं व्यसनं गरीयोजानीयात्। तथाहि मित्त्रव्यसनात् स्वबलव्यसनं गरीयः सम्पन्नबलस्यैव मित्त्रानुग्रहे सामर्थ्यात्। एवम्बलात्कोषोगरीयान् कोषनाशे बलस्यापि नाशात् कोषा द्राष्ट्रं गरीयः राष्ट्रनाशे कुतः कोषोत्पत्तिः एवं राष्ट्राद्दुर्गनाशोपि

दुर्गादेव यवसेन्धनादिसम्पन्नाद्राज्यरक्षासिद्धिः दुर्गादमात्यो गरीयान् प्रधानामात्यनाशे सर्व्वाङ्गवैकल्यात्। अमात्यादपि आत्मा सर्व्वस्यात्मार्थत्वात् तस्मादुत्तरापेक्षया पूर्व्वं यत्नतो रक्षेत्॥ २९५॥

सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत्।
अन्योन्यगुणवैशेष्यान्न किञ्चिदतिरिच्यते ॥ २९६॥

सप्तेति। उक्तसप्ताङ्गवतो लोके राज्यस्य त्रिदण्डवदन्योन्य सम्बन्धस्य परस्परविलक्षणोपकरणान्न किञ्चिदङ्गमधिक म्भवति यद्यपि पूर्व्वश्लोके पूर्व्वपूर्व्वाङ्गस्याधिक्यमुक्तं तथाप्येषाम ङ्गानां मध्यादन्याङ्गसम्बन्धिनमुपकारमन्यदङ्गं कर्त्तुं न शक्नोति तस्मादुत्तरोत्तराङ्गमप्यपेक्षणीयमित्येवम्परोऽयमाधि क्यनिषेधः अत्र प्रसिद्धं यतित्रिदण्डमेव दृष्टान्तः तद्धि चतुर ङ्गुलगोवालवेष्टनादन्योन्यसम्बन्धन्न च तन्मध्ये त्रिदण्डधारण शास्त्रार्थे कश्चिद्दण्डोधिको भवति॥ २९६॥

तेषु तेषु तु कृत्येषु तत्तदङ्गं विशिष्यते। येन यत्साध्यते कार्य्यं तत्तस्मिन् श्रेष्ठमुच्यते॥ २९७॥

तेष्विति। यस्मात्तेषु तेषु सम्पाद्येषु कार्य्येषु तत्तदङ्गं साति शयं भवति तत्कार्य्यमन्येन कर्त्तुमशक्तः एवञ्च येनाङ्गेन

यत्कार्य्यं सम्पाद्यते तस्मिन् कार्य्ये तदेव प्रधानमुच्यते। ततश्चा न्योन्यगुणविशेषादियदुक्तं तदेवानेन स्फुटीकृतम् ॥ २९७ ॥

चारेणोत्साहयोगेन क्रिययैव च कर्म्मणां। स्वशक्तिम्परशक्तिञ्च नित्यं विद्यान्महीपतिः ॥ २९८ ॥

चारेणेति। समप्रमाध्यायोक्तकापटिकादिना बलस्योत्साहयोगेन कर्म्मणाञ्च हस्तिबन्धवणिक्पथादीनामनुष्ठानेन जातां शत्रोरात्मनश्च शक्तिं राजा सदा जानीयात् ॥ २९८ ॥

पीडनानि च सर्व्वाणि व्यसनानि तथैव च। आरभेत ततः कार्य्यं सञ्चिन्त्य गुरुलाघवम् ॥ २९९ ॥

पीडनानीति। पीडनानि मरकादीनि कामक्रोधोद्भवानि दुःखानि च स्वपरचक्रगतानि तेषाञ्च गुरुलघुभावं पर्य्यालोच्य सन्धिविग्रहादिकार्य्यमारभेत ॥ २९९ ॥

आरभेतैव कर्म्माणि श्रान्तः श्रान्तः पुनःपुनः। कर्म्माण्यारभमाणं हि पुरुषं श्रीर्न्निषेवते ॥ ३०० ॥

आरभेतेति। राजा स्वराज्यवृद्धिपरापचयनिमित्तानि

कार्य्याणि कथञ्चिदिदं सञ्जातमिति कृतान्यपि आरभ्यात्मना खिन्नः पुनः पुनस्तान्यारभेतैव यस्मात्कर्म्माण्यारभमाणं पुरुषं श्रीर्न्नितरां सेवते तथा च नाब्राह्मणे नानाश्रये श्रीरस्तीति प्ररोचितमपि शोचमेति नच युगानुरूपेण कर्म्माणि फलन्तीति राज्ञोदासितव्यं ॥ ३०० ॥

कृतं त्रेतायुगञ्चैव द्वापरङ्कलिरेव च। राज्ञोवृत्तानि सर्व्वाणि राजा हि युगमुच्यते ॥ ३०१ ॥

यतः कृतमिति। कृतत्रेताद्वापरकलयोराज्ञएव चेष्टितविशेषाः तैरेव सत्यादिविशेषप्रवृत्तेः तस्माद्राजैव कृतादियुगमभिधीयते ॥ ३०१ ॥

कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम्। कर्म्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥ ३०२ ॥

कीदृक् चेष्टितं कृतादियुगमित्यतआह कलिरिति। अज्ञानालस्यादिना यदा निरुद्यमो राजा भवति तदा कलिः स्यात्। यदा जानन्नपि नानुतिष्ठति तदा द्वापरं। यदाकर्म्मानुष्ठाने अवस्थितस्तदा त्रेता। यथाशास्त्रं पुनः कर्म्माण्यनुतिष्ठन् विचरति तदा कृतयुगन्तस्माद्राज्ञा कर्म्मानुष्ठानपरेण भाव्यमिति अत्र तात्पर्य्यं न तु वास्तवकृतयुगाद्यपलापः ॥३०२॥

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च। चन्द्रस्याग्नेः पृथिव्याश्च तेजो वृत्तं नृपश्चरेत् ॥ ३०३ ॥

इन्द्रस्येति। इन्द्रादिसम्बन्धिनो वीर्य्यस्यानुरूपञ्चरितं राजानुतिष्ठेत्तथा च राजा कण्टकोद्धारेण प्रतापानुरागाभ्यां संयुक्तः स्यात् ॥ ३०३ ॥

वार्षिकांश्चतुरो मासान् यथेन्द्रोऽभिप्रवर्षति। तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥ ३०४ ॥

कथमिन्द्रादिचरितमनुतिष्ठेदित्याह वार्षिकानिति। ऋतुसम्वत्सरपक्षाश्रयणेन इदमुच्यते यथा श्रावणादींश्चतुरो मासानिन्द्रः शस्यादिसिद्ध्यर्थे वर्षति एवमिन्द्रचरितं अनुतिष्ठन् राजा स्वदेशप्रायातसाधूनभिलषितार्थैः पूरयेत् ॥ ३०४ ॥

अष्टौ मासान् यथादित्यस्तोयं हरति रश्मिभिः। तथा हरेत् करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ३०५ ॥

अष्टाविति। यथासूर्य्यो मार्गशीर्षाद्यष्टमासान् रश्मिभिः स्तोकं स्तोकं रसमीषत्तापेनादत्ते तथा राजा शास्त्रीयकरानपीडया सदा राष्ट्राद्गृह्णीयात् यस्मादेतदस्यार्कव्रतम् ॥ ३०५ ॥

प्रविश्य सर्व्वभूतानि यथा चरति मारुतः।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ ३०६ ॥

प्रविश्येति। यथा प्राणाख्यो वायुः सर्व्वजन्तुष्वन्तःप्रविश्य विचरति एवञ्चारद्वारेण स्वपरमण्डलेषु चिकीर्षितार्थं ज्ञानार्थमन्तः प्रवेष्टव्यम्। यस्मादेतन्मारुतच्चरितम् ॥ ३०६ ॥

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥ ३०७ ॥

यथेति। यद्यपि यमस्य शत्रुमित्रे न स्तस्तथापि तन्निन्द कार्च्चकयोः शत्रुमित्रव्यपदेशः यथा यमः शत्रुमित्रमरणकाले तुल्यवन्नियच्छति एवं राज्ञाऽपराधकाले रागद्वेषपरिहारेण प्रजाः शासनीयाः यस्मादेतदस्य याम्यं व्रतम् ॥ ३०७ ॥

वरुणेन यथा पाशैर्व्वद्ध एवाभिदृश्यते। तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ३०८ ॥

वरुणेनेति। यो वरुणस्य रज्जुभिर्व्वन्धयितुमिष्टः स यथा तेनाविशङ्कितः पाशैर्बद्ध एव लक्ष्यते तथा पापकारिणोऽवि शङ्किता एव यावन्न पारयन्ते तावच्छासयेत्। यस्मादेतदस्य वारुणं व्रतम् ॥ ३०८ ॥

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥ ३०९ ॥

परिपूर्णमिति। यथा पूर्णेन्दुदर्शनेन मनुष्या हर्षमुत्पादयन्त्येवममात्यादयो यस्मिन् दृष्टे तुष्टिमुपगच्छन्ति स चन्द्राचारचारी नरेन्द्रः ॥ ३०९ ॥

प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्म्मसु। दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ ३१० ॥

प्रतापयुक्त इत्यादि। पापकारिषु सदा दण्डपातनेन प्रचण्डोऽसहनः स्यात्तथा प्रतिकूलामात्यहिंसनशीलो भवेत् तदस्याग्निसम्बन्धि व्रतं स्मृतम् ॥ ३१० ॥

यथा सर्व्वाणि भूतानि धरा धारयते समम्।
तथा सर्व्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम्॥३११॥

यथेति। यथा पृथिवी सर्व्वाणि उच्चावचानि स्थावरजङ्गमानि उत्कृष्टापकृष्टानि समं कृत्वा धारयते तद्वत् विद्वद्धनिकगुणवद्भूतानि तदितराणि च दीनानाथादिसर्व्वभूतानि रक्षणधनदानादिना सामान्येन धारयतः पृथिवीसम्बन्धिव्रतम्भवति ॥ ३११ ॥

दातव्यं सर्व्ववर्णेभ्यो[नि]त्यमतन्द्रितः। स्तेनान् राजातदुपयुञ्जानश्चौर[ा]एव च ॥ ३१२ ॥

दातव्यमिति। [...]पायरन्यैश्चानुक्तैरपि स्वबुद्धिप्रभवैर्युक्तो राजाऽनलसः सन् स्वराष्ट्रे ये चौरा वसन्ति ये च परराष्ट्रे वसन्तस्तद्देशमागत्य मुष्णन्ति तान् उभयप्रकारान्निगृह्णीयात् सोऽग्निर्भवति वायुश्चेत्यादिना पूर्व्वं सिद्धवदुक्तमग्न्यादिरूपत्वं राज्ञः इह तु तद्गुणयोगेन स्फुटीकृतमित्यपुनरुक्तिः ॥ ३१२ ॥

परामप्यापदम्प्राप्तो ब्राह्मणान्न प्रकोपयेत्। ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ३१३ ॥

परामिति। कोषक्षयादिना प्रकृष्टामप्यापदम्प्राप्तो राजा ब्राह्मणान्न प्रकोपयेत् यस्मात्ते रुष्टाः सबलवाहनं एनं सद्यएव शापाभिचाराभ्यां हन्युः ॥ ३१३ ॥

यः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च महोदधिः। क्षयी चाप्यायितः सोमः कोन नश्येत्प्रकोप्य तान् ॥ ३१४ ॥

तथाहि यैरिति। यैर्ब्राह्मणैरभिशापेन सर्व्वभक्ष्योऽग्निः कृतः समुद्रश्चापेयजलश्चन्द्रश्च क्षययुक्तः पश्चात्पूरितः तान् कोपयित्वा को न नश्येत् ॥ ३१४ ॥

लोकानन्यान् सृजेयुर्ये दृष्ट्वा हृष्यन्ति मानवाः ।
देवान् कुर्य्युरदेवांश्च कः क्षिण्वंस्तान् समृध्नुयात् ॥ ३१५ ॥

किञ्च लोकानिति । ये स्वर्गादिलोकान् दण्डानहि लोक पालान् सृजन्तीति श्रूयते देवांश्च शापेन मानुषादीन् कुर्व्वन्ति तान् पीडयन् कः समृद्धिमाप्नुयात् ॥ ३१५ ॥

यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्व्वदा ।
ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः॥३१६॥

अपिच यानित्यादि । यान् ब्राह्मणान् यजनयाजनकर्त्तृकानाश्रित्याग्नौ प्रास्ताहुतिरितिन्यायेन पृथिव्यादिलोका देवाश्च स्थितिं लभन्ते वेद एव च येषां अभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च तान् जीवितुमिच्छन् को हिंस्यात् ॥ ३१६ ॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतम्महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतम्महत् ॥ ३१७ ॥

एवन्तर्हि विद्वांसं ब्राह्मणं सेवेतेत्यतआह अविद्वानिति । यथाहितो ऽनाहितो वाग्निर्महती देवता एवं मूर्खो विद्वांश्च ब्राह्मणः प्रकृष्टादेवतेति ॥ ३१७ ॥

दातव्यं सर्व्ववर्णेभ्योराज्ञा चौरैर्हृतन्धनम्।
राजातदुपयुञ्जानश्चौरस्याप्नोति किल्बिषम्॥ ४० ॥

दातव्यमिति। यद्धनञ्चौरैर्लोकानामपहृतं तद्राज्ञा चौरेभ्यआहृत्य धनस्वामिभ्योदेयम्। तद्धनं राजा स्वयमुपयुञ्जानश्चौरस्य पापं प्राप्नोति॥ ४० ॥

जातिजानपदान् धर्म्मान् श्रेणीधर्म्मांश्च धर्म्मवित्।
समीक्ष्य कुलधर्म्मांश्च स्वधर्म्मं प्रतिपादयेत्॥ ४१ ॥

जातिजानेति। जातिधर्म्मान् ब्राह्मणादिजातिनियतान् याजनादीन् जानपदांश्च नियतदेशव्यवस्थितान् आम्नायाविरुद्धान्। देशजातिकुलधर्म्मांश्च आम्नायैरप्रतिषिद्धाः प्रमाणमिति गौतमस्मरणात्। श्रेणीधर्म्मांश्च वणिगादिधर्म्मान् प्रतिनियतकुलव्यवस्थितान् ज्ञात्वा तदविरुद्धान् राजा व्यवहारेषु तत्तद्धर्म्मान् व्यवस्थापयेत्॥ ४१ ॥

स्वानि कर्म्माणि कुर्व्वाणादूरे सन्तोपि मानवाः।
प्रियाभवन्ति लोकस्य स्वे स्वे कर्म्मण्यवस्थिताः॥४२॥

तस्मात्स्वानीत्यादि। जातिदेशकुलधर्म्मादीन्यात्मीयकर्म्माणि अनुतिष्ठन्तः स्वे स्वे च नित्यनैमित्तिकादौ कर्म्मणि वर्त्तमानाः दूरेपि सन्तः सान्निध्यनिबन्धनस्नेहाभावेपि लोकस्य प्रिया भवन्ति॥ ४२ ॥

नोत्पादयेत् स्वयं कार्य्यं राजा नाप्यस्य पूरुषः।
नच प्रापितमन्येन ग्रसेदर्थं कथञ्चन ॥ ४३ ॥

प्रासङ्गिकमिदमभिधाय पुनःप्रकृतमाह नोत्पादयेदिति। राजा राजनियुक्तोवा पुरुषोधनलोभादिना कार्य्यमृणादिविवादं नोत्पादयेत्। तदाह कात्यायनः। न राजा तु वशित्वेन धनलोभेन वा पुनः। स्वयंकर्म्माणि कुर्व्वीत नराणामविवादिनाम्। नचार्थिना प्रत्यर्थिना वा आवेदितं विवादन्धनादिलोभेनोपेक्षेत ॥ ४३ ॥

यथा नयत्यसृक्पातैर्म्मृगस्य मृगयुः पदम्।
नयेत्तथानुमानेन धर्म्मस्य नृपतिः पदम् ॥ ४४ ॥

यथेत्यादि। यथा मृगस्य शस्त्रहतस्य रुधिरपातैः व्याधः पदं स्थानं प्राप्नोति तथानुमानेन दृष्टप्रमाणेन वा राजा धर्म्मस्य तत्त्वं निश्चिनुयात् ॥ ४४ ॥

सत्यमर्थञ्च सम्पश्येदात्मानमथसाक्षिणः।
देशं रूपञ्च कालञ्च व्यवहारविधौ स्थितः ॥ ४५ ॥

सत्यमित्यादि। व्यवहारदर्शनप्रवृत्तोराजा छलमपहाय सत्यम्पश्येत् तथार्थञ्च। अर्थश्चादिलाम्भलर्थीयोऽच्। अर्थवन्तं

र्णहिरण्यादिधनविषयत्वं व्यवहारम्पश्येत् न लहमनेनाचि क्षिकोचनेनोपहसितइत्यादिखल्पापराधं। आत्मानञ्च तत्त्वनि र्णयैस्स्वर्गादिफलभागिनं साक्षिणः सत्यवादिनः देशं कालञ्च देशकालोचितं स्वरूपं व्यवहारस्वरूपं गुरुलघुतादिकम्पश्येत् ॥ ४५ ॥

सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः। तद्देश कुलजातीनामविरुद्धम्प्रकल्पयेत् ॥ ४६ ॥

सद्भिरित्यादि। विद्वद्भिर्द्धर्मप्रधानैर्द्विजातिभिर्यद्दृष्टमा नद्यास्त्वमनुष्ठितं तद्देशकुलजात्यविरुद्धमादाय व्यवहारनिर्णयं प्रकल्पयेत्। एतत्सकलव्यवहारसाधारणं परिभाषात्मक मुक्तं ॥ ४६ ॥

अधमर्णार्थसिद्ध्यर्थमुत्तमर्णेन चोदितः। दापये द्धनिकस्यार्थमधमर्णाद्विभावितम् ॥ ४७ ॥

सम्प्रति ऋणादानमधिकृत्याह अधमर्णेति। अधमर्णार्थ सिद्ध्यर्थंप्रयुक्तधनसिद्ध्यर्थं धनस्वामिना राजा बोधितोवक्ष्यमाण लेख्यादिप्रमाणप्रतिपादितन्धनमुत्तमर्णस्याधमर्णं प्रदापयेत्। अधमर्णादुत्तमर्णाय दापयेदित्यर्थः ॥ ४७ ॥

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः। तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥ ४८ ॥

कथन्दापयेदित्याह यैर्यैरिति। यैर्वक्ष्यमाणैरुपायैः संप्रयुक्तमर्थमुत्तमर्णोलभते तैस्तैरुपायैर्वशीकृत्य तमर्थं दापयेत् ॥ ४८ ॥

धर्म्मेण व्यवहारेण छलेनाचरितेन च। प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ ४९ ॥

तानुपायानाह धर्म्मेणेत्यादि। धर्म्मादिना प्रयुक्तमर्थं साधयेत्तत्र धर्मानाह वृहस्पतिः। सुहृत्सम्बन्धिसंदिष्टैः सान्ना चानुगमेन च। प्रायेण वा ऋणी दाप्योधर्मएषउदाहृतः। देये धनेऽधमर्णस्य विप्रतिपत्तौ व्यवहारेण। तथाच वक्ष्यति। अर्थेपव्ययमानन्त्विति। मेधातिथिस्तु। निःस्वोयः सव्यवहारेण दापयितव्यः अन्यत्कर्म्मोपकरणन्धनं दत्वा कृषिवाणिज्यादिना व्यवहारयितव्यः तदुत्पन्नं धनं तस्मात् गृह्णीयादित्याह। छलादीनि त्रीण्याह वृहस्पतिः। छद्मना याचितञ्चार्थमानीय ऋणिकाद्धली। अन्याहृतादि वा हृत्य दाप्यते तत्र सोपधिः। दारपुत्रपशून् हत्वा कृत्वा द्वारोपवेशनम्। यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते। वद्धा स्वगृहमानीय ताडनाद्यैरुपक्रमैः। ऋणिकोदाप्यते यत्र बलात्कारः सकीर्त्तितः॥ ४९ ॥

यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात्। न स राज्ञाभियोक्तव्यः स्वकं संसाधयन्धनम् ॥ ५० ॥

य इत्यादि। यउत्तमर्णः सम्प्रतिपन्नमर्थमधमर्णात्स्वय बलादिना साधयति स स्वीयन्धनं सम्यक्साधयन् अस्मान्न निवेद्य किमिति बलादिकं कृतवानसीति न राज्ञा निषेद्धव्यः ॥ ५० ॥

अर्थेऽपव्ययमानन्तु करणेन विभावितम्। दापये द्धनिकस्यार्थन्दण्डलेशञ्च शक्तितः ॥ ५१ ॥

अर्थइति। नाहमस्मै धारयामीति धनविषये अपह्नुवानं अधमर्णं करणेन लेख्यसाक्षिदिव्यादिना प्रतिपादितमर्थं उत्त मर्णस्य राजा प्रदापयेत्। दण्डलेशञ्च अपह्नवे तु द्विगुण मिति वक्ष्यमाणदशमभागदण्डान्न्यूनमपि दण्डं पुरुषशक्त्या दापयेत् ॥ ५१ ॥

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि। अभि योक्ता दिशेद्देश्यं करणं वान्यदुद्दिशेत् ॥ ५२ ॥

अपेति। उत्तमर्णस्य धनं देहीति सभायामाह्वानकेन उक्तस्याधमर्णस्य नास्मै धारयामीति अपलापे सति अभि

योक्तार्थी देशस्थानप्रयोगदेशवर्त्तिसाक्षिणन्निर्द्दिशेत्। प्रायेण साक्षिभिरेव स्त्रीमूर्खादिसाधारणऋणनिर्णयात् प्राक् साक्ष्युपन्यासः अन्यदा करणमयत्रादि कथयेत्॥ ५२॥

अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः। यश्चाधरोत्तरानर्थान् विगीतान्नावबुध्यते॥ ५३॥

अपदिश्यापदेश्यञ्च पुनर्यस्त्वपधावति। सम्यक् प्रणिहितञ्चार्थम्पृष्टः सन्नाभिनन्दति॥ ५४॥

असम्भाष्ये साक्षिभिश्च देशे सम्भाषते मिथः। निरुच्यमानं प्रश्नञ्च नेच्छेद्यश्चापि निष्पतेत्॥ ५५॥

ब्रूहीत्युक्तश्च न ब्रूयात् उक्तञ्च न विभावयेत्। नच पूर्व्वापरं विद्यात्तस्मादर्थात्स हीयते॥ ५६॥

अदेश्यमिति। अपदिश्येति। असम्भाष्यइति। ब्रूहीत्यादि। अदेश्यं यच देशे अधमर्णस्य ऋणग्रहणकाले सर्व्वदावस्थानन्न सम्भवतीति। निर्दिश्य वा देशादिकं नैतन्मया निर्दिष्टमिति अपनयति। यश्च पूर्व्वोत्तरान् स्वोक्तानर्थान् विरुद्धान्नावगच्छति। यश्च मम हस्तात्सुवर्णस्य पलमनेन गृहीतमिति निर्द्दिश्य मत्पुत्रहस्ताद्गृहीतमित्येवमादिना पुनरपसरति। यश्च सम्यक्प्रतिज्ञातमर्थं कस्मात्त्वया राज्ञावसाक्षिक

न्दत्तमित्येवमादि प्राड्विवाकेन पृष्टः सन्न समाधत्ते। यश्च सम्भाषणानर्हनिर्जनादिदेशे साक्षिभिः सहान्योन्यं सम्भाषते। यश्च भाषार्थस्थिरीकरणाय नितरामुच्यमानं प्राड्विवाकेन प्रश्नन्नेच्छेत्। यश्च निष्पतेत् न युक्तं स्थातुमत्र यत्ते दृश्येऽन्यथो व्यवहार इत्याख्याय यथाख्यानात् स्थानान्तरङ्गच्छेत्। यश्च ब्रूहीत्युक्तोन्न किञ्चिद्ब्रवीति उक्तं साध्यं न प्रमाणेन प्रतिपादयति। पूर्व्वं साधनं अपरं साध्यं तद्योन जानाति असाधनमेव साधनत्वेन निर्दिशति असाध्यमेवममानेन शशशृङ्गकृतन्त्वनुदेयमित्यादि साध्यत्वेन निर्दिशति सतस्मात्साध्यादर्थाद्धीयते॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥

साक्षिणः सन्ति मेत्युक्त्वा दिशेत्युक्तोदिशेन्न यः।
धर्म्मस्थः कारणैरेतैर्हीनन्तमपि निर्दिशेत् ॥ ५७ ॥

साक्षिणःसन्तीति। साक्षिणोमम विद्यन्तइत्युक्त्वा तान्निर्दिशेत्युक्तोयोन निर्दिशति तं पूर्वोक्तैरेभिः कारणैर्द्धर्म्मस्थः प्राड्विवाकः पराजितं कथयेत्। ज्ञातारः सन्ति मेत्युक्त्वा इति वा पाठः। अत्र छान्दसमिकारस्य पररूपत्वं॥ ५७॥

अभियोक्ता न चेद्ब्रूयाद्वध्योदण्ड्यश्च धर्म्मतः। न चेत्त्रिपक्षात्प्रब्रूयाद्धर्म्मं प्रति पराजितः ॥ ५८ ॥

अभियोक्तेति। योऽर्थी सन् राजस्थाने निवेद्य भाषायां न ब्रूयात्तदा विषमगौरवापेक्षया वध्योलघुनि विषये दण्ड्यश्च

धर्मतः स्यात्प्रत्यर्थी पुनर्यदि पक्षत्रयमध्ये न ब्रूयात्तदा धर्मत एव पराजितः स्यात् न तु छलेन ॥ ५८ ॥

योयावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत्।
तौ नृपेण ह्यधर्म्मज्ञौ दाप्यौ तद्द्विगुणन्दमम् ॥ ५९॥

यद्दति। यः प्रत्यर्थी यत्परिमाणधनमपनयति अर्थी वा यत्परिमाणधने मिथ्यावदति तावधार्मिकौ अपह्नुतमिथ्योक्त धनाद्द्विगुणन्दण्डरूपन्दापनीयौ। अधर्मज्ञाविति वचनात् ज्ञानपूर्व्वापह्नवमिथ्योक्तिविषयमिदम्। प्रमादादिना आलाप मिथ्यानियोगे अपह्नवे तद्द्विगुणमिति शते दशमभागं वक्ष्यति ॥ ५९ ॥

पृष्टोऽपव्ययमानस्तु कृतावस्थोधनैषिणा। त्र्यवरैः साक्षिभिर्भाव्योनृपब्राह्मणसन्निधौ ॥ ६० ॥

पृष्टइति। धनार्थिनोत्तमर्णेण राजपुरुषापकर्षं कृताह्वानः प्राड्विवाकेन पृष्टः सन् यदा न धारयामीत्यपह्नुवानोभवति तदा नृपत्यधिकृतब्राह्मणसमक्षं त्र्यवरैः साक्षिभिः त्रयोऽवरा न्यूना येषान्तैरर्थिना विभावनीयः ॥ ६० ॥

यादृशा धनिभिः कार्य्या व्यवहारेषु साक्षिणः।
तादृशान्सम्प्रवक्ष्यामि यथावाच्यमृतञ्च तैः ॥ ६१ ॥

यादृशा इति। धनिभिरुत्तमर्णादिभिः ऋणादानादि व्यवहारेषु यथाविधाः साक्षिणः कर्त्तव्याः तथा विधान् वदिष्यामि। यथा च तैःसत्यं वक्तव्यं तमपि प्रकारं वक्ष्यामि ॥६१॥

गृहिणः पुत्त्रिणोमौलाः क्षत्रविट्शूद्रयोनयः।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥६२॥

गृहिणइति। कृतदारपरिग्रहाः पुत्रवन्तः तद्देशजाः क्षत्रियवैश्यशूद्रजातीयाः अर्थिनिर्दिष्टाः सन्तः साक्षित्वयोग्या भवन्ति। ते हि दारपुत्रविनाशभयात्तद्देशवासिना विरोधाच्च नान्यथा वदन्ति। न तु ये केचित् ऋणादानादिव्यवहारेषु साक्षिणः स्युः आपदितु वाग्दण्डपारुष्यस्त्रीसंग्रहणादिषू क्तव्यतिरिक्ताअपि साक्षिणोभवन्ति ॥ ६२ ॥

आप्ताः सर्व्वेषु वर्णेषु कार्य्याः कार्य्येषु साक्षिणः।
सर्व्वधर्म्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ ६३ ॥

आप्ता इत्यादि। क्षत्रविट्शूद्रयोनयइति उक्तत्वात्ततो ब्राह्मणपरिग्रहार्थं सर्व्वेषु वर्णेषु इत्यभिधानं सर्व्ववर्णेषु

मध्ये ये यथार्थावगतवादिनः सर्व्वधर्म्मज्ञालोभरहिता. ते साक्षिणः कर्त्तव्याः। उक्तविपरीतांश्च वर्ज्जयेत्॥ ६३॥

नार्थसम्बन्धिनोनाप्ता नसहाया न वैरिणः। न दृष्टदोषाः कर्त्तव्या न व्याध्यार्त्ता न दूषिता॥ ६४॥

नार्थसम्बन्धीत्यादि। ऋणाद्यर्थसम्बन्धिनोऽधमर्णाद्याः आप्ता मित्राणि सहायास्तत्परिचारकाः शत्रवः स्थानान्तरावगतकौटसाक्ष्याः रोगपीडितामहापातकादिदूषिताश्च साक्षिणोन कर्त्तव्याः। लोभरागद्वेषस्मृतिभ्रंशादीनामन्यथाभिधानहेतूनां सम्भवात्॥ ६४॥

न साक्षी नृपतिः कार्य्योन कारुककुशीलवौ। न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्योविनिर्गतः॥६५॥

न साक्षीति। प्रभुत्वात्साक्षिधर्म्मेण प्रष्टुमयोग्यत्वात् न राजा साक्षी कार्य्यः कारुः सूपकारादिः कुशीलवोनटादिः तयोः स्वकर्म्मव्यग्रत्वात् प्रायेण धनलोभवत्त्वाच्चासाक्षित्वम्। श्रोत्रियोऽध्ययनाग्निहोत्रादिकर्म्मव्यग्रतया न साक्षी। लिङ्गस्थोब्रह्मचारी। सङ्गविनिर्गतः परिव्राजकः। तयोरपि स्वकर्म्मव्यग्रत्वात्

ब्रह्मनिष्ठत्वाच्चासाक्षित्वम्। श्रोत्रियग्रहणादध्ययनाग्निहोत्रादिव्यतिरेतरब्राह्मणस्यानिषेधः ॥ ६५ ॥

नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्म्मकृत्।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥६६॥

नाध्यधीनइति। अध्यधीनोऽत्यन्तपरतन्त्रोगर्भदासोन वक्तव्योविहितकर्म्मत्यागाल्लोकविगर्हितः दस्युः क्रूरकर्म्मा न क्रुद्धो नापि तस्करइति वक्ष्यमाणत्वात्। विकर्म्मकृत् निषिद्धकर्म्मकारी। एतेषां रागद्वेषादिसम्भवात्। न वृद्धः प्रायेण स्मृतिभ्रंशसम्भवात्। न वालोऽप्राप्तव्यवहारत्वात्। नैकोविनाशप्रवासशङ्कया तस्य व्यवरैरिति विधानात् आर्थप्रतिषेधसिद्धौ कस्याञ्चिदवस्थायां द्वयोरभ्यनुज्ञानार्थं निषेधवचनम्। अन्त्यस्चाण्डालादिः धर्म्मानभिज्ञातत्वात् विकलेन्द्रियउपलब्धिवैकल्यात् न साक्षी कार्य्यः ॥ ६६ ॥

नार्त्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः।
न श्रमार्त्तो न कामार्त्तो न क्रुद्धो नापि तस्करः॥६७॥

नार्त्तइति। आर्त्तोबन्धुविनाशादिना। मत्तोमद्यादिना। उन्मत्तोभूतावेशादिना। क्षुधापिपासादिना पीडितः।

अमार्त्तः वर्त्मगमनादिना खिन्नः कामाक्रान्तः उत्पन्नक्रोधः चौरश्च न साक्षी कार्य्य इति सर्व्वत्र संबध्यते। तत्रार्त्तादिर्बुद्धि वैकल्यात् चौरस्त्वधार्म्मिकत्वात् ॥ ६७ ॥

स्त्रीणां साक्ष्यं स्त्रियः कुर्य्युर्द्विजानां सदृशा द्विजाः।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥६८॥

स्त्रीणामित्यादि। स्त्रीणामन्योन्यव्यवहारे ऋणादानादौ स्त्रियः साक्षिणो भवन्ति। द्विजानां ब्राह्मणक्षत्रियविशां सदृशाः सजातीयाः साक्षिणः स्युः। एवं शूद्राः साधवः शूद्राणां। चाण्डालादीनाञ्चाण्डालादयः साक्षिणो भवेयुः। एतच्च सजातीयसाक्ष्यभिधानमुक्तलक्षणसजातीयसाक्षिसम्भवे। असम्भवे विजातीया अपि साक्षिणो भवन्ति। अतएव याज्ञवल्क्यः। यथाजाति यथावर्णं सर्व्वे सर्व्वेषु वा स्मृताः ॥ ६८ ॥

अनुभावी तु यः कश्चित्कुर्य्यात्साक्ष्यं विवादिनां।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये ॥ ६९ ॥

अनुभावीति। गृहाभ्यन्तरेऽरण्यादौ वा चौरादिकृतोपद्रवे देहोपघाते वाततायादिकृते यः कश्चित् उपलभते सवा

दिनोरेव साक्षी भवति नतु ऋणादानादिवदुक्तलक्षणोपेतः । ॥ ६९ ॥

स्त्रियाप्यसम्भवे कार्य्यम्बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ ७० ॥

तदेवोदाहरणात्स्पष्टयति स्त्रियापीति । अन्तर्वेश्मादावुक्तसाक्ष्यभावे सति स्त्रीबालवृद्धशिष्यबन्धुदासकर्म्मकरा अपि साक्षिणः स्युः ॥ ७० ॥

बालवृद्धातुराणाञ्च साक्ष्येषु वदतां मृषा ।
जानीयादस्थिरां वाचमुत्सिक्तमनसान्तथा ॥ ७१ ॥

नन्वस्थिरबुद्धित्वादिना स्त्रीबालादीनां कथमत्रापि साक्षित्वमित्यत्राह बालवृद्धेति । बालवृद्धव्याधितानां उपप्लुतमनसाञ्च मत्तोन्मत्तादीनां साक्ष्ये अनृतं वदतां अस्थिरा वाग्भवति अतस्तामनुमानेन जानीयात् । यथोक्तम् । वाह्यैर्विभावयेल्लिङ्गैरिति ॥ ७१ ॥

साहसेषु च सर्व्वेषु स्तेयसंग्रहणेषु च । वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः ॥ ७२ ॥

साहसेष्विति । गृहदाहादिषु साहसेषु चौर्य्यस्त्रीसंग्रहणवाग्दण्डपारुष्ये च गृहिण इत्युक्तसाक्षिपरीक्षा न कार्य्या स्त्रियाप्यसम्भवे कार्य्यमित्यस्यैवायमुदाहरणप्रपञ्चः ॥ ७२ ॥

बहुत्वम्परिगृह्णीयात्साक्षिद्वैधे नराधिपः। समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥ ७३ ॥

बहुत्वमित्यादि। साक्षिणाम्परस्परविरुद्धाभिधाने बहुभिर्य्यदुक्तन्तदेव निर्णयार्थत्वेन राजा गृह्णीयात्। समेषु तु विरुद्धाभिधायिषु गुणवतः प्रमाणीकुर्य्यात्। गुणवतामेव विप्रतिपत्तौ द्विजोत्तमान् द्विजेषु ये उत्तमाः क्रियावन्त इत्यर्थः। अतएव बृहस्पतिः। गुणिद्वैधे क्रियायुक्ता इति। गोविन्दराजस्तु। गुणवतां विप्रतिपत्तौ द्विजोत्तमान् ब्राह्मणान् प्रमाणीकुर्य्यादित्याह ॥ ७३ ॥

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति। तत्र सत्यं ब्रुवन्साक्षी धर्मार्थाभ्यान्न हीयते ॥ ७४ ॥

समक्षेति। चक्षुर्ग्राह्ये साक्षाद्दर्शनात् श्रोत्रग्राह्ये च श्रवणात् साक्ष्यं सिध्यति तत्र साक्षी सत्यं वदन् धर्मार्थाभ्यां न मुच्यते सत्यवचनेन धर्म्मोपपत्तेर्द्दण्डाभावे चार्थहान्यभावात् ॥ ७४ ॥

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्य्यसंसदि। अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥ ७५ ॥

साक्षीत्यादि। साक्षी दृष्टश्रुतादन्यादृशं साधुसभायां वदन् अधोमुखो नरकं गच्छति। परलोके च कर्म्मान्तरजन्यस्वर्गरूपफलादानेन पापेन हीयते ॥ ७५ ॥

यत्रानिबद्धोऽपीचेत शृणुयाद्वापि किञ्चन। पृष्ट स्तत्रापि तद्ब्रूयाद्यथादृष्टं यथाश्रुतम्॥ ७६॥

यत्रेत्यादि। त्वमस्मिन् विषये साक्षी भव इत्येवमकृतोपि यत्किञ्चित् ऋणादानादि पश्यति वाक्पारुष्यादिकं वा शृणोति तत्रापि साक्षी स पृष्टस्सन् यथोपलब्धङ्कथयेत्। अयन्त्वकृत साक्षी सामान्येन मनुनोक्तः अस्य ग्रामस्य प्राड्विवाकस्य राजा चेत्यादिना नारदादिभिः षाड्विध्यमुक्तम्॥ ७६॥

एकोऽलुब्धस्तु साक्षी स्याद्बह्वः शुच्योपि न स्त्रियः। स्त्रीबुद्धेरस्थिरत्वात्तु दोषैश्चान्येपि ये वृताः॥ ७७॥

एकइत्यादि। एकोऽलुब्धइत्यत्राकारप्रश्लेषोद्रष्टव्यः। एकोपि साक्षी लोभादिरहितः स्यात्। अतएव व्यासः। शुचिक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक्। प्रमाणमेकोपि भवेत् साहसेषु विशेषतः। मेधातिथिगोविन्दराजाभ्यामेको लुब्धस्तुसाक्षीस्यादिति पठितम्। व्याख्यातञ्च। लोभवान् एकः साक्षी न भवति एवञ्चालुब्धोगुणवान् कस्याञ्चिदवस्था यामेकोपि भवतीति। स्त्रियः पुनरात्मशौचादियुक्तावह्व्योप्य स्थिरबुद्धित्वात् ऋणादानादौः पर्य्यालोचितव्यवहारे साक्षि

ण्योन भवन्ति। अपर्य्यालोचितेतु स्त्रैयवाग्दण्डपारुष्यादौ स्त्रियाप्यसम्भवे कार्य्यमिति साक्षित्वमुक्तम्। अन्येपि ये स्त्रैयादि दोषैर्व्याप्तास्तेपि पर्य्यालोचितव्यवहारे साक्षिणोन स्युः॥ ७७॥

स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम्। अतो यदन्यद्विब्रूयुर्द्धर्म्मार्थं तदपार्थकम्॥ ७८॥

स्वभावेनेति। यत्साक्षिणोभयादिव्यतिरेकेण स्वभावा द्ब्रूयुः तद्व्यवहारनिर्णयार्थं ग्राह्यं यत्पुनः स्वाभाविकादन्यत् कुतोपि कारणाद्वदन्ति तद्धर्म्मविषये निष्प्रयोजनं तन्न ग्राह्यम् ॥ ७८॥

सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ। प्राड्विवाकोनुयुञ्जीत विधिनानेन सान्त्वयन्॥ ७९॥

सभान्तरित्यादि। सभामध्यं साक्षिणः संप्राप्तान् अर्थिप्रत्य र्थिसमक्षं राजाधिकृतोब्राह्मणः प्रियोक्तिं रचयन् वक्ष्यमाण प्रकारेण पृच्छेत्॥ ७९॥

यद्द्वयोरनयोर्वेत्थ कार्य्येऽस्मिन् चेष्टितं मिथः। तद्ब्रूत सर्व्वं सत्येन युष्माकं ह्यत्र साक्षिता॥ ८०॥

यद्द्वयोरिति। यद्द्वयोरर्थिप्रत्यर्थिनोरनयोः परस्परम स्मिन् कार्य्ये चेष्टितं जानीथ तत्सर्व्वं सत्येन कथय यतोयुष्माक मत्र साक्षित्वम्॥ ८०॥

सत्यं साक्ष्ये ब्रुवन्साक्षी लोकानाप्नोति पुष्कलान्। इह चानुत्तमाङ्कीर्त्तिं वागेषा ब्रह्मपूजिता ॥ ८१॥

सत्यमिति। साक्षी साक्ष्ये कर्म्मणि सत्यं वदन्सन् उत्कृष्टान् ब्रह्मलोकादीन् प्राप्नोति इह लोकेषु चात्युत्कृष्टां ख्यातिं लभते यस्मादेषा सत्यात्मिका वाक् चतुर्मुखेन पूजिता ॥ ८१॥

साक्ष्येऽनृतं वदन् पाशैर्ब्बध्यते वारुणैर्भृशं। विवशः शतमाजातीस्तस्मात्साक्ष्यं वदेदृतम्॥ ८२॥

साक्ष्यइत्यादि। यस्मात्साक्षी मृषावाचं कथयन् वरुणसम्बन्धिभिः पाशैः सर्परज्जुभिः जलोदरेण परतन्त्रीकृतः शतजन्मानि यावत् अत्यर्थम्पीड्यते। तस्मात्साक्ष्ये सत्यं ब्रूयात्॥ ८२॥

सत्येन पूयते साक्षी धर्म्मः सत्येन वर्द्धते। तस्मात्सत्यं हि वक्तव्यं सर्व्ववर्णेषु साक्षिभिः॥ ८३॥

सत्येनेत्यादि। यस्मात्सत्येन पूर्व्वार्जितादपि पापात्साक्षी मुच्यते धर्म्मश्चास्य सत्याभिधानेन वृद्धिमेति। तस्मात्सर्व्ववर्णविषये साक्षिभिः सत्यं वक्तव्यम्॥ ८३॥

आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथात्मनः। मावमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम्॥८४॥

आत्मैवेति। यस्मात् शुभाशुभकर्म्मप्रतिष्ठ आत्मैवात्मनः शरणं तस्मादेवं स्वमात्मानं नराणां मध्यादुत्तमं साक्षिणं मृषाभिधानेनावज्ञासीः॥ ८४॥

मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः। तांस्तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः॥ ८५॥

मन्यन्तइति। पापकारिणएवम्मन्यन्ते अस्मानधर्म्मप्रवृत्तान्न कश्चित्पश्यतीति तान् पुनर्वक्ष्यमाणा देवाः पश्यन्ति स्वस्यान्तरात्मापुरुषस्य पश्यति॥ ८५॥

द्यौर्भूमिरापो हृदयञ्चन्द्रार्काग्नियमानिलाः। रात्रिः संध्ये च धर्म्मश्च वृत्तज्ञाः सर्व्वदेहिनाम्॥ ८६॥

द्यौरित्यादि। द्युलोकपृथिवीजलहृदयस्थजीवचन्द्रादित्याग्नियमवायुरात्रिसन्ध्याद्वयधर्म्माः सर्व्वशरीरिणां शुभाऽशुभकर्मज्ञाः दिवादीनाञ्चाधिष्ठातृदेवतास्ति सा च शरीरि

शरीरिण्येकत्रावस्थितैव तत्सर्वं जानातीति आगमप्रामाण्या देदान्त दर्शनं तदङ्गीकृत्येदमुक्तम् ॥ ८६ ॥

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्। उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन्॥८७॥

देवब्राह्मणेति। प्रतिमादिदेवताब्राह्मणसन्निधाने शुचीन् द्विजातिप्रभृतीन् प्राङ्मुखानुदङ्मुखान् वा स्वयमयतः प्राड्विवाकः पूर्वाह्णे काले याथातथ्यं साक्ष्यं पृच्छेत्॥ ८७॥

ब्रूहीति ब्राह्मणम्पृच्छेत्सत्यं ब्रूहीति पार्थिवम्। गोवीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥ ८८ ॥

ब्रूहीत्यादि। ब्रूहीत्येवं शब्दमुच्चार्य्य ब्राह्मणम्पृच्छेत्। सत्यं ब्रूहीति पार्थिवं क्षत्रियम्पृच्छेत्। गोवीजसुवर्णापहारे यत्पापं तत्तवाऽनृताभिधाने स्यादित्येवं वैश्यम्। शूद्रम्पुनः सर्व्वैर्वक्ष्यमाणपापैः संबध्यसे यदि मृषावदसीति पृच्छेत्॥ ८८॥

ब्रह्मघ्नोये स्मृतालोकाये च स्त्रीबालघातिनः। मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतोमृषा॥ ८९ ॥

ब्रह्मघ्नइति। ब्राह्मणहन्तुः स्त्रीघातिनोबालघातिनश्च ये

नरकादिलोकास्त्वृषिभिः स्मृताः। येच मित्रद्रोहकारिणः येचोपकर्त्तुरपकारिणस्ते तव मिथ्यावदतोभवेयुः ॥ ८९ ॥

जन्मप्रभृति यत्किञ्चित्पुण्यम्भद्र त्वया कृतम्। तत्ते सर्व्वं शुनोगच्छेद्यदि ब्रयास्त्वमन्यथा ॥ ९० ॥

जन्मप्रभृतीत्यादि। हेसुभाचार यत्त्वया जन्मतआरभ्य किञ्चित्सुकृतं कृतं तत्सर्व्वं त्वदीयं कुक्कुरादिकं संक्रामति यदि त्वमसत्यं ब्रवीषि ॥ ९० ॥

एकोहमस्मीत्यात्मानं यत्त्वं कल्याण मन्यसे नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥ ९१ ॥

एकोहमित्यादि। हे भद्र एकएवाहमस्मि जीवात्मकइति यदात्मानं मन्यसे नैवं मंस्थाः। यस्मादेष पापानां पुण्यानाञ्च द्रष्टा मननान्मुनिस्सर्वज्ञः तव हृदये परमात्मा नित्यमवस्थितः। तथाच श्रुतिः। द्वा सुपर्णा सहजा सखाया समानं वृक्षम्परिषस्वजाते। तयोरन्यः पिप्पलं स्वादत्ति अनश्नन्नन्योऽभिचाकशीति ॥ ९१ ॥

यमोवैवस्वतोदेवोयस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः॥ ९२॥

यमइति। सर्व्वसंयमनाद्यमः परमात्मा वैवस्वतइति दण्डधारित्वात् देवनाद्देवः यस्तवैष हृदि तिष्ठति तेन सह यथार्थकथनेन यदि तवाविवादः यदा त्वन्मनोगतमसावन्य ज्जानाति त्वञ्चान्यथा कथयसि तदान्तर्यामिना सह तव विप्र तिपत्तिः स्यात् एवञ्चात्र सत्याभिधानेनैव निष्पापःकृतकृत्योसि पापनिर्हरणार्थं मागङ्गाम्मा च कुरुक्षेत्रं यासीः। मनूक्तमेवात्र गङ्गाकुरुक्षेत्रयोः साम्यं मत्स्यपुराणे व्यासेन स्फुटीकृतम्। कुरुक्षेत्रसमा गङ्गा यत्र तत्रावगाहितेति। मेधातिथिगोविन्द राजौ तु। विवस्वतः पुत्रोयोयमोदक्षिणदिक्पतिर्लोकतः कर्णगोचरीभूतत्वात् तव हृदये परिस्फुरति तेन सह यदि तवाधर्म्मकारित्वाभावाद्विवादोनास्ति तदा मा गङ्गां मा कुरु क्षेत्रं यासीरिति व्याचक्षाते॥ ९२॥

नग्नोमुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः। अन्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत्॥ ९३॥

नग्नइति। यः साक्ष्ये असत्यं वदेत् स नग्नः कृतमुण्डन परिभवोऽन्धः कर्परेणोपलक्षितः भिक्षार्थी शत्रुकुलङ्गच्छेत् ॥ ९३॥

अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत्।
यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्म्मनिश्चये॥ ९४॥

अवागिति। योधर्म्मनिश्चयनिमित्तं पृष्टः सन् असत्यं ब्रूयात् स पापवान् अधोमुखोमहान्धकारे योनरकस्तं गच्छति॥ ९४॥

अन्धोमत्स्यानिवाश्नाति स नरः कण्टकैः सह।
योभाषतेर्थवैकल्यमप्रत्यक्षं सभाङ्गतः॥ ९५॥

अन्धइति। यः सभामाप्तः तत्वार्थस्ययथा भावं अनुपलभ्यमुक्तोचादिसुखलेशेन कथयति स नरोऽन्धइव सकण्टकान् मत्स्यान् भक्षयति सुखबुद्धा प्रवृत्तोदुःखमेव महल्लभते॥ ९५॥

यस्य विद्वान्हि वदतः क्षेत्रज्ञोनाभिशङ्कते। तस्मान्न देवाः श्रेयांसं लोकेन्यं पुरुषं विदुः॥ ९६॥

यस्येति। यस्य वदतः सर्व्वज्ञोऽन्तर्यामी किमयं सत्यं वदत्युतानृतमिति न शङ्केत किन्तु सत्यमेवायं वदति निर्विशङ्कः सम्पद्यते तस्मादन्यं प्रशस्ततरं पुरुषन्देवान जानन्ति॥ ९६॥

यावतोबान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन्।
तावतः सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्व्वशः॥ ९७ ॥

यावतइति। यस्मिन् पश्वादिनिमित्ते साक्ष्ये अनृतं वदन् यत्सङ्ख्यकान् पित्रादिबान्धवान् नरके योजयति तत्सङ्ख्यकान् क्रमेण परिगणनया मयोच्यमानान् साधो शृणु। अथवा। यावतोबान्धवान् हन्ति यावतास्वान्धवानां हननफलं प्राप्नोति तावत् सङ्ख्यकान् शृणु। पश्वद्यर्थेष्वनृताभिधाननिन्दार्थमिदम् ॥ ९७ ॥

पञ्चपश्वनृते हन्ति दश हन्ति गवानृते। शत मश्वानृते हन्ति सहस्रं पुरुषानृते॥ ९८ ॥

पञ्चेति। पशुविषयेऽनृते पञ्चबान्धवान् नरके योजयति। पञ्चानास्वान्धवानां वा हननफलं प्राप्नोति। एवन्दशगोविषये शतमश्वविषये सहस्रं पुरुषविषये सङ्ख्यागौरवञ्चेदं प्रायश्चित्त गौरवार्थम् ॥ ९८ ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्व्वं भूम्यनृते हन्ति मास्म भूम्यनृतं वदीः॥ ९९ ॥

हन्तीति। हिरण्यार्थे अनृतं वदन् जातान् अजातांश्च पुत्र प्रभृतीन् हिरण्यार्थेऽनृतवादी नरके योजयति। एषां हननफलं

वा प्राप्नोति। भूमिविषये चानृतं वदन् सर्व्वप्राणिनां हननफलं प्राप्नोति तस्माद्भूमिविषयेऽनृतं मावदीरिति विशिष्याभिधानम्। ॥ ९९ ॥

अप्सु भूमिवदित्याहुः स्त्रीणाम्भोगे च मैथुने।
अब्जेषु चैव रत्नेषु सर्व्वेष्वश्ममयेषु च ॥ १०० ॥

वैदुर्य्यादिषु अनृते भूमिवद्दोषमाहु अपस्विति। तडागकूपवाप्योदकविषयेऽनृते स्त्रीणाञ्च मैथुनाख्योपभोगविषये अब्जेषु च मुक्तादिषु पाषाणमयेषु च वैदूर्य्यादिषु अनृते भूमिवद्दोषमाहुः ॥ १०० ॥

एतान् दोषानवेक्ष्य त्वं सर्व्वाननृतभाषणे। यथा
श्रुतं यथादृष्टं सर्व्वमेवाञ्जसा वद ॥ १०१ ॥

एतानिति। एतान् सर्व्वान् सत्यभाषणदोषानधिगम्य दृष्टश्रुतानतिक्रमेण सर्व्वमेवाञ्जसा तत्त्वतोब्रूहि ॥ १०१ ॥

गोरक्षकान्वाणिजिकांस्तथाकारुकुशीलवान्।
प्रैष्यान्वार्द्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ १०२ ॥

गोरक्षकानित्यादि। गोरक्षणजीविनोवणिज्याजीविनः सूपकारादिकारुकर्म्मजीविनः नटकर्म्मनृत्यगीतादिजीविनः दासकर्म्मजीविनः प्रतिषिद्धजीविनोब्राह्मणान् प्रकृतसाक्षिप्रश्ने शूद्रवत्पृच्छेत् ॥ १०२ ॥

तद्वदन् धर्म्मतोऽर्थेषु जानन्नप्यन्यथा नरः। न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ॥१०३॥

तद्वदन्निति। तदेतत्साच्यमन्यथापि जानन् मनुष्योधर्म्मेण दयादिना व्यवहारेष्वन्यथा वदन् स्वर्गलोकान्न भ्रश्यति यस्माद्यदेतन्निमित्तविशेषेणासत्याभिधानं तां देवसम्बन्धिनीं वाचं मन्वादयोवदन्ति ॥ १०३ ॥

शूद्रविट्क्षत्त्रविप्राणां यत्रर्त्तोक्तौ भवेद्वधः। तत्र वक्तव्यमनृतन्तद्धि सत्याद्विशिष्यते ॥ १०४ ॥

क्व पुनस्तदसत्यं वक्तव्यमित्यतआह शूद्रेति। यस्मिन् व्यवहारे सत्याभिधाने सति शूद्रवैश्यक्षत्त्रियब्राह्मणाना न्वधः सम्पद्यते तत्रासत्यं वक्तव्यं यस्मात्। यस्मिन्विषये अनृतं यत्तत्प्राणरक्षणेन सत्याद्विशिष्यते एतच्च प्रमादस्खलिताधर्म्मविषयत्वे। नत्वत्यन्ताधार्मिकसन्धिकारस्तेनादिविषये। तथा गोतमः नानृतवदने दोषोयज्जीवनञ्चेत्तदधीनं नतु पापीयसोजीवनमिति। नच न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वपि स्थितमिति मनुनैव वक्ष्यमाणत्वात् न ब्राह्मण

च

बधप्रसक्तिरिति वाच्यं। उग्रदण्डत्वाद्राज्ञः कथञ्चित्सम्भवात्। अत्र वचने शूद्रादिक्रमेणाभिधानम्बधस्यामङ्गलत्वात् ॥ १०४ ॥

वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीं। अनृतस्यैनसस्तस्य कुर्व्वाणानिष्कृतिम्पराम् ॥ १०५ ॥

वाग्दैवेति। ते साक्षिणोऽनृताभिधायिनो वाग्देवताकैश्चरुभिः सरस्वतीं यजेरन्। तस्यानृताभिधानजनितपापस्य प्रकृष्टां शुद्धिं कुर्वाणाः साक्षिबहुत्वापेक्षं चेदम्। नत्वेकस्यैव साक्षिणः। कपिञ्जलन्यायेन चरुत्रयं। यद्यपि वाग्देवताके चरौ वाक्शब्देनैव देवतात्वं न सरस्वतीशब्देन विधिशब्दस्य मन्त्रत्वे भावः स्यादिति न्यायात्तथापि वाग्वै सरस्वती श्रुतेर्वाक्सरस्वत्योरेकार्थत्वात्सरस्वतीमित्युपसंहारः। अत्र प्रकरणे चेदं प्रायश्चित्ताभिधानं लाघवार्थं। तत्र क्रियमाणे शूद्रविट्क्षत्रियब्राह्मणबधविषयानृतवादिन इत्यपि वक्तव्यं स्यात् ॥१०५॥

कूष्माण्डैर्वापि जुहुयाद्घृतमग्नौ यथाविधि। उदित्यृचा वा वारुण्यात्यृचेनाब्दैवतेन वा ॥ १०६ ॥

कूष्माण्डैरिति। कूष्माण्डमन्त्रा यजुर्वेदिका यद्देवा देवहेलनमित्येवमादयः। तैर्मन्त्रदेवतायै घृतमग्नौ जुहुयात्।

यथाविधि परिस्तरणादिहोमधर्म्मेण स्वगृह्योक्तेन उदुत्तमं वरुणपाशमित्येतया वरुणदेवताकया ऋचा आपोहिष्ठादृति त्र्यृचेन वाग्देवताकेन जुहुयात्। घृतमग्नाविति सर्वत्रानुषङ्गः ॥ १०६ ॥

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः। तदृणम्प्राप्नुयात्सर्व्वं दशबन्धञ्च सर्व्वतः ॥ १०७ ॥

त्रिपक्षादिति। अव्याधितः साक्षी ऋणादानादिव्यवहारेषु त्रिपक्षपर्य्यन्तं यदि साक्ष्यं न वदेत्तदा तद्विवादास्पदं सर्व्वमृणमुत्तमर्णस्य दद्यात्तस्य च सर्व्वस्य ऋणस्य दशमभागं राज्ञो दण्डं दद्यात् ॥ १०७ ॥

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः। रोगोऽग्निर्ज्ञातिमरणमृणन्दाप्यो दमञ्च सः ॥ १०८ ॥

यस्येति। यस्य साक्षिणः उक्तसाक्ष्यस्य सप्ताहमध्ये व्याध्यग्निदाहसन्निहितपुत्रादिज्ञातिमरणानामन्यतमम्भवति सदैवसूचितमिथ्याभिदोषत्वादृणमुत्तमर्णस्य दण्डञ्च राज्ञा दाप्यः ॥ १०८ ॥

असाक्षिकेषु त्वर्थेषु मिथोविवदमानयोः। न विन्दंस्तत्त्वतस्सत्यं शपथेनापि लम्भयेत् ॥ १०९ ॥

असाक्षिकेष्विति। अविद्यमानसाक्षिकेषु व्यवहारेषु परस्परं विवदमानयोस्तत्त्वतश्छलादिव्यतिरेकेण सत्यमलभमानः प्राड्विवाकः वक्ष्यमाणेन शपथेन सत्यमुन्नयेत् ॥ १०९ ॥

महर्षिभिश्च देवैश्च कार्य्यार्थं शपथाः कृताः। वशिष्ठश्चापि शपथं शेपे पैयवने नृपे ॥ ११० ॥

महर्षिभिश्चेति। सप्तर्षिभिर्देवैश्च इन्द्रादिभिः सन्दिग्धकार्य्यनिर्णयार्थं शपथाः कृताः। वशिष्ठोऽप्यनेन पुत्रशतं भक्षितमिति विश्वामित्रेणाक्रुष्टः स्वपरिशुद्धये पियवनापत्ये सुदाम्नि राजनि शपथञ्चकार। अनेकार्थत्वाद्धातूनां शपिरपि करोत्यर्थः ॥ ११० ॥

न वृथा शपथं कुर्य्यात्स्वल्पे प्यर्थे नरोबुधः। वृथा हि शपथं कुर्व्वन् प्रेत्य चेह च नश्यति ॥ १११ ॥

नवृथेति। स्वल्पेपि कार्य्ये न वृथा शपथं पण्डितः कुर्य्यात्। यस्मात् वृथा शपथं कुर्वन् परलोके इह लोके च नरकप्राप्त्याऽकीर्त्तिप्राप्त्या च नाशं प्राप्नोति ॥ १११ ॥

कामिनीषु विवाहेषु गवाम्भक्ष्ये तथेन्धने। ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्॥ ११२॥

वृथाशपथप्रतिप्रसवार्थमाह कामिनीष्विति। वहुभार्य्यस्य नान्यामहं कामये त्वमेव मत्प्रेयसीति एवं विशिष्टसुरतला भार्थं कामिनीविषये विवाहविषये च मया अन्या न वोढव्ये त्यादौ गवार्थं घासाद्युपहारे च अग्नौ होमार्थमिन्धनाद्युपहारे ब्राह्मणरक्षार्थमङ्गीकृतधनादौ वृथाशपथे पापन्नभवति ॥ ११२॥

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः। गोवीजकाञ्चनैर्व्वैश्यं शूद्रं सर्व्वैस्तु पातकैः॥ ११३॥

सत्येनेति। ब्राह्मणं सत्यशब्दोच्चारणेन शापयेत्। क्षत्रियं वाहनायुधं मम निष्फलं स्यादित्येवं वैश्यं गोवीजकाञ्चनानि मम निष्फलानि स्युः। शूद्रञ्च सर्व्वाणि मे पातकानि स्युरित्येवं शापयेत्॥ ११३॥

अग्निं वा हारयेदेनमप्सु चैनन्निमज्जयेत्। पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक्॥ ११४॥

कार्य्यगौरवलाघवापेक्षया अग्निमिति। अग्निसन्निभमप्च्छाशत्पलिकमष्टाङ्गुलमयः पिण्डं हस्तद्वयविन्यस्तसप्ताश्वत्थपत्रं

शूद्रादिकं सप्तपदानि पितामहाद्युक्तविधिना हारयेत्। जलौकादिरहितजले चैनन्निमज्जयेत्। अशेषेतिकर्त्तव्यता स्मृत्यन्तरे ज्ञेया। पुत्राणां दाराणाञ्च पृथक् शिरांसि एनं स्पर्शयेत् ॥ ११४॥

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च। न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः ॥ ११५ ॥

यमिति। यमप्रदीप्तोऽग्निर्न दहति आपश्च यन्नोर्द्धं नयन्ति न चार्त्तिमेव महतीं प्राप्नोति स शपथे विशुद्धो ज्ञेयः ॥ ११५ ॥

वत्सस्य ह्यभिशस्तस्य पुरा भ्रात्रा यवीयसा। नाग्निर्ददाह रोमापि सत्येन जगतः स्पृशः ॥ ११६ ॥

अत्र पुरावृत्तमर्थवादमाह वत्सस्येति। यस्मात्पूर्व्वकाले वत्सनाम्न ऋषेर्न त्वं ब्राह्मणः शूद्रापत्योऽसीत्येवं कनीयसा वैमात्रेयेणाभिक्रुष्टस्य नैतदेवमिति शपथार्थमग्निं प्रविष्टस्याग्निः सर्व्वस्य जगतः शुभाशुभकर्त्तव्ये चारभूतः सत्येन हेतुना रोमैकमपि न दग्धवान् ॥ ११६ ॥

यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतम्भवेत्। तत्तत्कार्य्यं निवर्त्तेत कृतञ्चाप्यकृतम्भवेत् ॥ ११७ ॥

यस्मिन्निति। यस्मिन् यस्मिन् व्यवहारे साक्षिभिरनृतमुक्तमिति निश्चितम्भवेत्तत्तत्कार्य्यं असमाप्तमप्याद्विवाको निवर्त्तयेत्। यदपि च दण्डसमाप्तपर्य्यन्ततान्नीतं तदपि पुनः परीक्षेत् ॥ ११७॥

लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥११८॥

लोभादिति। वक्ष्यमाणदण्डविशेषार्थं लोभादीन्पृथक्निर्दिशति। लोभेन विपरीतज्ञानेन भयेन स्नेहेन कामेन क्रोधेनाज्ञानेनानवधानेन साक्ष्यमसत्यमुच्यते ॥११८॥

एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत्। तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्व्वशः ॥ ११९ ॥

एषामिति। एषां लोभादीनां मध्यादन्यतमस्मिन्निमित्ते सति योमिथ्यासाक्ष्यं कथयेत् तस्य दण्डविशेषान् क्रमशो वदिष्यामि ॥११९॥

लोभात्सहस्रन्दण्ड्यस्तु मोहात्पूर्व्वन्तु साहसम्।
भयाद्द्वौ मध्यमौ दण्डौ मैत्रात्पूर्व्वञ्चतुर्गुणम्॥१२०॥

लोभादिति। लोभेन मिथ्याभिधाने सति वक्ष्यमाणपणानां सहस्रं दण्ड्यः। मोहेन प्रथमं साहसं वक्ष्यमाणभयेन च वक्ष्यमाणौ मध्यमसाहसौ मैत्रात्प्रथमसाहसञ्चतुर्गुणम् ॥१२०॥

कामाद्दशगुणम्पूर्व्वं क्रोधात्तु त्रिगुणम्परम् ।
अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥ १२१ ॥

कामादिति । स्त्रीसम्भोगरूपकामानुरोधेन मिथ्या वदन् प्रथमसाहसं दशगुणन्दण्ड्यः । क्रोधेन तु परं वच्यमाणं मध्यमसाहसन्त्रिगुणं अज्ञानलाद्द्वे शते बालिश्यात् अनवधानात्पुनः शतमेव दण्ड्यइति सर्व्वत्रानुषङ्गः ॥ १२१ ॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ।
धर्म्मस्याव्यभिचारार्थमधर्म्मनियमाय च ॥ १२२ ॥

एतानिति । सत्यरूपधर्म्मस्यापरिलोपार्थमसत्यरूपाधर्म्मस्य च वारणार्थमेतान्कौटसाक्ष्यविषये पूर्व्वैर्मुनिभिरुक्तान् दण्डान्मन्वादयश्चाहुः एतच्च सत् कौटसाक्ष्ये ॥ १२१ ॥

कौटसाक्ष्यन्तु कुर्व्वाणांस्त्रीन्वर्णान्धार्म्मिकोनृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणन्तुविवासयेत् ॥ १२३ ॥

भूयोभूयः कौटसाक्ष्यकरणे तु कौटसाक्ष्यमिति । क्षत्त्रियादीन् त्रीन् वर्णान् कौटसाक्ष्ये प्रवृत्तान् पूर्व्वोक्तेन दण्डेन दण्डयित्वा धार्म्मिकोराजा स्वराष्ट्राद्विवासयेत् । ब्राह्मणन्तु धनदण्डव्यतिरिक्तेणैव स्वराष्ट्रान्निःसारयेत् । न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्ववस्थितम् । राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतमिति धनसहितनिर्व्वासनस्याभिधास्यमानलात् ।

गोविन्दराजस्तु ब्राह्मणं पुनः पूर्व्वदण्डेन दण्डयित्वा नग्नं कुर्य्यात् इति व्याचष्टे। मेधातिथिस्तु ब्राह्मणस्य विवासस्त्वं वासोपहरणं गृहभङ्गोवेत्याचष्टे ॥ १२३ ॥

दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु यानि स्युरक्षतोब्राह्मणोव्रजेत् ॥ १२४ ॥

दशेति। हिरण्यगर्भोमनुर्दश दण्डस्यस्थानानि उक्तवान् यानि क्षत्रियादिवर्णत्रयविषये भवन्ति ब्राह्मणः पुनर्म्महत्यपराधे अक्षतशरीरोदेशान्निःसार्य्यते ॥ १२४ ॥

उपस्थमुदरञ्जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्न्नासा च कर्णौ च धनन्देहस्तथैव च ॥ १२५ ॥

उपस्थेति। लिङ्गादीन्येतानि दश दण्डस्थानानि। अतस्तत्तदङ्गेनापराधे सति अपराधलाघवगौरवापेक्षया तत्तदङ्गताडनच्छेदनादि कर्त्तव्यम्। अल्पापराधे यथाश्रुतन्धनदण्डः। देहदण्डोमारणं महापातकादौ ॥ १२५ ॥

अनुबन्धम्परिज्ञाय देशकालौ च तत्त्वतः। सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत् ॥ १२६ ॥

अनुबन्धमिति। पुनःपुनरिच्छातोऽपराधकरणमवेक्ष्य ग्रामारण्यादिचापराधस्थानं दिवारात्र्यादिकं वा अपराधकालं

सम्यगवेक्ष्य सारं चापराधकारिणो धनशरीरादिसामर्थ्यम पराधञ्च गुरुलघुभावेन चालोक्य दण्डनीयेषु दण्डं कुर्य्यात्। एतच्चाभिहिताभिधास्यमानदण्डशेषभूतम् ॥ १२६ ॥

अधर्म्मदण्डनं लोके यशोघ्नं कीर्त्तिनाशनम्।
अस्वर्ग्यञ्च परत्रापि तस्मात्तत्परिवर्ज्जयेत् ॥ १२७॥

अधर्म्मेति। जीवतः ख्यातिर्यशः। मृतस्य ख्यातिः कीर्त्तिः। यस्मादनुबन्धाद्यनपेक्ष्य दण्डनमिह लोके यशोनाशं मृतस्य च कीर्त्तिनाशनं परलोके च धर्म्मान्तरार्जितस्वर्गप्रतिबन्धकं तस्मात्तत्परित्यजेत् ॥ १२७ ॥

अदण्ड्यान् दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशोमहदाप्नोति नरकञ्चैव गच्छति ॥ १२८ ॥

अदण्ड्यानिति। राजा दण्ड्यानर्हान् धनलोभादिना दण्डयन् दण्डार्हांश्चानुरोधादिना उत्सृजन् महतीमख्यातिमाप्नोति नरकञ्च व्रजति ॥ १२८ ॥

वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम्।
तृतीयन्धनदण्डन्तु बधदण्डमतः परम् ॥ १२९ ॥

वाग्दण्डमिति। न साधु कृतवानसि मैवम्भूयः कार्षीः इत्येवं वाग्भिर्भर्त्सनं प्रथमापराधे गुणवतः कुर्य्यात्। तथापि यदि

नोपशाम्यति तदा धिक् जाल्ममजीवनिस्ते पापस्य भूयादित्येव मादि तस्य कार्य्यम्। तथापि यद्यसन्मार्गान्न निवर्त्तते तदा धनं दण्डमस्य तृतीयं कुर्य्यात्। एवमपि चेन्नावतिष्ठते तदातः परस्वधदण्डं ताडनाद्यङ्गाच्छेदरूपन्तस्य कुर्य्यान्न मारणम्। यतोवच्यति वधेनापि यदात्वेतानिति ॥ १२९ ॥

वधेनापि यदात्वेतान्निग्रहीतुन्न शक्नुयात्।
तदैषु सर्व्वमप्येतत् प्रयुञ्जीत चतुष्टयम्॥ १३० ॥

वधेनेति। यदात्यस्तेनागच्छेदेनापि दण्ड्यान् वशे कर्त्तुं न शक्नुयात् तदा एषु सर्व्वं वाग्दण्डादि चतुष्टयं कुर्य्यात्॥ १३० ॥

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥ १३१ ॥

लोकेति। ताम्ररूप्यसुवर्णानां याः पणादिसंज्ञाः क्रयविक्रयादिलोकव्यवहारार्थं पृथिव्यां प्रसिद्धास्तादण्डाद्युपयोगार्थं साकल्येन कथयिष्यामि ॥ १३१ ॥

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः। प्रथमन्तत्प्रमाणानान्त्रसरेणुम्प्रचक्षते॥ १३२॥

जालान्तरेति। गवाक्षविवरप्रविष्टसूर्य्यरश्मिषु यत्सूक्ष्मं रजो दृश्यते तद्रजःपरिमाणानाम्प्रथमं त्रसरेणुं वदन्ति॥ १३२॥

ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति। अपह्नवे तद्द्विगुणन्तन्मनोरनुशासनम् ॥ १३९ ॥

ऋणइति। मयोत्तमर्णस्य धनन्देयमिति सभायामधमर्णे नोक्ते सत्यधमर्णः पणशतात्पञ्च पणाइत्येवन्दण्डमर्हति यदा तु सभायामपि न किञ्चिदस्मै धारयामीति एवमपलपति तदा पणशताद्दशपणाइत्येवं दण्डमर्हति इत्येवं मनुस्मृतौ दण्ड प्रकारः ॥ १३९ ॥

वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम्। अशीति भागं गृह्णीयान्मासाद्वार्द्धुषिकः शते ॥ १४० ॥

वशिष्ठेति। वशिष्ठेनोक्तां वृद्धिं धर्म्यत्वाद्धनवृद्धिकरीं वृद्धि जीवी गृह्णीयात् तामेव दर्शयति। शते प्रयुक्ते तस्मात् अशीति भागस्य तिमासं वृद्धिं गृह्णीयात् ॥ १४० ॥

द्विकं शतं वा गृह्णीयात्सतान्धर्म्ममनुस्मरन्। द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्विषी ॥१४१ ॥

द्विकमिति। साधूनामयं धर्मइतिमन्यमानः पणशते प्रयुक्ते पणद्वयं वा प्रतिमासं गृह्णीयात् यस्मात् द्विकं शतं गृह्णानोवृद्धिधनग्रहणे किल्विषी नभवति ॥

द्विकन्त्रिकञ्चतुष्कञ्च पञ्चकञ्च शतं समम्।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपर्व्वशः॥ १४२॥

द्विकमिति। ब्राह्मणादिवर्णानां क्रमेण द्विकन्त्रिकञ्चतुष्कं पञ्चकञ्च शतं सममितोनाधिकं मासस्य सम्बन्धिनीं वृद्धिं गृह्णीयात्। नन्वशीतिभागोलघुः द्विकशतग्रहणं गुरु कथमिमौ ब्राह्मणस्य लघुगुरुकल्पौ विकल्प्येताम्। अत्र मेधातिथिगोविन्दराजौ तु। पूर्व्ववृद्ध्या निर्व्वाहासम्भवे द्विकशतग्रहणमिति व्याचक्षाते। इदन्तु वदामः सबन्धकेंऽशीतिभागग्रहणं बन्धकरहिते तु द्विकशतवृद्धिपरिग्रहः। तदाह याज्ञवल्क्यः। अशीतिभागोवृद्धिः स्यान्मासि मासि सबन्धके। वर्णक्रमाच्छतं द्विचिचतुःपञ्चकमन्यथा। वेदान्तोद्गीतमहसोमुनेर्व्याख्यानमाद्रिये। तद्विरुद्धं स्वबुद्ध्यैव निबद्धमधुनातनैः॥ १४२॥

नत्वेवाधौ सोपकारे कौशीदीं वृद्धिमाप्नुयात्॥
न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः॥१४३॥

नत्विति। भूमिगोदासादौ भोगार्थं बन्धके दत्ते धनप्रयोगभवामनन्तरोक्तां वृद्धिमुत्तमर्णोन लभते। कालसंरोधश्चिरकालावस्थानं नच भोग्याधेश्चिरकालावस्थानात् द्विगुणीभूतमूलधनप्रवेशेपि न निसर्गोऽन्यस्मै दानं नवान्यतोविक्रयः। मेधा

तिथिगोविन्दराजौ तु। आधेश्चिरकालावस्थानेऽपि न निसर्गो नान्यत्र बन्धकेनार्पणमिति व्याचक्षाते। अत्र तु सर्वदेशीयशिष्टाचारविरोधः बन्धकीकृतभूम्यादेरन्यत्राधीकरणसमाचारात् ॥ १४३ ॥

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।
मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् ॥ १४४ ॥

नभोक्तव्येति। गोप्याधिविषयं वचनमिदं वस्त्रालङ्कारादि गोप्याधिर्बलान्न भोक्तव्यः भुञ्जानो वृद्धिमुत्सृजेत् प्राग्मूल्येनैनन्तोषयेत्। यद्वा। भोगेनासारतामाधौ नीते सारावस्थाधिमूल्यदानेन स्वामिनन्तोषयेत् अन्यथा बन्धकचौरः स्यात् ॥ १४४ ॥

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः। अवहार्यौ भवेतान्तौ दीर्घकालमवस्थितौ ॥ १४५ ॥

आधिश्चेति। आधिर्बन्धकः उपनिधीयतइत्युपनिधिः प्रीत्या भोगार्थमर्पितं द्रव्यं। नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवात्रोपनिधिशब्देन गृह्येते एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः। यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्यौ समर्पणीयावित्यर्थः ॥ १४५ ॥

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ १४६ ॥

सम्प्रीत्येति। यत्किञ्चिद्दशवर्षाणीत्यनन्तरभोगेन स्वत्व हानिं वक्ष्यति तदपवादार्थमिदं। दुह्यमाना गौरुष्ट्रोऽश्वश्च वहन् दमनार्थञ्च प्रयुक्तो बलीवर्द्दादिः एते प्रीत्या अन्येन भुज्यमानाः कदाचिदपि स्वामिनो न नश्यन्ति प्रदर्शनार्थञ्चै तत्सम्प्रीत्योपभुज्यमानं न नश्यतीति विवक्षितं सामान्योपक्रम श्चेदं विशेषाभिधानमिति नपुंसकलिङ्गता ॥ १४६ ॥

यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।
भुज्यमानम्परैस्तूष्णीन्न स तल्लब्धुमर्हति ॥ १४७ ॥

यत्किञ्चिदिति। यत्किञ्चिद्धनजातं समक्षमेव प्रीत्यादि व्यतिरेकेण परैर्दश वर्षाणि भुज्यमानं स्वामी प्रेक्षते मा भुंक्ष्वेत्या दिप्रतिषेधोक्तिं न रचयति नासौ तल्लब्धुं योग्यो भवति तस्य तत्र स्वाम्यं निवर्त्तत इति भावः ॥ १४७ ॥

अजडश्चेदपोगण्डो विषये चास्य भुज्यते।
भग्नन्तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८ ॥

अजडेति। जडो बुद्धिविकलः। न्यूनषोडशवर्षः पोगण्डः। तथा च नारदः। बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः।

तिथिगोविन्दराजौ तु। आधेश्चिरकालावस्थानेपि न निसर्गो नान्यत्र बन्धकेनार्पणमिति व्याचचाते। अत्रतु सर्व्वदेशीयशिष्टाचारविरोधः बन्धकीकृतभूम्यादेरन्यत्राधीकरणसमाचारात् ॥ १४३ ॥

न भोक्तव्योबलादाधिर्भुञ्जानोवृद्धिमुत्सृजेत्।
मूल्येन तोषयेच्चैनमाधिस्तेनोन्यथाभवेत् ॥ १४४ ॥

नभोक्तव्येति। गोप्याधिविषयं वचनमिदं वस्त्रालङ्कारादिगोप्याधिर्बलान्न भोक्तव्यः भुञ्जानोवृद्धिमुत्सृजेत् प्राग्मूल्येनैनन्तोषयेत्। यद्वा। भोगेनासारतामाधौ नीते सारावस्थाधिमूल्यदानेन स्वामिनन्तोषयेत् अन्यथा बन्धकचौरः स्यात् ॥ १४४ ॥

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः। अवहार्य्यौ भवेतान्तौ दीर्घकालमवस्थितौ ॥ १४५ ॥

आधिश्चेति। आधिर्बन्धकः उपनिधीयतइत्युपनिधिः प्रीत्या भोगार्थमर्पितं द्रव्यं। नारदस्मृतिलक्षितौ च निक्षेपोपनिधी तावेवात्रोपनिधिशब्देन गृह्येते एतावाध्युपनिधी चिरकालावस्थितावपि न कालात्ययमर्हतः। यदैव स्वामिना प्रार्थितौ तदैव तस्यावहार्य्यौ समर्पणीयावित्यर्थः ॥ १४५ ॥

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥ १४६ ॥

सम्प्रीत्येति। यत्किञ्चिद्दशवर्षाणीत्यनन्तरभोगेन स्वत्वहानिं वक्ष्यति तदपवादार्थमिदं। दुह्यमाना गौरुष्ट्रोऽश्वश्च वहन् दमनार्थञ्च प्रयुक्तो बलीवर्द्दादिः एते प्रीत्या अन्येन भुज्यमानाः कदाचिदपि स्वामिनो न नश्यन्ति प्रदर्शनार्थञ्चेदं प्रीत्योपभुज्यमानं न नश्यतीति विवक्षितं सामान्योपक्रमञ्चेदं विशेषाभिधानमिति नपुंसकलिङ्गता ॥ १४६ ॥

यत्किञ्चिद्दशवर्षाणि सन्निधौ प्रेक्षते धनी।
भुज्यमानम्परैस्तूष्णीन्न स तल्लब्धुमर्हति ॥ १४७ ॥

यत्किञ्चिदिति। यत्किञ्चिद्धनजातं समक्षमेव प्रीत्यादिव्यतिरेकेण परैर्दश वर्षाणि भुज्यमानं स्वामी प्रेक्षते मा भुंक्ष्वेत्यादिप्रतिषेधोक्तिं न रचयति नासौ तल्लब्धुं योग्यो भवति तस्य तत्र स्वाम्यं निवर्त्तत इति भावः ॥ १४७ ॥

अजडश्चेदपोगण्डो विषये चास्य भुज्यते।
भग्नन्तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति ॥ १४८ ॥

अजडेति। जडो बुद्धिविकलः। न्यूनषोडशवर्षः पोगण्डः। तथा च नारदः। बाल आषोडशाद्वर्षात्पोगण्डश्चापि शब्दितः।

स धनस्वामी यदि जड़ः पौगण्डस्य न भवति तदीयदर्शन विषये च तद्धनम्भुज्यते तदा स्वामिनोऽव्यवहारेण नष्टं ततो भोक्तुरेव तद्धनम्भवति ॥ १४८ ॥

आधिः सीमा बालधनं निक्षेपोपनिधिः स्त्रियः।
राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥ १४९ ॥

आधिरिति। बन्धो ग्रामादिमर्य्यादा बालधनं निक्षेपो वासनस्थमनाख्याय समुद्रं यन्निधीयतइति नारदोक्तलक्षण उपनिधिः दास्यादिस्त्रियो राजश्रोत्रियधनानि उक्तेन दश वर्षभोगेन न स्वामिनो नश्यन्ति न भोक्तुः स्वत्वम्भजन्ते ॥ १४९ ॥

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥१५०॥

यः स्वामिनेति। यो वृद्ध्या दत्तं बन्धं स्वाम्यनुज्ञाव्यतिरेकेण मूर्खो निष्क्षेवेन भुङ्क्ते तेन तस्य भोगस्य संशुद्ध्यर्थमर्द्धवृद्धि स्त्यक्तव्या। बलभोगे तु न भोक्तव्यो बलाधिरिति सर्व्ववृद्धित्या गएवोक्तः ॥ १५० ॥

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता। धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥ १५१ ॥

कुसीदेति। वृद्ध्या धनप्रयोगः कुसीदं तत्र या वृद्धिः सकृदाहृता सा द्वैगुण्यं नातिक्रामति मूलद्विगुणैव भवति

तेन प्रतिदिनं प्रतिमासं ग्रहणेन मूलेन सह द्विगुणाधिकापि पूर्व्वोक्ताद्धर्म्मप्रकारादनपकृष्टा ग्राह्येति तात्पर्य्यम्। धान्ये पुन र्वृद्ध्या प्रयुक्ते सदे वृक्षफले लूयतइति लवः ऊर्णादिलोम तस्मिन् वाहनीये च बलीवर्द्दादौ प्रयुक्ते चिरेणापि कालेन मूलधान्यादिना सह पञ्चगुणतां नातिक्रामेदिति ॥ १५१ ॥

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति ॥ १५२॥

कृतानुसारादिति। कृता या वृद्धिर्द्विकत्रिकमिति शास्त्रेण वर्णक्रमेणोक्ता तस्याः शास्त्रानुसारादधिका व्यतिरिक्ता कृता अतोऽन्या वृद्धिरकृतेत्यर्थः सा न सम्भवति किन्तु कृतापि वृद्धिः वर्णक्रमेण द्विकत्रिकशतादिरूपैव मासे ग्राह्या। तथाच विष्णुः। वृद्धिन्दद्युरकृतामपि वत्सरातिक्रमे यथाभिहितं। वर्ण क्रमेणद्विकत्रिकादिकामित्यर्थः। किन्त्वकृतवृद्धावपि विशेषान्तर माह। कुत्सितात्प्रसरत्ययं पन्थाइति कुसीदपथः। अयमुत्तम र्णोयत् शूद्रविषयोक्तम्पञ्चकं शतं द्विजातेरपि गृह्णातीत्येव कुत्सितः पन्थाः पूर्व्वोक्ताद्धर्म्यवृद्धिकरादपकृष्टइत्येवं मन्वाद यआहुः। इयञ्चाकृता वृद्धिरुद्धारविषये याचनादूर्द्धं बोद्धव्या। तदाह कात्यायनः। प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितं याच्यमानन्न दत्तञ्चेद्वर्द्धते पञ्चकं शतम्॥ १५२ ॥

नातिसांवत्सरीं वृद्धिन्न चादृष्टाम्पुनर्हरेत्। चक्र
वृद्धिःकालवृद्धिः कारिता कायिका च या॥१५३॥

नातीति। मम्मैकस्मिन्मासि मासद्वये मासत्रये वा गते तस्य वृद्धिं विगणय्य एकदा दातव्येत्येवंविधनियमपूर्व्वक वृद्धिग्रहणमुत्तमर्णः सम्वत्सरपर्य्यन्तं कुर्य्यात्। नातिक्रान्ते सम्वत्सरे नियमस्य वृद्धिं गृह्णीयात्। नच शास्त्रादृष्टामुक्त धर्म्म्यद्विकत्रिकशताद्यधिकां गृह्णीयात्। अधर्म्मत्वबोधनार्थो निषेधः। चक्रवृद्ध्यादिचतुष्टयीञ्चाशास्त्रीयान्न गृह्णीयात्। तासां स्वरूपमाह। वृहस्पतिः। कायिका कायसंयुक्ता मास ग्राह्या च कालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता। तत्र चक्रवृद्धिः स्वरूपेणैव गर्हिता। कालवृद्धिस्तु द्विगुणाधिकग्रहणेन। कायिका चातिवाहदोहादिना। कारिता ऋणिकेन याआपत्कालएव उत्तमर्णपीडया कृता। चतस्रो ऽपिवृद्धीरशास्त्रीयान गृह्णीयात्। तथाच वृहस्पतिः। भागोय द्विगुणादूर्द्धं चक्रवृद्धिश्च गृह्यते। पूर्णे च सोदयम्पश्चात् वार्द्धुष्यं तद्विगर्हितम्। कात्यायनः। ऋणिकेन कृता वृद्धि रधिका सम्प्रकल्पिता। आपत्कालकृता नित्यन्दातव्या कारिता तथा। अन्यथा कारिता वृद्धिर्न्न दातव्या कथञ्चन॥१५३॥

ऋणन्दातुमशक्तोयः कर्त्तुमिच्छेत्पुनः क्रियाम्।
स दत्वा निर्जितां वृद्धिं करणम्परिवर्त्तयेत् ॥१५४॥

ऋणन्दातुमिति। योऽधमर्णोधनदानासामर्थ्यात्पुनर्लेख्यादिक्रियां कर्त्तुमिच्छेत्स निर्ज्जितां उक्तमार्गेण सत्यतया आत्मसात्कृतां वृद्धिं दत्वा करणं लेख्यं पुनः कुर्य्यात्॥१५४॥

अदर्शयित्वा तत्रैव हिरण्यम्परिवर्त्तयेत्। यावती
सम्भवेद्वृद्धिस्तावतीन्दातुमर्हति॥१५५॥

अदर्शयित्वेति। यदि दैवगत्या वृद्धिहिरण्यमपि समग्रं दातुन्न शक्नोति तदा तद्गृहीत्वैव तत्रैव पुनःक्रियमाणे लेख्यादौ वृद्धिहिरण्यादिशेषमारोपयेत्। यत्प्रमाणं चक्रवृद्धिधनं तदानीं सम्भवति तद्दातुमर्हति॥१५५॥

चक्रवृद्धिं समारूढोदेशकालव्यवस्थितः। अति
क्रामन् देशकालौ न तत्फलमवाप्नुयात् ॥१५६॥

चक्रवृद्धिमिति। चक्रवृद्धिशब्देनात्र चक्रवच्छकटादिभाटकरूपा वृद्धिरभिमता चक्रवृद्धिमाश्रितउत्तमर्णोदेशकालव्यवस्थितः। यदि वाराणसीपर्य्यन्तं लवणादि शकटेन वहामि तदा ममेयद्धनं दातव्यमिति वेतनरूपदेशव्यवस्थितिः यदि मासं यावद्वहामि तदा ममेयद्धनं दातव्यमिति कालव्यव

स्थितिः। एवमभ्युपगतदेशकालो नियमस्थो दैवादपूरयन् शकटादिनाऽवहन् लाभरूपफलं सकलं न प्राप्नोति ॥ १५६ ॥

समुद्रयानकुशला देशकालार्थदर्शिनः। स्थापयन्ति तु यां वृद्धिं सा तत्राधिगमम्प्रति ॥ १५७ ॥

अपितु समुद्रेति। स्थलपथजलपथयाने निपुणा इयद्देशपर्य्यन्तं इयत्कालपर्य्यन्तं वा उह्यमाने सति एतावाँल्लाभोग्रहीतुं युक्त इत्येवं देशकाललाभधनज्ञा वणिगादयो यां वृद्धिं तथाविधविषये व्यवस्थापयन्ति सैव तत्र व्यवस्था तत्राधिगमं धन प्राप्तिं प्रति प्रमाणम् ॥ १५७ ॥

योयस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः। अदर्शयन् स तं तस्य प्रयच्छेत्स्वधनादृणम् ॥ १५८ ।

योयस्येति। योमनुष्योयस्य दर्शनाय प्रतिभूस्तिष्ठेत् धनदानकाले मयायमधमर्णोदर्शनीयइति स तं तस्मिन् कालउत्तमर्णस्यादर्शयन् स्वधनात् तद्धनन्दातुं यतेत ॥ १५८ ॥

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत्।
दण्डशुल्कावशेषञ्च न पुत्रोदातुमर्हति ॥१५९॥

प्रातिभाव्यमिति। प्रतिभूत्वेन यद्देयन्धनन्तत्प्रातिभाव्यं। वृथादानं यत् परिहासनिमित्तं पण्डादिभ्योदेयत्वेन पित्राङ्गीकृतं। द्यूतनिमित्तं सुरानिमित्तञ्च यद्देयं दण्डं दण्डनिमित्तं शुल्कं घट्टादिदेयं तदवशेषञ्च पितृसम्बन्धि पितरि मृते पुत्रोदातुन्नार्हति ॥१५९॥

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्व्वचोदितः।
दानप्रतिभुवि प्रेते दायादानपि दापयेत्॥१६०॥

दर्शनेति। प्रातिभाव्यं न पुत्रोदातुमर्हतीतियोऽयम्पूर्व्वोपदेशः स दर्शनप्रतिभुवः पितुर्द्देयोज्ञेयः। दानप्रतिभुवि तु पितरि मृते पुत्रादीनपि ऋणन्दापयेत्॥१६०॥

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम्। पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना॥१६१॥
निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः। स्वधनादेव तद्दद्यान्निरादिष्टइति स्थितिः॥१६२॥

अदातरीति। निरादिष्टेति। अदातरि दानप्रतिभुवो अन्यस्मिन्दर्शनप्रतिभुवि प्रत्ययप्रतिभुवि वा विज्ञातप्रातिभाव्य

कारणमूलशोधनोचितधनग्रहणं यस्य तस्मिन्मृते दातोत्तमर्णः पश्चात्केन हेतुना धनं प्राप्तुमिच्छेत् प्रतिभुवोमृतत्वात् तत्पुत्रस्य चादानप्रतिभूपुत्रत्वेनादातृत्वादित्याशंक्याह निरादिष्टेति। असौ दर्शनप्रतिभूः प्रत्ययप्रतिभूर्वा यदि निरादिष्टधनः अधमर्णेन निसृष्टधनः यावता धनेनासौ प्रतिभूस्तच्छोधनपर्य्याप्तधनः तदात्मधनादेव तद्धननिरादिष्टोऽत्र निरादिष्टधनपुत्रो लक्षणयोच्यते ऋणमुत्तमर्णाय दद्यादिति शास्त्रं ॥ १६१ ॥ १६२ ॥

मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थविरेण वा। असंबद्धकृतश्चैव व्यवहारोन सिद्ध्यति ॥ १६३॥

मत्तोन्मत्तेति। मद्यादिना मत्तउन्मत्तोव्याध्यादिपीडितस्ताभ्यामस्वतन्त्रबालवृद्धैरस्वतन्त्रत्वेन पितृभ्रातृनियुक्तादिव्यतिरिक्तेन वा कृतऋणादानव्यवहारोन सिद्ध्यति ॥ १६३ ॥

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता। बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥१६४॥

सत्येति। इदं मयानुष्ठेयमित्येवमादिका या भाषा लेख्या

दिना स्थिरीकृतापि यदि शास्त्रीयधर्म्मात्याचारम्पर्य्यात्तद्व्यव हाराच्च वहिर्भाव्यते तदा सा सत्या न भवति तदर्थोनानुष्ठेयः ॥ १६४ ॥

योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिम्पश्येत्तत्सर्व्वं विनिवर्त्तयेत् ॥ १६५ ॥

योगाधमनेति। योगशब्दश्छलवाची छलेन ये बन्धक विक्रयदानप्रतिग्रहाः क्रियन्ते न तत्त्वतोऽन्यत्रापि निःक्षेपादौ यत्र छद्म जानीयात् वस्तुतोनिःक्षेपादि न कृतं तत्सर्व्वं निव र्त्तते ॥ १६५ ॥

ग्रहीता यदि नष्टः स्यात् कुटुम्बार्थे कृतोव्ययः। दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः ॥ १६६ ॥

ग्रहीतेति। ऋणग्रहीता यदि मृतः स्यात्तेनच पूर्व्वविभक्ता विभक्तसर्व्वभ्रातृकुटुम्बसंवर्द्धनार्थं तदृणव्ययः कृतः तदा तदृणं विभक्तैरविभक्तैश्च स्वधनाद्दातव्यम् ॥ १६६ ॥

कुटुम्बार्थेऽध्यधीनोपि व्यवहारं यमाचरेत्। स्वदे शे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥ १६७ ॥

कुटुम्बार्थइति। तद्देशस्थे देशान्तरस्थे वा स्वामिनि स्वामि सम्बन्धिकुटुम्बव्ययनिमित्तं दासोपि यदृणादानादि कुर्य्यात् स्वामी तत्तथाऽनुमन्येत ॥ १६७ ॥

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम्।
सर्व्वान् बलकृतानर्थानकृतान्मनुरब्रवीत्॥१६८॥

बलाद्दत्तमित्यादि। बलाद्दत्तमप्रतिग्राह्यं बलाद्भुक्तभूम्यादि बलाल्लेखितञ्चऋद्धिपत्रादि प्रदर्शनञ्चैतत्सर्व्वान् बलकृतान् व्यवहारान्निवर्त्तनीयान्मनुराह॥१६८॥

त्रयः परार्थे क्लिश्यन्ति साक्षिणः प्रतिभूः कुलम्।
चत्वारस्तूपचीयन्ते विप्र आढ्यो वणिङ्नृपः॥१६९॥

त्रयः परार्थ इति। साक्षिणः प्रतिभूः कुलञ्च धर्म्मार्थव्यवहारेषु त्रय एते परार्थं क्लेशमनुभवन्ति तस्मादनेन साक्ष्यं प्रातिभाव्यं व्यवहारेक्षणञ्च नामी कारयितव्याः। चत्वारः पुनर्ब्राह्मणोत्तमर्णवणिग्राजानः परार्थन्दानफलोत्पादनक्षण द्रव्यार्पणविक्रयव्यवहारेक्षणरूपं कुर्व्वाणा धनोपचयं प्राप्नुवन्ति। तस्माद्विप्रोदातारं आढ्योऽधमर्णं वणिक् क्रेतारं राजा व्यवहर्त्तारमबलेन न प्रवर्त्तयेत्। पूर्व्वश्लोकाभिहितबलनिषेधस्यैवायम्प्रपञ्चः॥१६९॥

अनादेयन्नाददीत परिक्षीणोपि पार्थिवः। नचादेयं समृद्धोपि सूक्ष्ममप्यर्थमुत्सृजेत्॥१७०॥

अनादेयमिति। क्षीणधनोपि राजा नाग्राह्यमर्थं गृह्णीयात् समृद्धोपि स्वल्पमपि ग्राह्यं धनं न त्यजेत्॥१७०॥

अनादेयस्य चादानाद्दादेयस्य च वर्जनात्।
दौर्बल्यं ख्याप्यते राज्ञः स प्रेत्येह च नश्यति ॥१७१॥

यस्मात् अनादेयस्येति। अग्राह्यग्रहणात् शास्त्रीयग्राह्यपरित्यागाच्च राज्ञः पौरैरसामर्थ्यं ख्याप्यते। ततस्य सप्रेत्याधर्म्मेण नरकादिभोगादिहलोकेचाकीर्त्या विनश्यति ॥ १७१ ॥

स्वादानाद्वर्णसंसर्गात्त्ववलानाञ्च रक्षणात्। बलं संजायते राज्ञः स प्रेत्येह च वर्द्धते ॥ १७२ ॥

स्वादानादिति। न्याय्यधनग्रहणाद्वर्णानां सजातीयैः शास्त्रीयपरिणयनादिसम्बन्धात् यद्वा वर्णसंसर्गाद्वर्णसङ्कारादित्यत्रापि रक्षणादिति योजनीयं प्रजानां दुर्ब्बलानां बलवद्भ्योऽपि रक्षणात्सामर्थ्यमुपजायते नृपस्य ततश्चासाविह लोकपरलोकयोश्च वर्द्धते ॥ १७२ ॥

तस्माद्यमइव स्वामी स्वयं हित्वा प्रियाप्रिये। वर्त्तेत याम्यया वृत्त्या जितक्रोधोजितेन्द्रियः ॥ १७३ ॥

यतएवम् तस्माद्यमेति। तस्माद्यमइव राजा वशीकृतक्रोधो जितेन्द्रियः स्वकीयेऽपि प्रियाप्रिये परित्यज्य यमस्य चेष्टया सर्व्वत्र साम्यरूपया वर्त्तेत ॥ १७३ ॥

यस्त्वधर्म्मेण कार्य्याणि मोहात्कुर्य्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्व्वन्ति शत्रवः ॥ १७४ ॥

यतोयस्त्वधर्म्मेणेति । यः पुनर्नृपतिर्लोभादिव्यामोहाद धर्म्मेण व्यवहारदर्शनादीनि कार्य्याणि कुरुते तन्दुष्टचित्तं प्रकृति पौरविरागाच्छिप्रमेव शत्रवोनिगृह्णन्ति ॥ १७४ ॥

कामक्रोधौ तु संयम्य योऽर्थान् धर्म्मेण पश्यति ।
प्रजास्तमनुवर्त्तन्ते समुद्रमिव सिन्धवः ॥ १७५ ॥

कामक्रोधेति । योराजा रागद्वेषौ विहाय धर्म्मेण कार्य्याणि निरूपयति तं राजानं प्रजाभजन्ते समुद्रमिव नद्यः नद्योयथा समुद्रान्न निवर्त्तन्ते तेनैवैकतां यान्ति प्रजाअपि तस्मान्नृपादनु वर्त्तिन्यः तदेकतानाभवन्तीति साम्यम् ॥ १७५ ॥

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे । स राज्ञा
तच्चतुर्भागन्दाप्यस्तस्य च तद्धनम् ॥ १७६ ॥

यः साधयन्तमिति । योऽधमर्णोराजवल्लभोऽहमिति गर्व्वा दुत्तमर्णं स्वेच्छया धनं साधयन्तं नृपे निवेदयेत् स राज्ञा ऋणचतुर्भागन्दण्ड्यः तस्य तद्धनं दापनीयः ॥ १७६ ॥

कर्म्मणापि समं कुर्य्याद्धनिकायाधमर्णिकः। समोऽवकृष्टजातिस्तु दद्याच्छ्रेयांस्तु तच्छनैः ॥ १७७॥

कर्म्मणापीति। समानजातिरपकृष्टजातिश्चाधमर्णोधनाभावे सति स्वजात्यनुरूपकर्म्मकरणेनापि समं कुर्य्यात्। निवृत्तोत्तमर्णाधमर्णव्यपदेशतया धनिकसममात्मानं कुर्य्यात्। समजातिरत्र ब्राह्मणेतरः कर्म्मणा चत्रविट्शूद्रान्समान् हीनांश्च दापयेत् इति कात्यायनेन विशेषितत्वात्। श्रेयान्पुनरुत्कृष्टजातिर्न्न कर्म्म कारयितव्यः किन्तु शनैःशनैर्यथासम्भवं तद्धनन्दद्यात्॥ १७७ ॥

अनेन विधिना राजा मिथोविवदतां नृणाम्। साक्षिप्रत्ययसिद्धानि कार्य्याणि समतान्नयेत्॥१७८॥

अनेनेति। अनेन उक्तप्रकारेण परस्परं विवदमानानामर्थिप्रत्यर्थिनां साक्ष्यादिप्रमाणेन निर्णीतानि कार्य्याणि विप्रतिपत्तिखण्डनेन राजा समीकुर्य्यात्॥ १७८॥

कुलजे वृत्तसम्पन्ने धर्म्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्य्ये निक्षेपन्निक्षिपेद्बुधः॥ १७९ ॥

कुलजइति। सत्कुलप्रसूते सदाचारवति धर्म्मवेदिनि सत्याभिधायिनि बहुपुत्रादिपरिजने ऋजुप्रकृतौ मनुष्ये व्यभिचाराभावान्निक्षेपं स्थापयेत्॥ १७९॥

योयथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः। स तथैव ग्रहीतव्योयथा दायस्तथा ग्रहः॥ १८० ॥

योयथेति। योमनुष्योयेन प्रकारेण मुद्रारहितं समुद्रं वा ससाक्षिकमसाक्षिकं वा यमर्थं सुवर्णादि यस्य हस्ते निक्षिपेत्सो ऽर्थस्तेन निक्षेप्त्रा तथैव ग्राह्योयस्मात् येन प्रकारेण समर्पणं तेनैव प्रकारेण ग्रहणं न्याय्यं। समुद्रस्थापितसुवर्णादेर्निक्षेप्ता स्वयमेवमुद्रां भित्त्वा यदा वदति ममेदं तुलयित्वा समर्पये त्यभिधाने दण्डाद्यर्थमिदं ॥ १८० ॥

योनिक्षेपं याच्यमानोनिक्षेप्तुर्न प्रयच्छति। स याच्यः प्राड्विवाकेन तन्निःक्षेप्तुरसन्निधौ॥ १८१ ॥

योनिक्षेपेति। यः पुरुषोदेहि मे निक्षिप्तं हिरण्यादिद्रव्यमि त्येवन्निक्षेप्त्रा प्रार्थ्यमानस्तस्य यदा न समर्पयति तदा निक्षेप्त्रा ज्ञापिते प्राड्विवाकेन तस्य निक्षेप्तुरसन्निधौ याचनीयः॥१८१॥

साक्ष्यभावे प्रणिधिभिर्व्वयोरूपसमन्वितैः। अप देशैश्च संन्यस्य हिरण्यन्तस्य तत्त्वतः॥ १८२ ॥

किं कृत्वा याचनीय मित्याह साक्ष्येति। प्रथमनिक्षेपे साक्ष्यभावे स्वकीयसभ्यैश्चारपुरुषैः अतिक्रान्तवाल्यैः सौम्या दिभिर्नृपोपद्रवादिव्याजाभिधायिभिर्हिरण्यानि तत्त्वेन तत्र

निक्षेपयित्वा तैरेव चारपुरुषैः स निःक्षेपधारी प्राड्विवाकेन चारपुरुषनिक्षिप्तसुवर्णं याच्यः ॥ १८२ ॥

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्। न तत्र विद्यते किञ्चिद्यत्परैरभियुज्यते ॥ १८३ ॥

स यदीति। स निक्षेपधारी यथान्यस्तं समुद्रमसुद्रम्वा यथा कृतं कटकमुकुटाद्याकारेण रचितं यदि तथैव प्रतिपद्येत सत्य मस्ति गृह्यतामिति तदा परेण पूर्व्वनिक्षेप्त्रा प्राड्विवाकवेदिना यन्निक्षिप्तमित्यभियुज्यते तत्र न किञ्चिदस्तीति ज्ञातव्यम् ॥ १८३ ॥

तेषान्न दद्याद्यदि तु तद्धिरण्यं यथाविधि। उभौ निगृह्य दाप्यः स्यादिति धर्म्मस्य धारणा ॥ १८४ ॥

तेषामिति। तेषां चारपुरुषाणां यन्निक्षिप्तं हिरण्यं यथा न्यस्तं यदि तन्न दद्यात्तदा द्वावपि निक्षेपौ ज्ञापकचारसम्ब न्धिनौ सम्पीड्य दापनीयः स्यादित्येवंरूपो धर्म्मस्य धारणा निश्चयः। योनिक्षेपमित्यादिश्लोकचतुष्टयस्य चेदृश एव पाठ क्रमो मेधातिथिभोजदेवादिभिर्निश्चितः। गोविन्दराजेन तु साक्ष्यभावे प्रणिधिभिरिति श्लोकोऽन्त एव पठितः तदा च नार्थसङ्गतिः। नवा वृद्धाम्नायादरः ॥ १८४ ॥

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे। नश्यतोविनिपाते तावनिपाते त्वनाशिनौ॥ १८५॥

निक्षेपइति। निक्षिप्यतइति निक्षेपः मुद्राङ्कितमगणितं वासनस्थं वा यन्निधीयते स उपनिधिः ब्राह्मणपरिव्राजकवदुपदेशभेदः। तौ निक्षेपोपनिधी निक्षेप्तरि उपनिधातरि च जीवति प्रत्यनन्तरे तदीयपुत्रादौ तदनन्तरे तद्धनाधिकारिणि कदाचिन्न निक्षेपधारिणा देयौ यतस्तस्य पुत्रादेरपि पितुरसमर्पण विनाशे तौ निक्षेपोपनिधी नश्यतः पुत्रादेः पुनरविनाशे समर्पणेच कदाचिदविनाशिनौ स्यातां तस्मादनर्थसन्देहान्न देयौ॥ १८५॥

स्वयमेव तु योदद्यान्मृतस्य प्रत्यनन्तरे। न स राज्ञा नियोक्तव्योन निक्षेप्तुस्च बन्धुभिः॥ १८६॥

स्वयमेवेति। निक्षेप्तुर्मृतस्य निक्षेपधारी निक्षिप्तधनं तद्धनाधिकारिणि पुत्रादौ तदनभ्यर्थितः स्वयमेव यः समर्पयति स राज्ञा निक्षेप्तुः पुत्रादिभिर्वान्यदपि त्वयि निक्षिप्तमस्तीति नाक्षेप्तव्यः॥ १८६॥

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्व्वकम्। विचार्य्य तस्य वा वृत्तं साम्नैव परिसाधयेत्॥ १८७॥

यदिकथञ्चिद्भ्रान्तिः स्यात्तदा अच्छलेनैवेति। तद्धस्ते

धनान्तरसद्भावलक्षणवाक्छलादिपरिहारेणैव प्रीतिपूर्व्वकं निश्चिनुयात् न तु झटिति दिव्यादि दानेन। तस्य निक्षेपधारिणः शीलमवेक्ष्य धार्म्मिकोऽयमिति ज्ञात्वा सामप्रयोगेण निश्चिनुयात्॥ १८७॥

निक्षेपेष्वेषसर्व्वेषु विधिः स्यात्परिसाधने। समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत्॥ १८८॥

निक्षेपेष्विति। सर्व्वेषु निक्षेपेषु अपक्रियमाणेषु एष साक्ष्य भावइत्यादिपूर्व्वोक्तविधिर्निर्णयसिद्धौ स्यात्। मुद्रितादौ पुन स्तस्य निक्षेपधारी यदि प्रतिमुद्रादिना न किमप्यपहरेत्तदा न तस्मिन्नपि तेन किञ्चिद्दूषणमाप्नुयात्॥ १८८॥

चौरैर्हृतञ्जलेनोढमग्निना दग्धमेव वा। न दद्याद्यदितस्मात्स न संहरति किञ्चन॥ १८९॥

चौरैरिति चौरैर्मुषितं उदकेन देशान्तरप्रापितं अग्निना दग्धं वा निक्षेपादि निक्षेपधारी न दद्यात्। यदि स्वयं तस्मान्न किञ्चिदप्यपहरति॥ १८९॥

निक्षेपस्यापहर्त्तारमनिक्षेप्तारमेव च। सर्व्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः॥ १९०॥

निक्षेपस्येति। निक्षेपस्यापहर्त्तारं तथा अनिक्षिप्य याचितारं

सर्व्वैः सामादिभिरुपायैर्व्वैदिकैश्च शपथैरग्निहरणादिभिर्नृ पोनिरूपयेत् ॥ १९० ॥

योनिक्षेपन्नार्पयति यश्चानिक्षिप्य याचते। तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समन्दमम् ॥ १९१ ॥

योनिक्षेपमिति। निक्षिप्तधनं योन समर्पयति यश्चानिक्षिप्य प्रार्थयति तौ द्वौ सुवर्णमुक्तादौ महति विषये चौरवद्दण्ड्यौ। स्वल्पविषये ताद्यादौ तत्समन्दण्डनीयौ ॥ १९१ ॥

निक्षेपस्यापहर्त्तारन्तत्समन्दापयद्दमम्। तथाप निधिहर्त्तारमविशेषेण पार्थिवः ॥ १९२ ॥

निक्षेपेति। निक्षेपापहारिणं निक्षिप्तसमधनन्दण्डयेत्। समशिष्टत्वात् अनिक्षिप्य याचितारमपि। नच पुनरुक्तिः मह त्यपराधे ब्राह्मणेतरस्य चौरवदिति पूर्व्वश्लोकेन शारीरदण्ड स्यापि प्राप्तौ तन्निवृत्त्यर्थमिदम् दापयेदिति धनदण्डनिय मात्। नचानेन पूर्व्वश्लोकवैयर्थ्यं। अस्य प्रथमापराधविषयत्वा त्पूर्व्वोक्ते चाभ्यासे चौरोक्तोत्तमसाहसादिधनदण्डबोधक त्वात्। उपनिधिमुद्रादिचिह्नितनिहितधनम् तस्यापहर्त्तारं कथितविशेषेण राजा दण्डयेत् ॥ १९२ ॥

उपधाभिश्च यः कश्चित्परद्रव्यं हरेन्नरः। ससहायः स हन्तव्यः प्रकाशं विविधैर्व्वधैः ॥ १९३॥

उपधेति। राजा त्वयि रुष्टस्तस्मात्त्वां रक्षामि मम धनन्देहि धनधान्यादिलोभोपकरणं वाऽनृतमभिधाय छद्मभिर्यः परद्रव्यं गृह्णाति स छद्मधनग्रहणसहकारिसहितो बहुजनसमक्षं करचरणशिरश्छेदादिभिर्नानाप्रकारैर्व्वधोपायैः राज्ञा हन्तव्यः॥ १९३॥

निक्षेपोयः कृतोयेन यावांश्च कुलसन्निधौ। तावानेव स विज्ञेयोविब्रुवन् दण्डमर्हति ॥ १९४॥

निक्षेपेति। यः सुवर्णादिर्यावत्यलपरिमितोयेन साक्षिसमक्षं निक्षेपः कृतः तत्र परिमाणादिविप्रतिपत्तौ साक्षिवचनात्तावानेव विज्ञातव्यः। विप्रतिपत्तिं कुर्व्वन्नर्पयेतदुक्तानुसारेण दण्डनीयः॥ १९४॥

मिथोदायः कृतोयेन गृहीतोमिथएव वा। मिथएव प्रदातव्योयथा दायस्तथा ग्रहः॥ १९५॥

मिथोदायइति। रहसि येन निक्षेपोऽर्पितोनिक्षेपधारिणा च रहस्येव गृहीतः स निक्षेपो रहस्येव प्रत्यर्पणीयः। न प्रत्यर्पणे

साच्यपेचा यस्मात् येनैव प्रकारेण दानं तेनैव प्रकारेण प्रत्यर्पणं प्रदातव्यइति श्रवणान्निक्षेपधारिणोऽयं नियमविधिः। यो यथा निक्षिपेद्धस्तइति तु निक्षेप्तुर्नियमार्थं ग्रहीतव्यइति श्रवणात् अतोन पौनरुक्त्यम् ॥ १९५ ॥

निक्षिप्तस्य धनस्यैवम्प्रीत्योपनिहितस्य च। राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणम् ॥१९६॥

निक्षिप्तस्येति। राजा निक्षिप्तस्य धनस्यामुद्रस्य मुद्रादियुतस्य वा उपनिधिरूपस्य तथाप्रीत्या कतिचित्कालभोगार्थमर्पितस्यानेनोक्तप्रकारेण न्यस्तधनधारिणमपीडयन् निर्णयं कुर्य्यात् ॥ १९६ ॥

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः। न तन्नयेत साच्यन्तु स्तेनमस्तेनमानिनम् ॥ १९७॥

विक्रीणीतेइति। अस्वामी यः स्वामिना चाननुमतः परकीयन्द्रव्यं विक्रीणीते वस्तुतश्चौरमचौरमात्मानं मन्यमानन्तं साक्षित्वन्न कारयेत् न कुत्रचिदपि प्रमाणीकुर्य्यादित्यर्थः ॥ १९७ ॥

अवहार्य्योभवेच्चैव सान्वयः षट्शतन्दमं। निर न्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्विषं ॥ १९८ ॥

अवहार्य्येति। एष परस्वविक्रयी यदि स्वामिनोभ्रात्रादि रूपत्वेन सान्वयः सम्बन्धी भवति तदा षट्पणशतानि अवहा र्य्योदण्डनीयः यदि पुनः स्वामिनः सम्बन्धी न भवति अनप सरश्च स्यात् अपसरत्यनेनास्मात् सकाशाद्धनमित्यपसरः प्रतिग्रहक्रयादिः स यस्य स्वामिसम्बन्धिपुत्रादेः सकाशान्नास्ति तदा चौरसम्बन्धिपापं प्राप्नोति तद्वद्दण्डनीयइत्यर्थः ॥ १९८ ॥

अस्वामिना कृतोयस्तु दायोविक्रयएव वा। अकृतः सतु विज्ञेयोव्यवहारे यथा स्थितिः ॥१९९॥

अस्वामिनेति। अस्वामिना यद्दत्तं यत्क्रीतं विक्रीतं वा तद कृतमेव बोद्धव्यम् व्यवहारे यथा मर्य्यादा तथा कृतं न भवती त्यर्थः ॥ १९९ ॥

सम्भोगोदृश्यते यत्र न दृश्येतागमः क्वचित्। आगमः कारणन्तत्र न सम्भोगइति स्थितिः॥ २०० ॥

सम्भोगइति। यस्मिन् वस्तुनि सम्भोगोविद्यते क्रयादि रूपस्त्वागमोनास्ति तत्र प्रथमपुरुषगोचरआगमएव प्रमाणं न भोगइति शास्त्रमर्य्यादा ॥ २०० ॥

विक्रयाद्योधनं किञ्चिद्गृह्णीयात्कुलसन्निधौ ।
क्रयेण स विशुद्धं हि न्यायतोलभते धनम् ॥ २०१ ॥

विक्रयादिति । विक्रीयते अस्मिन्निति विक्रयदेशोविक्रयः ततोयत् क्रेयधनं किञ्चिद्व्यवहर्त्तृसमूहसमचं क्रीयतेऽनेनेति क्रयोमूल्यं तेन यस्माद्गृह्णीयात् अतोन्यायतएवास्वामिविक्रेट स्वकाशात्क्रयणाद्विशुद्धं धनं लभते ॥ २०१ ॥

अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितः । अद
ण्ड्योमुच्यते राज्ञा नाष्टिकोलभते धनम् ॥ २०२ ॥

अथेति । अथ मूलमस्वामी विक्रेता मरणाद्देशान्तरगम नादिना वा व्यवहर्त्तुं न शक्यते प्रकाशक्रयणेनासौ निश्चितः तदा दण्डानर्हएव क्रेता राज्ञा मुच्यते नष्टधनस्वामी च यद स्वामिना विक्रीतं द्रव्यं तत् क्रेतुर्हस्ताल्लभते अत्र च विषयेऽर्द्धं मूल्यं क्रेतुर्दत्वा स्वधनं स्वामिना ग्राह्यं तदाह बृहस्पतिः । अविज्ञातस्त्वय वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः । क्रीतं विक्रेता यत्र वा मृतः । स्वामी दत्वार्द्धमूल्यन्तु प्रगृह्णी यात्स्वकन्धनम् । अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः ॥ २०२ ॥

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति। नचा
सारं नच न्यूनन्न दूरेन तिरोहितम्॥ २०३॥

नान्येति। कुङ्कुमादिद्रव्यं कुसुम्भादिना मिश्रीकृत्य न विक्रे
तव्यं नचासारं सारमित्यभिधाय नच तुलादिना न्यूनं नच
परोक्षावस्थितन्न च रागादिना स्थापितरूपं अत्रास्वामि
विक्रयसादृश्यादस्वामिविक्रयदण्ड एव स्यात्॥ २०३॥

अन्यांचेद्दर्शयित्वान्या वोढुः कन्या प्रदीयते।
उभे ते एकशुल्केन वहेदित्यब्रवीन्मनुः॥ २०४॥

अन्याञ्चेति। शुल्कदेयां कन्यां शुल्कव्यवस्थाकाले निरवद्यां
दर्शयित्वा यदि सावद्या वरस्य दीयते तदा द्वे अपि कन्ये
तेनैवैकेन शुल्केनासौ वरः परिणयेदिति मनुराह। शुल्क
ग्रहणपूर्व्वकं कन्यायादानस्य विक्रयरूपत्वादयंक्रयविक्रयसा
धर्म्म्येणात्राभिधानम्॥ २०४॥

नोन्मत्तायान कुष्ठिन्यानच या स्पृष्टमैथुना।
पूर्व्वं दोषानभिख्याप्य प्रदाता दण्डमर्हति॥ २०५॥

नोन्मत्तेति। उन्मत्तायास्तथा कुष्ठवत्याया चानुभूतमैथुना
तस्यात्राह्मादिविवाहात्पूर्व्वमुन्मादादीन् दोषान्वरस्य कथ

यित्वा दाता दण्डार्हो न भवेत् तेनाकथने दण्ड्यइति गम्यते यस्तु दोषवतीं कन्यामिति वक्ष्यति ॥ २०५ ॥

ऋत्विग्यदि वृतोयज्ञे स्वकर्म्म परिहापयेत्। तस्य कर्म्मानुरूपेण देयोऽंशस्सहकर्तृभिः ॥ २०६ ॥

अथ सम्भूय समुत्थानमाह ऋत्विगिति। यज्ञे कृतवरण ऋत्विक् यदि किञ्चित्कर्म्म कृत्वा व्याध्यादिना कर्म्म त्यजति तदा तस्येतरऋत्विग्भ्यः पर्य्यालोच्य कृतानुसारेण दक्षिणांशोदेयः॥ २०६ ॥

दक्षिणासु च दत्तासु स्वकर्म्म परिहापयन्। कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥ २०७ ॥

दक्षिणेति। माध्यन्दिनसवनादौ दक्षिणाकाले दक्षिणासु दत्तासु व्याध्यादिना कर्म्म परित्यजन्न तु शाठ्यात् कृत्स्नमेव दक्षिणाभागं लभेत कर्म्मशेषं प्रकृतमन्येन कारयेत्॥ २०७ ॥

यस्मिन् कर्म्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः। सएव ताआददीत भजेरन्सर्व्वएव वा ॥ २०८ ॥

यस्मिन्निति। यस्मिन् कर्म्मण्याधानादौ अङ्गमङ्गम्प्रति या दक्षिणायत्सम्बन्धेन श्रुताः स्युः सएव ताआददीत उत तत्तद्भागमात्रं सर्व्वे विभज्य गृह्णीरन्निति संशयः॥ २०८॥

रथं हरेत चाध्वर्य्युर्ब्रह्माधाने च वाजिनम्।
होता वापि हरेदश्वमुद्गाता चाप्यनःक्रये ॥ २०९ ॥

अत्र सिद्धान्तमाह रथमिति। केषाञ्चित् शाखिनामाधाने ऽध्वर्य्यवे रथोदेयत्वेनाम्नायते ब्रह्मणे वेगवानश्वः होत्रे चाश्वः उद्गात्रे सोमक्रये सोमवहनशकटमतोव्यवस्थाम्नानसामर्थ्याद्या दक्षिणा यत्सम्बद्धत्वेन श्रूयते सएव तामाददीत ॥ २०९ ॥

सर्व्वेषामर्द्धिनोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे। तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥ २१० ॥

सम्प्रतिपत्तिविधाने दक्षिणाविभागमाह सर्व्वेषामिति। तं शतेन दीक्षयतीति श्रूयते तत्र सर्व्वेषां षोडशानां ऋत्विजां मध्ये ये मुख्या ऋत्विजः होत्रध्वर्य्युब्रह्मोद्गातारः समग्रदक्षिणा यास्ते अर्द्धहराः अष्टचत्वारिंशद्भाजोभवन्ति अतएव कात्यायनेन द्वादश द्वादशाद्येभ्यइति प्रत्येकं द्वादशगो दानं विहितम्। यद्यपि शतस्यार्द्धम्पञ्चाशद्भवति तथापीह न्यूनार्द्धग्रहणेनापि इमे अर्द्धिनउच्यन्ते सामीप्याद‌परे मैत्राव रुणप्रतिस्तोतृब्राह्मणाच्छंसिप्रस्तोतारस्ते मुख्यर्त्विग्गृहीतदक्षि णार्द्धग्रहणेनार्द्धिनउच्यन्ते तृतीयिनोऽच्छावाक् नेष्ट्राग्नीध्रप्रति

हर्त्तारः ते मुख्यर्लिग्गृहीतस्य तृतीयमंशं लभन्ते पादिनस्तु यावदुन्नेटपोतृसुब्रह्मण्या एते मुख्यर्लिग्गृहीतस्य चतुर्थमंशं लभन्ते एतच्च षट् षट् द्वितीयेभ्यः चतस्रस्तस्रस्तृतीयेभ्यस्तिस्रस्तिस्रश्चतुर्थेभ्य इति सूचयता कात्यायनेन स्फुटीकृतम् ॥ २१० ॥

सम्भूय स्वानि कर्म्माणि कुर्व्वद्भिरिह मानवैः।
अनेन विधियोगेन कर्त्तव्यांशप्रकल्पना ॥ २११ ॥

सम्भूयेति। मिलित्वा गृहनिर्म्माणादीनि स्वकर्म्माणि लोके स्थपतिसूत्रधारादिभिर्मनुष्यैः कुर्व्वद्भिरनेन यज्ञदक्षिणा विधानाश्रयणेन विज्ञानव्यापाराद्यपेक्षया भागकल्पना कार्य्या ॥ २११ ॥

धर्म्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम्।
पश्चाच्च न तथा तत्स्यान्न देयन्तस्य तद्भवेत् ॥ २१२॥

इदानीं दत्तानपकर्म्माह धर्म्मार्थमिति। येन यागादिकर्म्मार्थं कस्मैचिद्याचमानाय धनन्दत्तं प्रतिश्रुतं वा स्यात् पश्चाच्च तद्धनमसौ यागार्थं न विनियुञ्जीत तदा तद्दत्तमपि धनं ग्राह्यं प्रतिश्रुतञ्च न देयं। यदाह गौतमः। प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात् ॥ २१२ ॥

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः। राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः॥ २१३॥

यदिति। यदि तद्दत्तमसौ गृहीत्वा लोभादहङ्काराद्वा न त्यजति प्रतिश्रुतं वा धनं बलेन गृह्णाति तदा तस्य चौर्य्यपापस्य शुद्ध्यर्थं राज्ञा सुवर्णन्दण्डन्दापनीयोभवेत्॥ २१३॥

दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया। अत ऊर्द्ध्वं प्रवक्ष्यामि वेतनस्यानपक्रियाम्॥ २१४॥

दत्तस्येति। एतद्दत्तस्याप्रतिपादनं धर्म्मादनपेतं तत्त्वतउक्तं अतोऽनन्तरं भृतेरसमर्पणादिकं वक्ष्यामि॥ २१४॥

भृतोनार्त्तो न कुर्य्याद्योदर्पात्कर्म्म यथोदितम्। स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्॥२१५॥

भृतइति। योभृतिपरिक्रीतोव्याध्यपीडितोयथानिरूपितं कर्म्माहङ्कारान्न कुर्य्यात् सकर्म्मानुरूपेण सुवर्णकृष्णलान्यष्टौ दण्डनीयः वेतनञ्चास्य न देयम्॥ २१५॥

आर्त्तस्तु कुर्य्यात्स्वस्थः सन् यथाभाषितमादितः॥ स दीर्घस्यापि कालस्य तल्लभेतैव वेतनम्॥ २१६॥

आर्त्तइत्यादि। यदा व्याध्यादिपीडया कर्म्म न करोति

स्वस्थः सन् यादृग्भाषितं पूर्वं तादृक्कर्म्म कुर्य्यात् वेतनञ्च स चिरकालादपि लभेतैव ॥ २१६ ॥

यथोक्तमार्त्तः स्वस्थोवा यस्तत्कर्म्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कार्म्मणः ॥ २१७ ॥

यथोक्तमिति। यत्कर्म्म यथाभाषितम्पीडितोऽन्येन नकारयेत् स्वस्थोवा न कुर्य्यात् नापि कारयेत् तस्य किञ्चित्शेषस्यापि कृतस्य कर्म्मणोवेतनन्न देयम् ॥ २१७ ॥

एषधर्म्मोऽखिलेनोक्तोवेतनादानकर्म्मणः। अत ऊर्द्धं प्रवक्ष्यामि धर्म्मं समयभेदिनाम् ॥ २१८ ॥

एषधर्म्मइति। एषा व्यवस्था वेतनादानाख्यकर्म्मणोनिःशेषेणोक्ता अतोऽनन्तरं संविद्व्यतिक्रमकारिणां दण्डादिव्यवस्थां वदिष्यामि ॥ २१८ ॥

योग्रामदेशसंघानां कृत्वा सत्येन संविदम्।
विसंवदेन्नरोलोभात्तं राष्ट्राद्विप्रवासयेत् ॥ २१९ ॥

योग्रामेति। ग्रामदेशशब्दाभ्यान्तद्वासिनोलक्ष्यन्ते संघोवणिगादिसमूहः इदमस्माभिः कर्त्तव्यमपरिहार्य्यमित्येवंरूपं संकेतं सत्यादिशपथेन कृत्वा तन्मध्ये योनरोलोभादिनातिक्रामेत्तं राजा राष्ट्रान्निर्व्वासयेत् ॥ २१९ ॥

निगृह्य दापयेच्चैनं समयव्यभिचारिणम्। चतुः सुवर्णान् षण्निष्कान्छतमानञ्च राजतं ॥ २२० ॥

निगृह्येति। अथ चैनं संविद्व्यतिक्रमकारिणं निरुध्य चतुरः सुवर्णान् षण्निष्कान् प्रत्येकञ्चतुःसुवर्णपरिमितान् राजतञ्च शतमानं विंशत्यधिकरत्तिकाशतत्रयपरिमाणन्त्रयमेतद्विषयलाघवगौरवापेक्षया समुचितं व्यस्तं वा राजा दण्डन्दापयेत् ॥ २२० ॥

एतन्दण्डविधिं कुर्य्याद्धार्म्मिकः पृथिवीपतिः। ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥ २२१ ॥

एतमिति। ग्रामेषु ब्राह्मणादिजातिसमूहेषु च संविद्व्यतिक्रमकारिणामेतन्दण्डविधिन्धर्म्मप्रधानो राजानुतिष्ठेत् ॥ २२१ ॥

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यन्दद्याच्चैवाददीत वा ॥ २२२ ॥

क्रीत्वेति। क्रीत्वा विक्रीय वा किञ्चिद्द्रव्यमविनश्वररूपं स्थिरार्घं भूमिताम्रपट्टादि यस्य लोके पश्चात्तापो जायते न साधु मया क्रीतमिति स क्रीतन्दशाहमध्ये प्रत्यर्पयेत्। विक्रीतं वा गृह्णीयात ॥ २२२ ॥

परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आद
दानोददच्चैव राज्ञा दण्ड्यः शतानि षट्॥ २२३ ॥

परेणेति। दशाहादूर्द्ध्वं क्रीतन्न त्यजेत् नापि विक्रीतं विक्रा
यकोऽदत्तेन दापयेत्। विक्रीतं बलेन गृह्णन् क्रीतञ्च परित्यजन्
राज्ञा षट् शतानि पणान् दण्ड्यः॥ २२३ ॥

यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति। तस्य
कुर्य्यान्नृपोदण्डं स्वयं षण्णवतिम्पणान्॥ २२४ ॥

यस्त्विति। नोन्मत्तायाइति सामान्येनोक्तन्दण्डविशेषा
भिधानार्थमिदं उन्मादादिदोषानकथयित्वा दोषवतीं कन्यां
वराय यः प्रयच्छति तस्य राजा स्वयमादरेण षण्णवतिं
पणान् दण्डं कुर्य्यात् अनुशयप्रसङ्गेनैतत्कन्यागतमुच्यते
॥ २२४ ॥

अकन्येति तु यः कन्यां ब्रूयाद्द्वेषेण मानवः। स
शतम्प्राप्नुयाद्दण्डन्तस्यादोषमदर्शयन्॥ २२५ ॥

अकन्येतीति। नेयं कन्या क्षतयोनिरियमिति योमनुष्योद्वे
षेण ब्रूयात् सतस्याउक्तदोषमविभावयन् पणशतं राजदण्डं
प्राप्नुयात्। ॥ २२५ ॥

पाणिग्रहणिकामन्त्राः कन्यास्वेव प्रतिष्ठिताः। नाकन्यासु क्वचित् नृणां लुप्तधर्म्मक्रिया हि ताः ॥ २२६ ॥

युक्तस्त्वस्याकन्येतिवादिनो दण्डो यस्मात् पाणिग्रहेति। अर्य्यमणं देवं कन्या अग्निमयक्षतेत्येवमादयो वैवाहिकामनुष्याणाम्मन्त्राः कन्याशब्दश्रवणात्कन्यास्वेव व्यवस्थिता नाकन्याविषये क्वचित् शास्त्रे धर्म्मविवाहसिद्धये व्यवस्थिता असमवेतार्थत्वात् अतएवाह ताः क्षतयोनयो वैवाहिकमन्त्रैः संस्क्रियमाणा अपि यस्मादपगतधर्म्मविवाहादिक्रियाशालिन्यो भवन्ति नासौ धर्म्मो विवाह इत्यर्थः। न तु क्षतयोनेर्व्वैवाहिकमन्त्रहोमादिनिषेधकमिदं। या गर्भिणी संस्क्रियते तथावोढुः कन्यासमुद्भवमिति क्षतयोनेरपि मनुनैव विवाहसंस्कारस्य वक्ष्यमाणत्वात्। देवलेन तु गान्धर्व्वेषु विवाहेषु पुनर्वैवाहिको विधिः। कर्त्तव्यस्त्र त्रिभिर्व्वर्णैस्समयेनाग्निसाक्षिक इति गान्धर्व्वेषु विवाहेषु होममन्त्रादिविधिरुक्तः। गान्धर्व्वस्योपगमनपूर्व्वकोऽपि भवति तस्य क्षत्रियविषये धर्म्यत्वं मनुनोक्तं अतः सामान्यविशेषन्यायात् इतरविषयोऽयं क्षतयोनिविवाहस्याधर्म्यत्वोपदेशः ॥ २२६ ॥

पाणिग्रहणिका मन्त्रा नियतन्दारलक्षणम्। तेषां निष्ठा तु विज्ञेया विद्वद्भिस्सप्तमे पदे ॥ २२७ ॥

पाणिग्रहणिका इति। वैवाहिका मन्त्रा नियतं निश्चितं भार्य्यात्वे निमित्तं तैर्मन्त्रैर्य्यथाशास्त्रं प्रयुक्तैर्भार्य्यात्वनिष्पत्तेः तेषान्तु

मन्त्राणां सखासप्तपदी भवेति मन्त्रेण कन्यायाः सप्तमे दत्ते पदे भार्य्यात्वनिष्पत्तिः शास्त्रज्ञैः समाप्तिर्विज्ञेया एवञ्च सप्तपदीदानात्प्राग्भार्य्यात्वानिष्पत्तिः सत्यनुशये जह्यान्नोर्द्ध्वं॥२२७॥

यस्मिन्यस्मिन् कृते कार्य्ये यस्येहानुशयोभवेत्।
तमनेन विधानेन धर्म्ये पथि निवेशयेत्॥ २२८॥

यस्मिन्निति। न केवलं क्रयविक्रययोरेव अन्यत्रापि यस्मिन् यस्मिन्सम्विद्वेतनादौ कार्य्ये यस्य पश्चात्तापोजायते तमनेन दशाहविधिना धर्म्मादनपेते मार्गे नृपः स्थापयेत्॥२२८॥

पशुषु स्वामिनाञ्चैव पालानाञ्च व्यतिक्रमे।
विवादं सम्प्रवक्ष्यामि यथावद्धर्म्मतत्त्वतः॥ २२९॥

पशुष्विति। गवादिपशुविषये स्वामिनां पालानाञ्च व्यतिक्रमे जाते विवादं सम्यग्धर्म्मयथातथ्यव्यवस्थयावक्ष्यामि॥२२९॥

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे। योगक्षेमेऽन्यथा चेत्तु पालोवक्तव्यतामियात्॥ २३०॥

दिवेति। दिवा पशूनाम्पालहस्तन्यस्तानां योगक्षेमविषये दोषे जाते पालस्य गर्हणीयता रात्रौ पुनः पालप्रत्यर्पितानां

स्वामिगृहस्थितानां स्वामिनोदोषोऽन्यथा तु यदि रात्रावपि पालहस्तगताभवन्ति तत्र दोषउत्पन्ने पालएव गर्हणीयताम्प्राप्नोति ॥ २३० ॥

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतोवरां । गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥ २३१ ॥

गोपः क्षीरेति। यो गोपालाख्यो भृत्यः क्षीरेण भृतो न भक्तादिना स स्वाम्यनुज्ञया दशभ्योगोभ्यः श्रेष्ठामेकां गाम्भृत्यर्थं दुह्यात्सा भक्तादिरहिते गोपाले भृतिः स्यात्। एवञ्चैक गवीक्षीरदानेन दश गाः पालयेदित्युक्तम् ॥ २३१ ॥

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्। हीनम्पुरुषकारेण प्रदद्यात्पालएव तु ॥ २३२ ॥

नष्टमिति। नष्टं दृष्टिपथातीतं कृमिभिर्नाशितं श्वभिर्हतं खादितं विवरादिपातमृतं प्रदर्शनार्थञ्चैतत्पालसम्बन्धिरक्षणाख्यपुरुषव्यापाररहितं मृतम्पलायितं गवादिपशुं पालएव तु स्वामिने दद्यात् ॥ २३२ ॥

विघुष्य तु हृतञ्चौरैर्न पालोदातुमर्हति। यदि
देशे च काले च स्वामिनः स्वस्य शंसति ॥ २३३॥

विघुष्येति। चौरैः पुनः पटहादिना विघुष्य हृतं पालोदातु
न्नार्हति। विघुष्येति चौराणां बहुत्वप्रबलत्वदर्शनार्थं यदि
सन्निहिते देशे हरणकालानन्तरमेवात्मीयस्वामिनः कथयति
॥ २३३॥

कर्णौ चर्म्म च बालांश्च वस्तिं स्नायुञ्च रोचनाम्।
पशुषु स्वामिनान्दद्यान्मृतेष्वङ्गानि दर्शयेत् ॥२३४॥

कर्णाविति। स्वयं मृतेषु पशुषु कर्णचर्म्मलाङ्गूलबालनाभ्य
धोभागस्नायुरोचनाः स्वामिनान्दद्यात्। अन्यानि च चिह्ना
न्यसाधारणानि शृङ्गखुरादीनि दर्शयेत् ॥ २३४॥

अजाविके तु संरुद्धे वृकैः पाले त्वनायति। याम्प्र
सह्य वृको हन्यात्पाले तत्किल्विषम्भवेत् ॥ २३५ ॥

अजाविके इति। अजाश्च अविकाश्च अजाविकं गवाश्व
प्रभृतीनिचेति द्वन्द्वैकवद्भावः तस्मिन्नजाविके वृकैः परिवृते सति
पालेनागच्छति यामजामेडकां वा वने वृको हन्यात्स पालस्य
दोषः स्यात् ॥ २३५ ॥

तासाञ्चेदवरुद्धानाञ्चरन्तीनां मिथोवने। यामु त्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी॥ २३६॥

तासाञ्चेति। तासामजाविकानां पालेन नियमितानां संघी भूय वने चरन्तीनां मध्याद्यदि कश्चिद्वृकः कुतश्चिदुत्प्लुत्यालक्षि तो यां काञ्चिद्धन्यात् न पालस्तत्र दोषभाक्॥ २३६॥

धनुः शतम्परीहारो ग्रामस्य स्यात्समन्ततः। शम्यापातास्त्रयो वापि त्रिगुणो नगरस्य तु॥ २३७॥

धनुःशतमिति। चतुर्हस्तो धनुः शम्या यष्टिः तस्याः पातः प्रक्षेपो ग्रामसमीपे सर्व्वासु दिक्षु चत्वारि हस्तशतानि त्रीन् वा यष्टिप्रक्षेपान् यावत्पशुप्रचारार्थं शस्यवपनादिसंरोधपरि हारः कार्य्यः नगरसमीपे पुनरयं त्रिगुणः कर्त्तव्यः॥ २३७॥

तत्रापरिवृतन्धान्यं विहिंस्युः पशवो यदि। न तत्र प्रणयेद्दण्डन्नृपतिः पशुरक्षिणाम्॥ २३८॥

तत्रापरीति। तस्मिन् परिहारस्थाने यदि केनचिददत्ता वृतिकन्धान्यं उप्येत तच्चेत्पशवोभक्षयेयुः। तत्र पशुपालानां नृपो दण्डं न कुर्य्यात्॥ २३८॥

वृतिन्तत्र प्रकुर्वीत यामुष्ट्रो न विलोकयेत्। छिद्रञ्च वारयेत्सर्व्वं श्वशूकरमुखानुगम्॥ २३९ ॥

वृतिमिति। तत्र परिहारस्थाने क्षेत्रे वृतिं कण्टकादिमयीं तथाविधामुच्छ्रितां कुर्य्यात् यामपरपार्श्वे उष्ट्रो न विलोकयेत् तस्याश्च यत्किञ्चिच्छिद्रं श्वशूकरमुखप्रवेशयोग्यं तत्सर्व्वमावृणुयात्॥ २३९ ॥

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः। स पालः शतदण्डार्हो विपालान् वारयेत्पशून्॥२४०॥

पथीति। वर्त्मसमीपे ग्रामसमीपे वा परिहारस्थे क्षेत्रे दत्तवृतौ स पालः पशुः पालानिवारितो द्वारादिना कथञ्चित्प्रविष्टो यदा भक्षयति तदा पणशतन्दण्ड्यः पशोश्च दण्डासम्भवात्पालएव दण्ड्यः विपालान् पुनर्भक्षणप्रवृत्तान् पशून् क्षेत्ररक्षको निवारयेत्॥ २४० ॥

क्षेत्रेष्वन्येषु तु पशुः सपादम्पणमर्हति। सर्व्वत्र तु सदो देयः क्षेत्रिकस्येति धारणा॥ २४१ ॥

क्षेत्रेष्विति। वर्त्मग्रामान्तव्यतिरिक्तेषु क्षेत्रेषु पशुर्भक्षयन्सपादम्पणं दण्डमर्हति। अत्रापि पालएव दण्ड्यः सर्व्वत्र क्षेत्रे पशु

भक्षितस्फलं क्षेत्रस्वामिने पालेन स्वामिना वा यथापराधं दातव्यमिति निश्चयः ॥ २४१ ॥

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा। सपालान्वा विपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥ २४२ ॥

अनिर्दशाहामिति। प्रसूतां गामनिर्गतदशाहां तथा चक्रशूलाङ्कितोत्सृष्टवृषान् देवसम्बन्धिपशून् पालसहितान् पालरहितान्वा शस्यभक्षणप्रवृत्तान्मनुरदंड्यानाह उत्सृष्टवृषाणामपि गवां गर्भार्थं गोकुले पालैर्द्धारणात्सपालत्वसम्भवः॥२४२॥

क्षेत्रियस्यात्यये दण्डो भागाद्दशगुणो भवेत्। ततोऽर्द्धदण्डो भृत्यानामज्ञानात्क्षेत्रियस्य तु॥२४३॥

क्षेत्रियस्येति। क्षेत्रकर्षकस्यात्मपशुशस्यभक्षणे अयथाकालं वपनादौ वाऽपराधे सति यावतो राजभागस्य तेन हानिः कृता ततो दशगुणदण्डः स्यात् क्षेत्रिकाविदिते भृत्यानामुक्तापराध क्षेत्रिकस्यैव दशगुणार्द्धदण्डः क्षेत्रशस्यप्रसङ्गाच्चेदमुक्तम्॥२४३॥

एतद्विधानमातिष्ठेद्धार्म्मिकः पृथिवीपतिः। स्वामिनाञ्च पशूनाञ्च पालानाञ्च व्यतिक्रमे ॥ २४४ ॥

एतदिति। स्वामिनां पालानाञ्च रक्षणादपराधे पशू

नाञ्च शस्त्रभक्षणरूप व्यतिक्रमे धर्मप्रधानोभूपतिरेतत्पूर्वोक्तं कर्त्तव्यमनुतिष्ठेत् ॥ २४४ ॥

सीमाम्प्रतिसमुत्पन्ने विवादे ग्रामयोर्द्वयोः। ज्यैष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥ २४५ ॥

सीमामिति। द्वयोर्ग्रामयोर्मर्य्यादां प्रति विप्रतिपत्तावुत्पन्नायां ज्यैष्ठे मासि ग्रीष्मरवितापसंशुष्कतृणत्वात् प्रकटीभूतेषु सीमालिङ्गेषु राजा सीमां निश्चिनुयात् ॥ २४५ ॥

सीमावृक्षांश्च कुर्व्वीत न्यग्रोधाश्वत्थकिंशुकान्। शाल्मलीन्शालतालांश्च क्षीरिणश्चैव पादपान्॥२४६॥

सीमावृक्षानिति। न्यग्रोधादीन्वृक्षान् क्षीरिणउदुम्बरादीन् चिरस्थायित्वात्सीमालिङ्गभूतान् कुर्व्वीत ॥ २४६ ॥

गुल्मान्वेणूंश्च विविधान् शमीवल्लीस्थलानि च। शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥२४७॥

गुल्मानिति। गुल्मान् प्रकाण्डरहितान्वेणूंश्च प्रचुरकण्टकत्वाल्पकण्टकत्वादिभेदेन नानाप्रकारान्शमीवृक्षान्वल्लीर्लताः

स्थलानि कृत्रिमोन्नतभूभागान् शरान् कुब्जकगुल्मांश्च प्रचुरोपभोगलेनादरार्थं पृथक् निर्दिष्टान्सीमालिङ्गभूतान् कुर्य्यात्। एवं कृते सीमा न नश्यति ॥ २४७ ॥

तडागान्युदपानानि वाप्यः प्रस्रवणानि च।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥२४८॥

तडागानिति। तडागकूपदीर्घिकाजलनिर्गममार्गदेवगृहाणि सीमाङ्कुरेषु ग्रामद्वयसन्धिस्थानेषु कर्त्तव्यानि। एतेषु सीमानिर्णयाय लोके विख्याप्य कृतेषूदकार्थिजना अपि श्रुतिपरम्परया चिरकालेऽपि साक्षिणो भवन्ति ॥ २४८ ॥

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत्।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्य्ययं ॥२४९॥

उपच्छन्नानीत्यादि। सीमानिर्णये सर्व्वदाऽस्मिन् लोके मनुष्याणां भ्रमज्ञानं दृष्ट्वाऽभिहितव्यतिरिक्तानि गूढानि वक्ष्यमाणानि सीमाचिह्नानि कारयेत् ॥ २४९ ॥

अश्मनोऽस्थीनि गोबालांस्तुषान्भस्मकपालिकाः।
करीषमिष्टकाङ्गाराञ्छर्करावालुकास्तथा ॥ २५० ॥

यानि चैवम्प्रकाराणि कालाद्भूमिर्नभक्षयेत्। तानि सन्धिषु सीमायामप्रकाशानि कारयेत्॥२५१॥

अश्मेति। यानीति। स्थूल प्रस्तरास्थिगोबालतुषभस्मकपालिकाशुष्कगोमयपक्केष्टकाङ्गारशर्करासिकता अन्यान्यप्येवं प्रकाराणि कालाञ्जनकार्पासाऽस्थिप्रभृतीनि यानि चिरकालेनापि भूमिरात्मसात् न करोति तानि ग्रामयोः सन्धिषु सीमायां प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेदिति वृहस्पति वचनात् स्थूलपाषाणव्यतिरिक्तानि कुम्भेषु कृत्वा प्रच्छन्नानि भूमौ निखाय धारयेत्॥ २५०॥ ॥२५१॥

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः। पर्व्वभुक्त्या च सततमुदकस्यागमेन च॥ २५२॥

एतैरिति। विवदमानयोर्ग्रामयोः प्रागुक्तैरेतैरुक्तचिह्नै राजा सीमामुन्नयेत् वसतोः पुनरविच्छिन्नया भुक्त्या सीमा निर्णयोन तु त्रिपुरुषादिकया तस्याधिः सीमेति पर्य्युदस्तत्वात्। ग्रामद्वयसन्धिस्थनद्यादिप्रवाहेण च पारावारग्रामयोः सीमां निश्चिनुयात्॥ २५२॥

यदि संशयएव स्यात् लिङ्गानामपि दर्शने। साक्षि प्रत्ययएव स्यात् सीमावादविनिर्णयः॥ २५३॥

यदीति। यदि प्रच्छन्नप्रकाशलिङ्गदर्शनेपि केनचित् प्रच्छन्नाङ्गारतुषादिकुम्भाश्मनी स्थानान्तरं नीता निखातानाथं सीमातरुर्न्यग्रोधः स नष्टइत्यादि सन्देहोयदि स्यात् तदा साक्षिप्रमाणएव सीमाविवादनिश्चयो भवेत्॥ २५३॥

ग्रामीयककुलानाञ्च समक्षं सीम्नि साक्षिणः। प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥२५४॥

ग्रामीति। ग्रामिकजनसमूहानां ग्रामद्वयस्थनियुक्तयोर्वादिप्रतिवादिनोश्च समक्षं सीमाविषये सीमालिङ्गसन्देहे लिङ्गानि साक्षिणः प्रष्टव्याः॥ २५४॥

ते पृष्टास्तु यथाब्रूयुः समस्ताः सीम्नि निश्चयम्। निबध्नीयात्तथा सीमां सर्व्वांस्तांश्चैव नामतः॥२५५॥

ते इति। ते पृष्टाः साक्षिणः समस्तान द्वैधेन सीमाविषये येन प्रकारेण निश्चयं ब्रूयुः तेन प्रकारेणाविस्मरणार्थं पत्रे सीमां लिखेत् तांश्च सर्व्वानेव साक्षिणोनामविभागेलिखेत्॥ २५५॥

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः।
सुकृतैः शापिताः स्वैःस्वैर्नयेयुस्तेसमञ्जसम्॥२५६॥

शिरोभिरिति। ते साक्षिणइति सामान्यश्रवणेपि रक्तस्रग्वाससः सीमां नयेयुरिति याज्ञवल्क्यवचनात् रक्तपुष्पमालालोहितवाससोमस्तके म्रल्लोष्टानि गृहीत्वा यदस्माकं सुकृतन्तन्निष्फलं स्यादित्येवमात्मीयैः सुकृतैः शापिताः सन्तः तां सीमां यथाशक्ति निर्णयेयुः॥२५६॥

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः। विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतन्दमम्॥२५७॥

यथोक्तेनेति। ते सत्यप्रधानाः साक्षिणः शास्त्रोक्तेन विधानेन निर्णयन्तोनिष्पापा भवन्ति अतथ्येन तु निश्चिन्वन्तः प्रत्येकं पणशतद्वयन्दण्डन्दाप्याभवेयुः॥२५७॥

साक्ष्यभावे तु चत्वारो ग्रामाः सामन्तवासिनः।
सीमाविनिर्णयं कुर्य्युः प्रयता राजसन्निधौ॥२५८॥

साक्ष्येति। ग्रामद्वयसम्बन्धिसीमाविवादसाक्ष्यभावेचतुर्दिशं समन्तभवाः सामन्तास्तद्वासिनः चत्वारोग्रामाः साक्षिधर्म्मेण राजसमक्षं सीमानिर्णयं कुर्य्युः॥२५८॥

सामन्तानामभावे तु मौलानां सीम्नि साक्षिणाम्।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥२५९॥

सामन्तानामिति। साक्षिधर्मेण राजसमक्षं समन्तभव ग्रामवासिनां मौलानां ग्रामनिर्म्माणकालादारभ्य पुरुष क्रमेण तद्ग्रामस्थानां सीमासाक्षिणामभावे इमान्वच्यमाणा न्सन्निहितवनचारिणः पुरुषान् पृच्छेत्॥ २५९॥

व्याधाञ्छाकुनिकान् गोपान्कैवर्त्तान्मूलखानकान्।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनचारिणः॥ २६०॥

व्याधेति। लुब्धकान् पक्षिवधजीविनः गोपालान् मत्स्य जीविनो मूलोत्पाटनजीविनः सर्पग्राहिणः शिलोञ्छवृत्तीन न्यांश्च फलपुष्पेन्धनाद्यर्थं वनव्यवहारिणः पृच्छेत्। एते हि स्व प्रयोजनार्थन्तेन ग्रामेण सर्व्वदा वनं गच्छन्तः तद्ग्रामसीमा भिज्ञाः भवन्ति॥२६०॥

ते पृष्टास्तु यथाब्रूयुः सीमासन्धिषु लक्षणम्।
तत्तथास्थापयेद्राजा धर्म्मेण ग्रामयोर्द्वयोः॥ २६१॥

ते पृष्टाइति। ते व्याधादयः पृष्टाः सीमारूपेषु ग्रामसन्धिषु येन प्रकारेण चिह्नं ब्रूयुः तेनैव प्रकारेण राजा द्वयो र्ग्रामयोः सीमां व्यवस्थापयेत्॥ २६१॥

क्षेत्रकूपतडागानामारामस्य गृहस्य च। सामन्त प्रत्ययो ज्ञेयः सीमासेतुविनिर्णयः॥ २६२॥

क्षेत्रेति। एकग्रामेपि क्षेत्रकूपतडागोद्यानगृहाणां सीमा सेतुविवादे समन्तदेशवासिसाक्षिप्रमाणकएव मर्य्यादाचिह्न निश्चयोविज्ञेयोन व्याधादिप्रमाणकः॥ २६२॥

सामन्ताश्चेन्मृषाब्रूयुः सेतौ विवदतां नृणाम्। सर्व्वे पृथक्पृथग्दण्ड्या राज्ञा मध्यमसाहसम्॥ २६३॥

सामन्तेति। सीमाचिह्ननिमित्तं विवदमानानां मनुष्याणां यदि समन्तदेशवासिनोमिथ्याब्रूयुस्तदा ते सर्व्वे प्रत्येकं राज्ञा मध्यमसाहसन्दण्डनीयाः एवञ्चासामन्तरूपाणां पूर्व्वो क्तद्विशतोदमोज्ञेयः॥ २६३॥

गृहन्तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्विशतो दमः॥२६४॥

गृहमिति। गृहतडागोद्यानक्षेत्राणामन्यतमं मारणबन्ध नादिभयकथनपूर्व्वमाक्रम्य हरणे पञ्च पणशतानि दण्डनीयः स्यात्स्वत्वभ्रान्त्या हरतो द्विशतो दमः॥ २६४॥

सीमायामविषह्यायां स्वयं राजैव धर्म्मवित्।
प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिः ॥ २६५ ॥

सीमेति। लिङ्गसाक्ष्याद्यभावे सीमायाम्परिच्छेत्तुमसक्यायां राजैव धर्म्मज्ञः पक्षपातरहितो ग्रामद्वयमध्यवर्त्तिनीं विवादविषयाम्भूमिं येषामेव ग्रामवासिनां उपकारातिशयो भवति तद्व्यतिरेकेण च महाननिर्व्वाहस्तेषामेव दद्यादिति शास्त्रव्यवस्था ॥ २६५ ॥

एषोऽखिलेनाभिहितो धर्म्मः सीमाविनिर्णये। अत ऊर्द्धं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयं ॥ २६६ ॥

एषइति। एष सीमानिश्चयो धर्म्मो निःशेषेण उक्तः अतऊर्द्धं वाक्पारुष्यं वक्ष्यामि। दण्डपारुष्यात् प्राक् वाक्पारुष्यप्रवृत्तेः पूर्व्वमभिधानं अनुक्रमश्रुत्यान्तु पारुष्ये दण्डवाचिके इति दण्डशब्दस्याल्पस्वरत्वात् द्वन्द्वे पूर्व्वनिपातः ॥ २६६ ॥

शतम्ब्राह्मणमाक्रुश्य क्षत्रियोदण्डमर्हति। वैश्योप्यर्द्धशतं द्वे वा शूद्रस्तु बधमर्हति ॥ २६७ ॥

शतमिति। द्विजस्य चौरेत्याक्षेपरूपम्परुषमुक्त्वा क्षत्रियः पणशतं दण्डमर्हति एवं सार्द्धशतं द्वे वा शते लाघवगौरवापे

चया वैश्यः शूद्रोप्येवं ब्राह्मणाक्रोशे ताडनादिरूपं वधमर्हति ॥ २६७ ॥

पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशको दमः ॥ २६८ ॥

पञ्चाशदिति। ब्राह्मणः चत्रियस्योक्तरूपाक्षेपे कृते पञ्चाशत्पणान् दण्ड्यः वैश्ये शूद्रे च यथोक्ताक्रोशे कृते पञ्चविंशति द्वादशपणाः क्रमेण ब्राह्मणस्य दण्डः स्यात् ॥ २६८ ॥

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे। वादेष्ववचनीयेषु तदेव द्विगुणम्भवेत् ॥ २६९ ॥

समेति। द्विजातीनां समानजातिविषये यथोक्ताक्रोशे कृते द्वादशपणो दण्डः अवचनीयेषु पुनराक्रोशवादेषु मातृभगिन्याद्यश्लीलरूपेषु तदेवेति नपुंसकनिर्देशात् शतं ब्राह्मणमाक्रुश्येत्यादि यदुक्तं तदेव द्विगुणन्दण्डरूपम्भवेत् ॥ २६९ ॥

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥ २७० ॥

एकेति। शूद्रो द्विजातीन् पातकाभियोगिन्या वाचाक्रुश्य जिह्वाच्छेदं लभेत्। यस्मादसौ पादाख्यान्निकृष्टाङ्गाज्जातः ॥ २७० ॥

नामजातिग्रहन्त्वेषामभिद्रोहेण कुर्व्वतः। निःक्षेप्योऽयोमयःशङ्कुर्ज्वलन्नास्ये दशाङ्गुलः॥ २७१॥

नामेति। अभिद्रोह आक्रोशः ब्राह्मणादीनां रे त्वं यज्ञदत्त ब्राह्मणापसद इत्याक्रोशेन नामजातिग्रहणं कुर्व्वतो लोहकीलोऽग्निना प्रदीप्तो दशाङ्गुलो मुखेषु क्षेप्तव्यः॥ २७१॥

धर्म्मोपदेशन्दर्पेण विप्राणामस्य कुर्व्वतः। तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः॥ २७२॥

धर्म्मेति। कथञ्चिद्धर्म्मलेशमवगम्यायं ते धर्म्मानुष्ठेयइति ब्राह्मणस्याहंकारादुपदिशतोऽस्य शूद्रस्य मुखे कर्णयोश्च ज्वलत्तैलं राजा प्रक्षेपयेत्॥ २७२॥

श्रुतन्देशञ्च जातिञ्च कर्म्म शारीरमेव च। वितथेन ब्रुवन् दर्पाद्दाप्यः स्याद्द्विशतन्दमम्॥ २७३॥

श्रुतेति। समानजातिविषयमिदन्दण्डलाघवात् नतु शूद्रस्य द्विजात्याक्षेपविषयं। न त्वयैतत् श्रुतन्न भवानेतद्देशजातो न तवेयं जातिर्न तव शरीरसंस्कारमुपनयनादिकर्म्म कृतमित्यहङ्कारेण मिथ्या ब्रुवन् द्विशतं दण्डं दाप्यः स्यात्। वितथेनेति प्रकृत्यादिभ्यउपसंख्यानमिति तृतीया॥ २७३॥

काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम्।
तथ्येनापि ब्रुवन् दाप्योदण्डं कार्षापणावरं॥२७४॥

काणमिति। एकाक्षिविकलं पादविकलं अन्यमपि वा तथाविधं हस्ताद्यङ्गविकलं सत्येनापि काणादिशब्देन ब्रुवन् अत्यन्ताल्पं तदा कार्षापणं दण्डं दाप्यः॥२७४॥

मातरम्पितरञ्जायां भ्रातरन्तनयं गुरुम्। आक्षा
रयञ्छतन्दाप्यः पन्थानञ्चाददद्गुरोः॥ २७५॥

मातेति। आक्षारितः क्षारितोऽभिशप्तइत्याभिधानिकाः माचादीन् पातकादिनाऽभिशपन् गुरोश्च पन्थानमत्यजन् शतंदण्ड्यः अत्र मातृभ्रातृभार्य्यादीनां गुरुलघुपापाभिशापेन दण्डसाम्यं समाधेयं। मेधातिथिस्तु आक्षारणंभेदन मित्युक्ता मातृपुत्रपित्रादीनाम्परस्परभेदनकर्त्तुरयं दण्ड विधिरिति व्याख्यातवान्॥२७५॥

ब्राह्मणक्षत्रियाभ्यान्तु दण्डः कार्य्यो विजानता।
ब्राह्मणे साहसः पूर्व्वः क्षत्रियेत्वेवमध्यमः॥२७६॥

ब्राह्मणेति। ब्राह्मणक्षत्रियाभ्याम्परस्परम्पतनीयाक्रोशे कृते दण्डशास्त्रज्ञेन राज्ञा दण्डः कार्य्यः। दण्डमेव विशेषेणाह

ब्राह्मणे क्षत्रियाक्रोशिनि प्रथमसाहसः कार्य्यो ब्राह्मणाक्रोशिनि पुनः क्षत्रिये मध्यमसाहसः ॥ २७६ ॥

विट्शूद्रयोरेवमेव स्वजातिम्प्रति तत्त्वतः। छेदवर्जं प्रणयनन्दण्डस्येति विनिश्चयः ॥ २७७ ॥

विड़िति। वैश्यशूद्रयोरन्योन्यजातिं प्रति पतनीयाक्रोशे ब्राह्मणक्षत्रियवत् वैश्ये शूद्राक्रोशिनि प्रथमसाहसः शूद्रे वैश्याक्रोशिनि मध्यमसाहस इत्येवंरूपन्दण्डस्य प्रणयनं जिह्वाच्छेदरहितं यथावत्कर्त्तव्यमिति शास्त्रनिश्चयः। एवञ्चैकजातिर्द्विजातींस्त्विति प्रागुक्तजिह्वाच्छेदो वैश्ये निवारितो ब्राह्मणक्षत्रियाक्रोशविषय एवावतिष्ठते ॥ २७७ ॥

एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः। अत ऊर्द्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयं ॥ २७८ ॥

एष इति। एषोऽनन्तरोक्तो वाक्पारुष्यस्य यथावद्दण्डविधिरुक्तोऽनन्तरन्ताडनादेर्दण्डपारुष्यस्य निर्णयं वक्ष्यामि ॥ २७८ ॥

येन केनचिदङ्गेन हिंस्याच्चेच्छ्रेष्ठमन्त्यजः। छेत्त व्यन्तत्तदेवास्य तन्मनोरनुशासनम्॥ २७९ ॥

येनेति। अन्त्यजः शूद्रो येन केनचित्करचरणादिनाङ्गेन साक्षाद्दण्डादिना व्यवहितेन वा द्विजातिं प्रहरेत् तदेवाङ्ग मस्य छेत्तव्यमित्ययं मनोरुपदेशः मनुग्रहणमादरार्थं अस्यै वोत्तरः प्रपञ्चः॥ २७९ ॥

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति। पादेन प्रहरन् कोपात्पादच्छेदनमर्हति॥ २८०॥

पाणिमिति। प्रहर्त्तुम्पाणिं दण्डं वोद्यम्य पाणिच्छेदं लभते पादेन कोपात्प्रहरन् पादच्छेदं प्राप्नोति॥ २८०॥

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः। कट्यां कृताङ्को निर्व्वास्यः स्फिचं वास्यावकर्त्तयेत्॥ २८१॥

सहेति। ब्राह्मणेन सहैकासनोपविष्टः शूद्रः कट्यां तप्तलोह कृतचिह्नो देशान्निर्व्वासनीयः स्फिचं वाऽस्य यथा न म्रियते तथा छेदयेत्॥ २८१॥

अवनिष्ठीवतोदर्पाद्द्वावोष्ठौ छेदयेन्नृपः। अवमूत्रयतोमेढ्रमवशर्द्धयतोगुदम्॥ २८२॥

अवेति। दर्पेण श्लेष्मणा ब्राह्मणानपमानयतः शूद्रस्य राजा द्वावोष्ठौ छेदयेत् मूत्रप्रक्षेपेणापमानयतोमेढ्रं शर्द्धनं कुत्सितोगुदशब्दः तेनावमानयतोदर्पान्न प्रमादात् गुदं छेदयेत्॥ २८२॥

केशेषु गृह्णतोहस्तौ छेदयेदविचारयन्। पादयोर्द्दाढिकायाञ्च ग्रीवायां वृषणेषु च॥ २८३॥

केशेष्विति। दर्पादित्यनुवर्त्तते अहङ्कारेण केशेषु ब्राह्मणं गृह्णतः शूद्रस्य पीडाऽस्य जाता न जातावेत्यविचारयन् हस्तौ छेदयेत् पादयोः श्मश्रुणि ग्रीवायां वृषणे च हिंसार्थं गृह्णतो हस्तद्वयच्छेदमेव कुर्य्यात्॥ २८३॥

त्वग्भेदकः शतन्दण्ड्योलोहितस्य च दर्शकः। मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः॥ २८४॥

त्वग्भेदेति। चर्ममात्रभेदकस्तसमानजातिर्नतु शूद्रोब्राह्मणस्य दण्डलाघवात् पणशतन्दण्डनीयः तथा रक्तोत्पादकोपि पण

शतमेव दण्ड्यः मांसभेदी षण्णिष्कान् दाप्योऽस्थिभेदकस्तु देशा न्निर्वास्यः ॥ २८४ ॥

वनस्पतीनां सर्व्वेषामुपभोगं यथा यथा । तथा तथा दमः कार्य्यो हिंसायामिति धारणा ॥ २८५ ॥

वनस्पतीनामिति । वृक्षाद्युद्भिदां सर्व्वेषां येन येन प्रकारेण उप भोगः फलपुष्पपत्रादिना उत्तममध्यमाधमरूपो भवति तथा तथा हिंसायामप्युत्तमसाहसादिर्दण्डो विधेय इति निश्चयः। तथाच विष्णुः। फलोपभोगद्रुमच्छेदी तूत्तमं साहसं पुष्पोपभोग द्रुमच्छेदी मध्यमं वल्लीगुल्मलताछेदी कार्षापणशतन्तृणछेदकं । कार्षापणश्च पणएव मनुनाप्युक्तो वेदितव्यः ॥ २८५ ॥

मनुष्याणाम्पशूनाञ्च दुःखाय प्रहृते सति । यथा यथा महद्दुःखन्दण्डं कुर्य्यात्तथा तथा ॥ २८६ ॥

मनुष्याणामित्यादि । मनुष्याणां पशूनाम्पीडोत्पादनार्थ म्प्रहारे कृते सति यथा यथा पीडाधिक्यं तथा तथा दण्डमप्य धिकं कुर्य्यात् एवञ्च मर्म्मस्थानादौ त्वग्भेदनादिषु कृतेषु त्वग्भे दकः शतन्दण्ड्य इत्युक्तादप्यधिको दण्डो दुःखविशेषापेक्षया कर्त्तव्यः ॥ २८६ ॥

अङ्गावपीडनायाञ्च व्रणशोणितयोस्तथा ।
समुत्थानव्ययन्दाप्यः सर्व्वदण्डमथापि वा ॥२८७॥

अङ्गेति । अङ्गानां करचरणादीनां व्रणशोणितयोश्च पीडनायां सत्यां समुत्थानव्ययं यावता कालेन पूर्व्वावस्थाप्राप्तिरूपसमुत्थानसम्बन्धो भवति तावता कालेन पथ्यौषधादिना यावान् व्ययोभवति तमसौ दापनीयः । अथ तं व्ययम्पीडोत्पादकोन दातुमिच्छति तदा यः समुत्थानव्ययो यश्च दण्डस्तमेनन्दण्डेन राज्ञा दाप्यः ॥ २८७ ॥

द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोपि वा ।
स तस्योत्पादयेत्तुष्टिं राज्ञो दद्याच्च तत्समं ॥ २८८॥

द्रव्याणीति । द्रव्याण्यनुक्तविशेषदण्डानि कटकताम्रघटादीनि यो यस्य ज्ञानादज्ञानाद्वा नाशयेत्स तस्य द्रव्यान्तरादिना तुष्टिमुत्पादयेत् राज्ञश्च विनाशितद्रव्यसमन्दण्डं दद्यात् ॥ २८८ ॥

चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्टमयेषु च । मूल्यात्पञ्चगुणोदण्डः पुष्पमूलफलेषु च ॥ २८९ ॥

चर्म्मेति । चर्म्मघटितवरत्रादौ चर्म्मकाष्टमृत्तिका निर्म्मितेषु च भाण्डेषु पुष्पमूलफलेषु परस्य नाशितेषु तन्मूल्या

त्यन्नगुणो दण्डो राज्ञो देयः स्वामिनश्च तुष्टिरुत्पादनीयैव ॥ २८९ ॥

यानस्य चैव यातुश्च यानस्वामिनएव च।
दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते ॥ २९० ॥

यानस्येति। यानस्य रथादेः यातुः सारथ्यादेर्यानस्वामिनश्च यस्य तद्यानन्तेषाञ्छिन्ननास्यादीनि दशनिमित्तानि दण्डमतिक्रम्य वर्त्तन्ते एषु निमित्तेषु खलु प्राणिमारणे द्रव्यनाशे च प्रकृते यानस्वाम्यादीनान्दण्डो न भवतीति मन्वादयश्चाहुः एतद्व्यतिरिक्तनिमित्तेषु पुनर्दण्डोऽनुष्ठीयते ॥ २९० ॥

छिन्ननास्ये भग्नयुगे तिर्य्यक्प्रतिमुखागते।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥ २९१ ॥
छेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥ २९२ ॥

छिन्नेति। छेदनइति। नासायाश्चवन्नास्यं शरीरावयवत्वाद्यत्। सा चेह बलीवर्द्दादिनासासम्बन्धिनी रज्जुः छिन्नास्य रज्जौ बलीवर्द्दादिके भग्नयुगाख्यकाष्ठे रथादौ भूमिवैषम्यादिना तिरश्चीनं वा गते तथा चक्रान्तःप्रविष्टाक्षकाष्ठभङ्गे यन्त्राणा श्चर्मबन्धनानाञ्छेदने योक्त्रस्य पशुग्रीवारज्जौ रश्मेः प्रग्रहणस्य

छेदने अपसरापसरेत्युच्चैःशब्दे सारथ्यादिना कृते च यानेन प्राणिहिंसाद्रव्यविनाशयोः कृतयोः सारथ्यादेर्दण्डो नास्तीति मनुराह ॥ २९१ ॥ २९२ ॥

यत्रापवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु। तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतन्दमम् ॥ २९३ ॥

यत्रेति। यत्र सारथेरकौशल्याद्यानमन्यथा व्रजति तत्र हिंसायामशिक्षितसारथिनियोगात् स्वामी द्विशतं दण्डं दाप्यः स्यात् ॥ २९३ ॥

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति। युग्यस्थाः प्राजकेऽनाप्ते सर्व्वे दण्ड्याः शतं शतं ॥ २९४ ॥

प्राजकइति। यदि तु सारथिः कुशलः स्यात्तदा सारथिरेवोक्तद्विशतं दमं वक्ष्यमाणञ्च मनुष्यमारणइत्यादिकन्दण्डमर्हति न स्वामी अकुशले तु तस्मिन्सारथिस्वामिव्यतिरिक्ता अन्येपि यानारूढा अकुशलसारथिकयानारोहणात्सर्व्वे प्रत्येकं शतं शतं दण्ड्याः ॥ २९४ ॥

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा।
प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः ॥२९५॥

स चेदिति। स चेत्प्राजकः संमुखागतैः प्रचुरगवादिभीरथान्तरेण वा संरुद्धः स्वरथगमनानवधानात्प्रत्यक्समर्पणाक्षमः सङ्कटेपि स्वरथतुरगान् प्रेरयन् तुरगैरथेन वा रथावयवैर्वा प्राणिनो व्यापादयति तत्राविचारितो दण्डः कर्त्तव्यएव ॥२९५॥

मनुष्यमारणे क्षिप्रं चौरवत्किल्विषम्भवेत्।
प्राणभृत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु ॥२९६॥

रथसङ्कटापराधे कीदृशइत्याह मनुष्येति। तत्र मनुष्यमारणे प्राजकस्यानवधानात् यानेन कृते शीघ्रमेव चौरदण्डोत्तमसाहसो भवेत् न तु मारणरूपः प्राणभृत्सु महत्स्वर्द्धमिति श्रवणात्। गोगजादिषु महत्सु प्राणिषु मारितेषु उत्तमसाहसस्यार्द्धम्पञ्च शतपणो दण्डो भवेत्॥२९६॥

क्षुद्रकाणाम्पशूनान्तु हिंसायां द्विशतोदमः।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु ॥२९७॥

क्षुद्रेति। क्षुद्रकाणां पशूनां जातितोविशेषापदिष्टेतरेषां वनचरादीनां वयसा च किशोरादीनां मारणे द्विशतोदण्डः स्यात्

क्षुद्रेषु मृगेषु रुरुपृषतादिषु पक्षिषु च शुकहंससारसादिषु पक्षिषु हतेषु पञ्चाशत्पणो दण्डो भवेत् ॥ २९७ ॥

गर्द्दभाजाविकानान्तु दण्डः स्यात्पञ्चमासिकः।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने ॥ २९८ ॥

गर्द्दभेति। गर्द्दभच्छागैडकानाम्पुनर्म्मारणे पञ्चरूप्यमाषकपरिमाणोदण्डः स्यात्। नचात्र हैरण्यमाषग्रहणं उत्तरोत्तरलघुदण्डाभिधानात् श्वशूकरमारणेषु पुनारौप्यमाषपरिमाणो दण्डः स्यात् ॥ २९८ ॥

भार्य्या पुत्रस्य दासश्च शिष्यो भ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा ॥ २९९ ॥

भार्य्येति। भार्य्यापुत्रादयः कृतापराधा रज्ज्वातिलघुवेणुशलाकया वा ताड्याभवेयुः शिक्षार्थं ताडनविधानादत्र दण्डापवादः ॥ २९९ ॥

पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन। अतोन्यथा तु प्रहरन् प्राप्तः स्याच्चौरकिल्बिषम् ॥ ३०० ॥

पृष्ठतइति। रज्ज्वादिभिरपि देहस्य पृष्ठदेशे ताडनीयाः नतु शिरसि उक्तप्रकारव्यतिरेकेण प्रहरणे वाग्दण्डधनदण्डरूपश्चौरदण्डं प्राप्नुयात् ॥ ३०० ॥

एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः । स्तेन
स्यातः प्रवक्ष्यामि विधिन्दण्डविनिर्णये ॥ ३०१ ॥

एषइति । एष दण्डपारुष्य निर्णयो निःशेषेणोक्तः अतऊर्द्धं
चौरदण्डविनिर्णये विधानं वक्ष्यामि ॥ ३०१ ॥

परमं यत्नमातिष्ठेत् स्तेनानान्निग्रहे नृपः । स्तेना
नां निग्रहादस्य यशोराष्ट्रञ्च वर्द्धते ॥ ३०२ ॥

परममिति । चौराणां नियमने राजा परममुत्कृष्टं यत्नं
कुर्य्यात् यस्माच्चौरनिग्रहाद्राज्ञः ख्यातिर्निरुपद्रवतया राष्ट्रं
च वृद्धिमेति ॥ ३०२ ॥

अभयस्य हि यो दाता स पूज्यः सततन्नृपः । सत्रं
हि वर्द्धते तस्य सदैवाभयदक्षिणम् ॥ ३०३ ॥

अभयस्येति । हि अवधारणे चौराणां नियमनेन यो नृपतिः
साधूनामभयं ददाति स एव पूज्यः सर्व्वेषां श्लाघ्यो भवति सत्रं
गवायनादिक्रतुविशेषः यस्मात् सत्रमिव सत्रं तत्फल
दानाच्चौरनिग्रहरूपाभयदक्षिणं सर्व्वदैव तस्य वृद्धिमेति
अन्यद्धि सत्रं नियतकालीनं नियतदक्षिणञ्च एतत्तु सर्व्व
कालीनमभयदक्षिणञ्चेति व्यतिरेकालङ्कारः ॥ ३०३ ॥

सर्वतो धर्म्मषड्भागो राज्ञो भवति रक्षतः। अध
र्म्मादपि षड्भागो भवत्यस्य ह्यरक्षतः॥ ३०४॥

सर्व्वतइति। प्रजारक्षतोराज्ञः सर्व्वस्य भृतिदातुर्व्वणिगादे र्भृत्यदातुश्च श्रोत्रियादेः सकाशात् धर्म्मषड्भागो भवति अरक्षतस्त्वाधर्म्मादपि लोकेन कृतात् षड्भागः स्यात् तस्माद्यत्नतः स्तेननिग्रहेण राजा रक्षणं कुर्य्यात्। न च भृतिक्रीतत्वात् राज्ञो धर्म्मषड्भागो न युक्तइति वाच्यम्। भृत्या धर्म्मषड्भागेन च परिक्रयस्य शास्त्रीयत्वात्॥ ३०४॥

यदधीते यद्यजते यद्ददाति यदर्चति। तस्य षड्भाग
भाग्राजा सम्यग्भवति रक्षणात्॥ ३०५॥

यदिति। यः कश्चिज्जपयागदानदेवतार्च्चादीनि करोति तस्य राजा सम्यक् पालनेन षड्भागम्प्राप्नोति॥ ३०५॥

रक्षन्धर्म्मेण भूतानि राजा बध्यांश्च घातयन्।
यजतेऽहरहर्यज्ञैः सहस्रशतदक्षिणैः॥ ३०६॥

रक्षन्निति। भूतानि सर्व्वाणि स्थावरजङ्गमादीनि यथाशास्त्रं दण्डप्रणयनरूपेण धर्म्मेण रक्षन् बध्यांश्च स्तेनादीन् ताडयन् प्रत्यहं लक्षगोदक्षिणैर्य्यज्ञैर्यजते तज्जन्यं पुण्यं प्राप्नोतीति भावः। ॥ ३०६॥

योऽरक्षन् बलिमादत्ते करं शुल्कञ्च पार्थिवः।
प्रतिभागञ्च दण्डञ्च स सद्यो नरकं व्रजेत् ॥ ३०७ ॥

योऽरक्षन्निति। यो राजा रक्षामकुर्वन् बलिं धान्यादेः षड्भागादिकं करं ग्रामपुरवासिभ्यः प्रतिमासं भाद्रपौषादिमासनियमेन वा ग्राह्यं शुल्कं स्थलजलपथादिना वणिज्याकारिभ्यो नियतस्थानेषु द्रव्याऽनुसारेण ग्राह्यन्दानमिति प्रसिद्धं प्रतिभागं फलकुसुमशाकतृणाद्युपायनम्प्रतिदिनग्राह्यं दण्डं व्यवहारादौ गृह्णाति स मृतः सन् सद्य एव नरकं याति ॥ ३०७ ॥

अरक्षितारं राजानं बलिषड्भागहारिणम्। तमाहुः सर्व्वलोकस्य समग्रमलहारकम् ॥ ३०८ ॥

अरक्षितारमिति। यो राजा न रक्षति अथ च धान्यादिषड्भागादिकं बलिरूपं गृह्णाति तं सर्व्वलोकानां सकलपापहारिणं मन्वादय आहुः ॥ ३०८ ॥

अनपेक्षितमर्य्यादं नास्तिकं विप्रलुम्पकम्। अरक्षितारमत्तारं नृपं विद्यादधोगतिम् ॥ ३०९ ॥

अनपेक्षितमिति। लंघितशास्त्रमर्य्यादं परलोकाभावबुद्धिशालिनमनुचितदण्डादिना धनग्राहिणं रक्षणरहितं करवस्त्रादेर्भक्षितारं राजानं नरकगामिनं जानीयात् ॥ ३०९ ॥

अधार्म्मिकांस्त्रिभिर्न्यायैर्न्निगृह्णीयात् प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन बधेन च ॥ ३१० ॥

अधार्म्मिकमिति । अधार्म्मिकञ्चौरादिमपराधापेक्षया त्रिभिरुपायैः प्रयत्नेन नियमयेत् । तानाह । कारागारप्रवेशनेन निगडादिबन्धनेन ताडनकरचरणादिच्छेदनादिनानाप्रकारहिंसनेन ॥ ३१० ॥

निग्रहेण हि पापानां साधूनां संग्रहेण च ।
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥ ३११ ॥

निग्रहेणेति । पापशालिनां निग्रहेण साधूनां संग्रहेण द्विजातय इव महायज्ञादिभिः सर्व्वकालं नृपतयः पवित्रीभवन्ति । तस्मादधार्म्मिकान् निगृह्णीयात् साधूंश्चानुगृह्णीयात् ॥ ३११ ॥

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्य्यिणां नृणाम् ।
बालवृद्धातुराणाञ्च कुर्व्वता हितमात्मनः ॥ ३१२ ॥

क्षन्तव्यमिति । कार्य्यवतामर्थिप्रत्यर्थिनां दुःखेनाक्षेपोक्तिं रचयतां तथा बालवृद्धव्याधितानामाक्षिपतां वक्ष्यमाणमात्मीयमुपकारमिच्छता प्रभुणा क्षमणीयम् ॥ ३१२ ॥

यः क्षिप्तो मर्षयत्यार्त्तैस्तेन स्वर्गे महीयते। यस्त्वैश्वर्य्यान्नक्षमते नरकन्तेन गच्छति॥ ३१३॥

यःक्षिप्तइति। दुःखितैराक्षिप्तः सहते यः सतेन स्वर्गलोके पूजां लभते प्रभुत्वदर्पान्न सहते यः सतेन नरकं गच्छति ॥ ३१३ ॥

राजा स्तेनेन गन्तव्योमुक्तकेशेन धावता। आचक्षाणेन तत् स्तेयमेवं कर्म्मास्मि शाधि मां॥ ३१४॥

स्कन्धेनादाय मुषलं लगुडं वापि खादिरम्। शक्तिञ्चोभयतस्तीक्ष्णमायसन्दण्डमेव वा॥ ३१५॥

राजेति। स्कन्धेनेति। यद्यपि सुवर्णस्तेयकृद्विप्रइत्यादिना प्रायश्चित्तप्रकरणे वक्ष्यति तथापि सुवर्णस्तेनं प्रति राजदण्डरूपतामस्य दर्शयितुं दण्डप्रकरणे पाठः। ब्राह्मणसुवर्णस्य चौरेण मुक्तकेशेन वेगाद्गच्छता मया ब्राह्मणसुवर्णमपहृतमिति स्तेयंख्यापयता मुषलाख्यमायुधं खादिरमयं वा दण्डमुभयतस्तीक्ष्णां शक्तिं लोहमयं वा दण्डं स्कन्धे गृहीत्वा राजसमीपे गन्तव्यं ततोब्राह्मणसुवर्णहार्य्यहमतोऽनेन मुषलादिना मां व्यापादयेत्येवं राज्ञे वक्तव्यम्॥ ३१४॥ ३१५॥

शासनाद्वा विमोक्षाद्वा स्तेनः स्तेयाद्विमुच्यते। अशा सित्वा तु तं राजा स्तेनस्याप्नोति किल्बिषं ॥ ३१६ ॥

शासनादिति। सकृन्मुषलादिप्रहारेण प्राणपरित्याजनान्मृतक कल्पस्य जीवतोपि वा परित्यागात् स चौरस्तस्मात्पापात्प्रमु च्यते। अतएव याज्ञवल्क्यः। मृतकल्पः प्रहारार्त्तोजीवन्नपि विशुद्ध्यतीति। तं पुनःस्तेनं करुणादिभिरहत्वा स्तेनस्य यत्पा पन्तद्राजा प्राप्नोति॥ ३१६॥

अन्नादे भ्रूणहा मार्ष्टि पत्यौ भार्य्यापचारिणी। गुरौ शिष्यश्च याज्यश्च स्तेनोराजनि किल्बिषं॥३१७॥

अन्नाददति। ब्रह्महा यस्तत्सम्बन्धि योन्नमत्ति तस्मिन्नसौ स्वपापं संक्रामयति भ्रूणहान्नभोक्तः पापभ्भवतीत्येतदत्र विव क्षितं नतु ब्रह्मघ्नः पापन्नश्यति तथा भार्य्या व्यभिचारिणी जार पतिं क्षममाणे भर्त्तरि पापं संश्लेषयति शिष्यश्च सन्ध्याग्निकार्य्या द्यकरणजन्यं पापं गुरौ सहमाने न्यस्यति याज्यश्च विधिमति क्रामन् याजके क्षममाणे पापं निःक्षिपति स्तेनश्च राजन्युपेक्ष्य माणे पापं समर्पयति तस्माद्राज्ञा स्तेनोनिग्रहीतव्यः॥ ३१७॥

राजनिर्द्धूतदण्डास्तु कृत्वा पापानि मानवाः।
निर्म्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा॥३१८॥

राजेति। सुवर्णस्तेयादीनि पापानि कृत्वा पश्चाद्राजभि र्विहितदण्डामनुष्याः प्रतिबन्धकदुरिताभावात् पूर्व्वार्ज्जित पुण्यवशेन साधवः सुकृतकारिणइव स्वर्गं गच्छन्ति एवञ्च प्रायश्चित्तवद्दण्डस्यापि पापक्षयहेतुत्वमुक्तम्॥ ३१८॥

यस्तु रज्जुं घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम्। स दण्डं प्राप्नुयान्माषन्तच्च तस्मिन्समाहरेत्॥ ३१९॥

यस्त्विति। कूपसमीपे रज्जुघटयोः जलोद्धरणाय धृतयो रज्जुं घटं वा योहरेत्। योवापानीयदानगृहंविदारयेत्ससौवर्णं माषन्दण्डं प्राप्नुयात् अनिर्द्दिष्टन्तु सौवर्णं माषन्तच्च प्रकल्पये दिति कात्यायनवचनात्। तच्च रज्ज्वादि तस्मिन् कूपे समर्पयेत् ॥ ३१९॥

धान्यन्दशभ्यः कुम्भेभ्योहरतोऽभ्यधिकम्बधः।
शेषेप्येकादशगुणन्दाप्यस्तस्य च तद्धनं॥ ३२०॥

धान्यमिति। द्विपलशतन्द्रोणोविंशतिद्रोणस्य कुम्भः दशसंख्ये भ्यः कुम्भेभ्योऽधिकन्धान्यं हरतोबधः स च हर्त्तृस्वामि

गुणवत्तापेक्षया ताडनाङ्गच्छेदमारणात्मको ज्ञेयः शेषे पुनरेकस्मादारभ्य दशकुम्भपर्य्यन्तहरणे निह्नुतैकादशगुणं दण्डं दाप्यः स्वामिनश्चापहृतं॥ ३२०॥

तथा धरिममेयानां शतादभ्यधिके वधः। सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्॥ ३२१॥

तथेति। यथा धान्ये वध उक्तस्तथा तुलापरिच्छेद्यानां सुवर्णरजतादीनामुत्कृष्टानाञ्च वाससाम्पट्टादीनाम्पलशताधिकेऽपहृते वधः कर्त्तव्य एव विषयसमीकरणञ्चात्र देशकालापहर्त्तृद्रव्यस्वामिजातिगुणापेक्षया परिहरणीयं एवमुत्तरत्रापि ज्ञेयम्॥ ३२१॥

पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते। शेषे त्वेकादशगुणं मूल्याद्दण्डम्प्रकल्पयेत्॥ ३२२॥

पञ्चेति। पूर्व्वोक्तानाम्पञ्चाशतऊर्द्धं शतं यावदपहारे कृते हस्तच्छेदनं मन्वादिभिरभिहितं। शेषे पुनरेकपलादारभ्य पञ्चाशत्पलपर्य्यन्तापहारे अपहृतधनादेकादशगुणन्दण्डं दाप्यः॥ ३२२॥

पुरुषाणां कुलीनानान्नारीणाञ्च विशेषतः। मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति॥ ३२३॥

पुरुषाणामिति। महाकुलजातानां मनुष्याणां विशेषेण स्त्रीणां

महाकुलप्रसूतानां श्रेष्ठानाञ्च रत्नानां वज्रवैदूर्य्यादीनां अपहारे बधमर्हति ॥ ३२३ ॥

महापशूनां हरणे शस्त्राणामौषधस्य च। काल मासाद्य कार्य्यञ्च दण्डं राजा प्रकल्पयेत् ॥ ३२४ ॥

महेति। महतां पशूनां हस्त्यश्वगोमहिषादीनां तथा खड्गादीनामस्त्राणां कल्याणघृतादेश्चौषधस्य दुर्भिक्षादिरूपं कालं कार्य्यम्प्रयोजनं च सदसद्विनियोगरूपं निरूप्य राजा ताडनाङ्गच्छेदनवधरूपन्दण्डं प्रकल्पयेत् ॥ ३२४ ॥

गोषु ब्राह्मणसंस्थासु छूरिकायाश्च भेदने। पशूनां हरणे चैव सद्यः कार्य्योऽर्द्धपादिकः ॥ ३२५ ॥

गोष्विति। ब्राह्मणसम्बन्धिनीनाङ्गवामपहारे बन्ध्यायाश्च गोर्वाहनार्थं नासाच्छेदने पशूनाञ्चाजैडकानां दण्डभूयस्त्वाद्या गाद्यर्थानां हरणेऽनन्तरमेव छिन्नार्द्धपादिकः कार्य्यः ॥ ३२५ ॥

सूत्रकार्पासकिण्वानां गोमयस्य गुडस्य च। दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च ॥ ३२६ ॥
वेणुवैदलभाण्डानां लवणानान्तथैव च। मृण्म यानाञ्च हरणे मृदो भस्मन एव च ॥ ३२७॥

मत्स्यानाम्पक्षिणाञ्चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत् पशुसम्भवम् ॥३२८॥
अन्येषाञ्चैवमादीनामद्यानामोदनस्य च । पक्वा
न्नानाञ्च सर्व्वेषान्तन्मूल्याद्द्विगुणो दमः ॥ ३२९ ॥

सूत्रेति । वेणुवैदलेति । मत्स्यानामिति । अन्येषामिति । ऊर्णादिसूत्रस्य कार्पासिकस्य च किण्वस्य सुराबीजद्रव्यस्य सूक्ष्मवेणुखण्डनिर्मितजलाहरणभाण्डादीनां यदन्यत्पशुसम्भवञ्चमृगचर्म्मखड्गशृङ्गादि अन्येषामप्येवंविधानामसारप्रायाणां मनःशिलादीनां मद्यानां द्वादशानां पक्वान्नानामोदनव्यतिरिक्तानामपूपमोदकादीनाञ्च कार्पासादिशब्दार्थानामसिद्धानाञ्चापहारेऽपहृतद्रव्यमूल्याद्द्विगुणो दण्डः कार्य्यः ॥ ३२६ ॥ ३२७ ॥ ॥ ३२८ ॥ ३२९ ॥

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च । अन्येष्व
परिपूतेषु दण्डः स्यात्पञ्चकृष्णलः ॥ ३३० ॥

पुष्पेष्विति । पुष्पेषु हरिते च क्षेत्रस्थे धान्ये गुल्मलतावृक्षेषु अपरिपूतेषु अनपास्तपुलाकेषु वक्ष्यमाणश्लोके धान्यनिर्द्देशात् परिपवनसम्भवाच्च अन्येषु धान्येषु समर्थपुरुषभारहार्य्येषु हृतेषु देशकालाद्यपेक्षया सुवर्णस्य रौप्यस्य वा पञ्चकृष्णलपरिमाणो दण्डः स्यात् ॥ ३३० ॥

परिपूतेषु धान्येषु शाकमूलफलेषु च। निरन्वये शतन्दण्डः सान्वयेऽर्द्धशतन्दमः॥ ३३१॥

परीति। निष्पुलाकीकृतेषु धान्येषु शाकादिषु चापहृतेषु अन्वयोद्रव्यस्वामिनां सम्बन्धः येन सह कश्चिदपि सम्बन्धोनास्ति एकग्रामवासादिः तत्र शतं दण्डः सान्वये तु पञ्चाशत्पणोदमः खलस्थेषु धान्येषु अयन्दण्डः तत्र हि परिपूयन्ते गृहस्थिते त्वेकादश गुणोदण्डः प्रागुक्तः॥ ३३१॥

स्यात्साहसन्त्वन्वयवत् प्रसभं कर्म्म यत्कृतम्। निरन्वयम्भवेत् स्तेयं हृत्वापह्नूयते च यत्॥ ३३२॥

स्यादिति। यद्धान्यापहारादिकङ्कर्म्म द्रव्यस्वामिसमक्षं बलात् हृतं तत्साहसं स्यात् सहोबलं तद्भवं साहसं अतश्च स्तेय दण्डो न कार्य्यः. एतदर्थस्तेयप्रकरणेस्यपाठः यत्पुनःस्वामिप रोक्षापहृतं तत् स्तेयं भवेत् यच्च हृत्वा अपह्नुते तदपि स्तेय मेव॥ ३३२॥

यस्त्वेतान्युपक्लृप्तानि द्रव्याणि स्तेनयेन्नरः। तमाद्यन्दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात्॥ ३३३॥

यस्त्वेतानीति। यः पुनरेतानि सूत्रादिद्रव्याणि उपभोगार्थं कृतसंस्काराणि मनुष्यश्चोरयेत्। यश्च त्रेताग्निं गृह्याग्निं वा

अग्निगृहाच्चोरयेत्तं राजा प्रथमं साहसन्दण्डयेत् अग्निस्वामिन स्वाधानोपचयो दातव्यः। गोविन्दराजस्तु लौकिकमप्यग्निं चोरयतोऽयं दण्ड इत्याह तदयुक्तम् अल्पापराधे गुरुदण्डस्यान्याय्यत्वात्॥ २३३॥

येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते। तत्तदेव हरेत्तस्य प्रत्यादेशाय पार्थिवः॥ २३४॥

येनेति। येन येनाङ्गेन हस्तपादादिना येन प्रकारेण सन्धिच्छेदादिना चौरो मनुष्येषु विरुद्धं धनापहारादिकं चेष्टते तस्य तदेवाङ्गम्प्रसङ्गनिवारणाय राजा छेदयेत्। तत्र धनस्याल्पोत्कर्षस्तेनाकर्षापेक्षयाऽयमङ्गच्छेदः॥ २३४॥

पिताचार्य्यः सुहृन्माता भार्य्या पुत्त्रः पुरोहितः। नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न तिष्ठति॥२३५॥

पितेति। पित्राचार्य्यमित्रभ्रातृमातृपत्नीपुत्त्रपुरोहितानां मध्यात्स्वधर्म्मे योनावतिष्ठते स राज्ञोऽदण्डनीयो नास्ति अपितु दण्डनीय एव॥ २३५॥

कार्षापणम्भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः। तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥ २३६॥

कार्षेति। यत्रापराधे राजव्यतिरिक्तो जनः कार्षापणं दण्डनीयो भवेत्तस्मिन्नपराधे राजा पणसहस्रन्दण्डनीय इति

निश्चयः। स्वार्थदण्डन्तु अप्सु प्रवेशयेत् ब्राह्मणेभ्यो वा दद्यात्। ईशो दण्डस्य वरुण इति वक्ष्यमाणत्वात्॥ २३६ ॥

अष्टापाद्यन्तु शूद्रस्य स्तेये भवति किल्बिषं। षोड शैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य च ॥ २३७॥

ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतम्भवेत्। द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥ २३८ ॥

अष्टेति। ब्राह्मणस्येति। तद्दोषगुणविद्धि स इति सर्वत्र संब ध्यते यस्मिन् स्तेये यो दण्ड उक्तः स स्तेयगुणदोषज्ञस्य शूद्रस्याष्ट भिरापद्यते गुण्यते इति अष्टगुणः कर्त्तव्यः। षोडशगुणो गुण दोषज्ञस्य वैश्यस्य। द्वात्रिंशद्गुणस्तथाविधक्षत्रियस्य। चतुःषष्टि गुणो गुणदोषविदुषो ब्राह्मणस्य। शतगुणो वा। अष्टाविंशत्यधिक शतगुणो वा। गुणातिशयापेक्षया ब्राह्मणस्यैव॥२३७॥ २३८॥

वानस्पत्यं मूलफलन्दार्व्वाग्न्यर्थन्तथैव च। तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत्॥ २३९ ॥

वानस्पत्यमिति। वीरुद्वनस्पतीनाम्पुष्पाणि स्ववदाद दीत फलानि चापरिवृतानां इति गौतमवचनात्। अपरिवृत

वानस्पत्यादीनां मूलफलं होमीयाग्न्यर्थञ्च दारु गोग्रासार्थञ्च तृणम्परकीयमस्तेयं मनुराह तस्मादिह न दण्डोनाप्यधर्म्मः ॥ ३३९ ॥

योऽदत्तादायिनोहस्ताल्लिप्सेत ब्राह्मणोधनं। याजनाध्यापनेनापि यथास्तेनस्तथैव सः ॥ ३४० ॥

योऽदत्तेति। अदत्तादायिनश्चौरस्य हस्तात् योब्राह्मणो याजनाध्यापनप्रतिग्रहैरपि परकीयधनं ज्ञात्वा लब्धुमिच्छेत्स चौरवच्चौरतुल्योज्ञेयः अतः स इव दण्ड्यः ॥३४० ॥

द्विजोध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके। आददानः परक्षेत्रान्न दण्डन्दातुमर्हति ॥ ३४१ ॥

द्विजइति। द्विजातिः पथिकः क्षीणपाथेयः द्वाविक्षुदण्डौ द्वे च मूलके परकीयक्षेत्राद्गृह्णन् दण्डदानयोग्योन भवति ॥ ३४१ ॥

असन्धितानां संधाता सन्धितानाञ्च मोक्षकः। दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्विषं ॥३४२॥

असन्धीति। अवद्धानामश्वादीनाम्परकीयानां योदर्पेण बन्धयिता बद्धानां मन्दुरादौ मोचयिता योवा दासाश्वरथापहारी स चौरदण्डं प्राप्नुयात्स च गुरुलघ्वपराधानुसारेण मारणाङ्गच्छेदनधनाद्यपहाररूपोबोद्धव्यः ॥ ३४२ ॥

अनेन विधिना राजा कुर्व्वाणः स्तेननिग्रहं। यशोऽस्मिन् प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखं॥३४३॥

अनेनेति। अनेनोक्तविधानेन राजा चौरनियमनं कुर्व्वाणः इह लोके ख्यातिम्परलोके चोत्कृष्टसुखम्प्राप्नुयात् ॥ ३४३ ॥

ऐन्द्रं स्थानमभिप्रेप्सुर्यशश्चाक्षयमव्ययम्। नोपेक्षेत क्षणमपि राजा साहसिकन्नरम्॥ ३४४॥

ऐन्द्रमिति। सर्व्वाधिपत्यलक्षणं पदं ख्यातिं चाविनाशिनी मनपक्षयाच्चातिशयेन प्राप्तुमिच्छन् राजा बलेन गृहदाहधन ग्रहणकारिणं मनुष्यं क्षणमपि नोपेक्षेत॥ ३४४॥

वाग्दुष्टात्तस्कराच्चैव दण्डेनैव च हिंसतः। साह सस्य नरः कर्त्ता विज्ञेयः पापकृत्तमः॥ ३४५॥

वागिति। वाक्पारुष्यकृतश्चौराच्च दण्डपारुष्यकारिणश्च मनुष्यात्साहसकृन्मनुष्योऽतिशयेन पापकारी बोद्धव्यः॥३४५॥

साहसे वर्त्तमानन्तु यो मर्षयति पार्थिवः। स विनाशं व्रजत्याशु विद्वेषञ्चाधिगच्छति॥ ३४६॥

साहसइति। योराजा साहसे प्रवर्त्तमानं क्षमते स पाप कृतामुपेक्षणादधर्म्मवृद्ध्या विनश्यति अपक्रियमाणराष्ट्रतया जनविद्वेषञ्च गच्छति॥ ३४६॥

क्षत्रायोगववैदेहमागधसूताः षट् यथोत्तरमुत्कर्षात् प्रातिलो म्येन स्त्रीषु वर्त्तमाना वाह्यतरान् पञ्चदशैव पुत्रान् जनयन्ति। तद्यथा। चाण्डालः क्षत्रादिषु पञ्चसु स्त्रीषु क्षत्ता आयोगव्यादिषु चतसृषु आयोगवो वैदेह्यादिषु तिसृषु वैदेहो मागधी सूत्योः मागधः सूत्यां सूतस्तु प्रतिलोमाभावात् प्रातिलोम्येन जनयत्येव एवमेते प्रातिलोम्येन पञ्चदशैव पुत्रान् जनयन्ति पुनरितिनिर्द्देशात् हीनाः सूतादयश्चाण्डालान्ताः षट् यथोत्तरमपकर्षात् आनुलोम्येनापि प्रतिलोमोक्तरीत्या स्वापेक्षया हीनान् पञ्चदशैव पुत्रान् जनयन्ति एवं त्रिंशदेते भवन्ति ॥३१॥

प्रसाधनोपचारज्ञमदासं दासजीवनम्।
सैरिन्ध्रं वागुरावृत्तिं सूते दस्युरयोगवे ॥ ३२ ॥

प्रसाधनेति। केशरचणादिः प्रसाधनस्तस्योपचारज्ञं अदासं उच्छिष्टभक्षणादिदासकर्म्मरहितं अङ्गसम्वाहनादिदासकर्म्म जीवनम्पाशबन्धनेन मृगादिबधाख्यवृत्यन्तरजीवनं सैरिन्ध्र नामानं मुखवाङ्गरूपज्ञानामिति श्लोके वक्ष्यमाणोदस्युरायोगवस्त्रीजातौ शूद्रेण वैश्यायामुत्पन्नायां जनयति तत्रास्य मृगादिमारणं देवपित्रौषधार्थं वेदितव्यम् ॥ ३२ ॥

मैत्रेयकन्तु वैदेहोमाधूकं सम्प्रसूयते। नॄन् प्रशं संत्यजस्रं यो घण्टाताडोऽरुणोदये ॥ ३३ ॥

मैत्रेयकन्त्विति। वैश्याद्ब्राह्मण्यां जातोवैदेहः प्रकृतायामायो

गव्यामैत्रेयाख्यं मधुरभाषिणं जनयति यः प्रातर्घण्टामाहत्य राजप्रभृतीन्सततं वृत्यर्थं स्तौति ॥ ३३ ॥

निषादोमार्गवं सूते दाशं नौकर्म्मजीविनम्।
कैवर्त्तमिति यं प्राहुरार्य्यावर्त्तनिवासिनः ॥ ३४ ॥

निषादइति। ब्राह्मणेन शूद्रायां जातोनिषादः प्रागुक्तः प्रकृतायामायोगव्यां मार्गवन्दाशापरनामानन्नौव्यवहारजीविनञ्जनयति आर्य्यावर्त्तदेशवासिनः कैवर्त्तशब्देन कीर्त्तयन्ति॥ ३४॥

मृतवस्त्रभृत्सुनारीषु गर्हितान्नाशनासु च।
भवन्त्यायोगवीष्वेते जातिहीनाः पृथक्त्रयः॥ ३५॥

मृतेति। सैरिन्ध्रमैत्रेयमार्गवा हीनजातीयास्त्रयः मृतवस्त्रपरिधानासु क्रूरास्वुच्छिष्टभक्षासु योगवीषु पितृभेदाद्भिन्ना भवन्ति ॥ ३५ ॥

कारावरोनिषादात्तु चर्म्मकारः प्रसूयते। वैदेहिकादन्ध्रमेदौ वहिर्ग्रामप्रतिश्रयौ ॥ ३६ ॥

कारावरइति। वैदेह्यामेव जायतइति उत्तरत्र श्रवणात् अत्राप्याकाङ्क्षायां सैव संबध्यते निषादाद्वैदेह्यां जातः काराव

राख्यश्चर्मच्छेदनकारी जायते अतएव श्लोग्रनसे कारावरा णाञ्चर्मच्छेदनाचरणमेव वृत्तिलेनोक्तम्। वैदेहकसैरिन्ध्यमे दाख्यौ ग्रामवहिर्व्वासिनौ अन्तरानिर्देशाद्वैदेहकेन वैदेह्यां जातस्य गर्हितवैदेहकस्याप्युचितलात्। कारावरनिषादजात्यो स्तत्र श्लोके सन्निधानात् कारावरनिषादस्त्रियोरेव क्रमेण जायते॥ ३६ ॥

चण्डालात्पाण्डुसोपाकस्त्वक्सारव्यवहारवान्।
आहिण्डिको निषादेन वैदेह्यामेव जायते॥ ३७॥

चण्डालादिति। वैदेह्यां चण्डालात्पाण्डुसोपाकाख्यो वेणु व्यवहारजीवी जायते निषादेन च वैदेह्यामेवाहिण्डिकाख्यो जायते अस्य च वन्धनस्थानेषु वाह्यसंरक्षणादाहिण्डिकानामि त्यौग्रनसे वृत्तिरित्युक्ता। समानमातापितृकलेपि कारावरा हिण्डिकयोर्वृत्तिभेदसंश्रवणात् व्यपदेशभेदः॥ ३७ ॥

चण्डालेन तु सोपाको मूलव्यसनवृत्तिमान्।
पुक्कस्यां जायते पापः सदा सज्जनगर्हितः॥ ३८॥

चण्डालेनेति। शूद्रायान्निषादेन जातायाम्पुक्कस्यांचण्डा लेन जनितः सोपाकाख्यः पापात्मा सर्व्वदा साधुभिर्निन्दितो

मारणोचितापराधस्य मूलं वध्यस्तस्य वसनं राजादेशेन मारणं तेन वृत्तिर्यस्य स जायते ॥ ३८ ॥

निषादस्त्री तु चण्डालात्पुत्रमन्त्यावसायिनम्। श्मशानगोचरं सूते बाह्यानामपि गर्हितम् ॥ ३९ ॥

निषादस्त्रीति। निषादी चण्डालात् अन्त्यावसायिसंज्ञं चण्डालादिभ्योपि दुष्टतमं श्मशानवासिनं तद्वृत्तिञ्च जनयति ॥३९॥

सङ्करे जातयस्त्वेताः पितृमातृप्रदर्शिताः। प्रच्छन्ना वा प्रकाशा वा वेदितव्याः स्वकर्म्मभिः ॥ ४० ॥

सङ्करइति। वर्णसङ्करविषये एता जातयोयस्येयं जनयित्री अयं जनकः स एवं जातीयो जात इत्येवं पितृमातृकथनपूर्व्वकन्दर्शिताः। तथा गूढाः प्रकटा वा तज्जात्युदितकर्म्मानुष्ठानेन ज्ञातव्याः ॥ ४० ॥

सजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः। शूद्राणान्तु सधर्म्माणः सर्व्वेऽपध्वंसजाः स्मृताः॥४१॥

सजातिजेति। द्विजातीनां समानजातीयासु जाताः तथानुलोम्येनोत्पन्नाः ब्राह्मणेन क्षत्रियावैश्ययोः क्षत्रियेण वैश्यायामेवं

षट्पुत्रा द्विजधर्म्मिणः उपनेयाः। ताननन्तरनाम्नइति यदुक्तं तत् तज्जातिव्यपदेशार्थं न संस्कारार्थमिति कस्यचिद्भ्रमः स्यात् अतएषां द्विजातिसंस्कारार्थमिदं वचनम्। ये पुनरन्ये द्विजात्युत्पन्ना अपि सूतादयः प्रतिलोमजास्ते शूद्रधर्म्माणो नैषामुपनयनमस्ति ॥ ४१ ॥

तपोवीजप्रभावैस्तु ते गच्छन्ति युगे युगे। उत्कर्षञ्चापकर्षञ्च मनुष्येष्विह जन्मतः॥ ४२ ॥

तपइति। सजातिजानन्तरजास्तपःप्रभावेण विश्वामित्रवद्वीजप्रभावेण च ऋष्यशृङ्गादिवत्कृतत्रेतादौ मनुष्यमध्ये जात्युत्कर्षङ्गच्छन्ति अपकर्षञ्च वक्ष्यमाणहेतुना यान्ति ॥ ४२ ॥

शनकैस्तु क्रियालोपादिमाः क्षत्रियजातयः। वृषलत्वं गता लोके ब्राह्मणादर्शनेन च ॥ ४३ ॥

शनकैरिति। इमा वक्ष्यमाणाः क्षत्रियजातयः उपनयनादिक्रियालोपेन ब्राह्मणानाञ्च याजनाध्यापनप्रायश्चित्ताद्यर्थदर्शनाभावेन शनैः शनैर्लोके शूद्रतां प्राप्ताः ॥ ४३ ॥

पौण्ड्रकाश्चौड्रद्रविडाः काम्बोजा जवनाः शकाः ।
पारदापह्लवाश्चीनाः किराता दरदाः खशाः ॥४४॥

पौण्ड्रकादृति । पौण्ड्रादिदेशोद्भवाः क्षत्रियाः सन्तः क्रिया लोपादिना शूद्रत्वमापन्नाः ॥ ४४ ॥

मुखबाहूरुपज्जानां या लोके जातयो बहिः ।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः ॥ ४५ ॥

मुखेति । ब्राह्मणक्षत्रियवैश्यशूद्राणां क्रियालोपादिना या जातयो वाह्या जाता म्लेच्छभाषायुक्ता आर्य्यभाषोपेता वा ते दस्यवः सर्व्वे स्मृताः ॥ ४५ ॥

ये द्विजानामपसदा ये चापध्वंसजाः स्मृताः ।
ते निन्दितैर्वर्त्तयेयुर्द्विजानामेव कर्म्मभिः ॥ ४६ ॥

य इति । ये द्विजानामानुलोम्येन उत्पन्नाः षडेतेऽपसदाः स्मृता इति तेषामपि पितृतो जघन्यत्वेनापसदशब्देन प्रागभिधानात् ये चापध्वंसजाः प्रतिलोमजास्ते द्विजात्युपकारकैरेव निन्दितैर्वर्त्तमानैः कर्म्मभिर्जीवेयुः ॥ ४६ ॥

सूतानामश्वसारथ्यमम्बष्ठानाञ्चिकित्सितं। वैदेह
कानां स्त्रीकार्य्यम्मागधानां वणिक्पथः ॥ ४७ ॥

सूतानामिति। सूतानामश्वदमनयोजनादि रथसारथ्यं जीवनार्थं। अम्बष्ठानां रोगशान्त्यादिचिकित्सा वैदेहकाना मन्तःपुररक्षणं मागधानां स्थलपथवणिज्या ॥ ४७ ॥

मत्स्यघातो निषादानां तष्टिस्त्वायोगवस्य च।
मेदान्ध्रचुञ्चुमद्गूनामारण्यपशुहिंसनम् ॥ ४८ ॥

मत्स्येति। निषादानामुक्तानां मत्स्यवधः। आयोगवस्य काष्ठ तक्षणं। मेदान्ध्रचुञ्चुमद्गूनां आरण्यपशुमारणम्। चुञ्चुर्मद्गुश्च वैदेहकवन्दिस्त्रियोर्ब्राह्मणेनजातौ बौधायनेनोक्तौ बोद्धव्यौ वन्दिस्त्री च क्षत्रियेण शूद्रायां जाता तदुक्त्यैव ग्राह्या॥ ४८॥

क्षत्तुग्रपुक्कसानान्तु विलौकोवधबन्धनम्। धिग्व
णानाञ्चर्म्मकार्य्यं वेणानाम्भाण्डवादनम् ॥ ४९ ॥

क्षत्तुग्रेति। क्षत्रादीनां विलनिवासिगोधादिवधबन्धनं धिग्वणानां चर्म्मकरणं तद्विक्रयश्च। चर्म्मकरणं तद्विक्रयस्य जीवनं धिग्वणानामित्यौशनसदर्शनात् अतएव कारावरेभ्यः एषां वृत्तिभेदः वेणानां कांस्यमुरजादिवाद्यभाण्डवादनम् ॥ ४९ ॥

चैत्यद्रुमश्मशानेषु शैलेषूपवनेषु च। वसेयुरेते विज्ञाना वर्त्तयन्तः स्वकर्म्मभिः ॥ ५० ॥

चैत्येति। ग्रामादिसमीपे ख्यातवृक्षश्चैत्यद्रुमः तन्मूले श्मशानपर्व्वतवनसमीपेषु चामी प्रकाशकाः स्वकर्मभिर्जीवन्तो वसेयुः ॥५०॥

चण्डालश्वपचानान्तु बहिर्ग्रामात्प्रतिश्रयः। अपपात्राश्च कर्त्तव्या धनमेषां श्वगर्द्दभम् ॥ ५१ ॥

वासांसि मृतचेलानि भिन्नभाण्डेषु भोजनम्। कार्ष्णायसमलङ्कारः परिव्रज्या च नित्यशः ॥ ५२ ॥

चण्डालेति। वासांसीति। प्रतिश्रयो निवासः चाण्डालश्वपाकानान्तु ग्रामाद्बहिर्निवासः स्यात् पात्ररहिताः कर्त्तव्या यत्र लोहादिपात्रे तैर्भुक्तं तत्संस्कृत्यापि न व्यवहर्त्तव्यं धनञ्चैषां कुक्कुरखरं न वृषभादि। वासांसि च शववस्त्राणि भिन्नशरावादिषु च भोजनं लौहवलयादि चालङ्करणं सर्व्वदा च भ्रमणशीलत्वम् ॥ ५१ ॥ ५२ ॥

न तैः समयमन्विच्छेत्पुरुषो धर्म्ममाचरन्। व्यवहारो मिथस्तेषां विवाहः सदृशैः सह ॥ ५३ ॥

न तैरिति। धर्म्मानुष्ठानसमये चण्डालश्वपाकैः सह दर्शनादि

व्यवहारं न कुर्य्यात्। तेषाञ्च ऋणदानग्रहणादिव्यवहारो विवाहश्च समानजातीयैः सहान्योन्यं स्यात्॥ ५३॥

अन्नमेषाम्पराधीनं देयं स्याद्भिन्नभाजने। रात्रौ न विचरेयुस्ते ग्रामेषु नगरेषु च॥ ५४॥

अन्नमेषामिति। अन्नमेषाम्परायत्तं कार्य्यं साक्षादेभ्यो न देयं किन्तु प्रेष्यैर्भिन्नपात्रे दातव्यम्। ते च रात्रौ ग्रामनगरयोर्न पर्य्यटेयुः॥ ५४॥

दिवा चरेयुः कार्य्यार्थ चिह्निता राजशासनैः। अबान्धवं शवञ्चैव निर्हरेयुरिति स्थितिः॥ ५५॥

दिवेति। दिवा ग्रामादौ क्रयविक्रयादिकार्य्यार्थं राजाज्ञया चिह्नाङ्किताः सन्तः पर्य्यटेयुः अनाथञ्च शवं ग्रामान्निर्हरेयुरिति शास्त्रमर्य्यादा॥ ५५॥

बध्यांश्च हन्युः सततं यथाशास्त्रं नृपाज्ञया। बध्यवासांसि गृह्णीयुः शय्याश्चाभरणानि च॥ ५६॥

बध्यांश्चेति। बध्यांश्च शास्त्रानतिक्रमेण शूलारोपणादिना

सर्व्वदा राजाज्ञया हन्युः तदस्त्रशय्यालङ्कारांश्च गृह्णीयुः ॥ ५६ ॥

वर्णापेतमविज्ञातन्नरं कलुषयोनिजम्। आर्य्यरूपमिवानार्य्यं कर्म्मभिः स्वैर्विभावयेत् ॥ ५७ ॥

वर्णेति। वर्णत्वादपेतं मनुष्यं सङ्करजातं यं लोकैस्तथात्वेनाविज्ञातं अतएवार्य्यसदृशं वस्तुतः पुनरनार्य्यं निन्दितयोन्यनुरूपाभिश्चेष्टाभिर्वक्ष्यमाणाभिर्निश्चिनुयात् ॥ ५७ ॥

अनार्य्यता निष्ठुरता क्रूरता निष्क्रियात्मता। पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥ ५८ ॥

अनार्य्यतेति। निष्ठुरत्वपरुषभाषित्वहिंस्रत्वविहिताऽननुष्ठातृत्वानि सङ्करजातिं नरं अस्मिन् लोके प्रकटीकुर्व्वन्ति ॥ ५८ ॥

पित्र्यं वा भजते शीलं मातुर्वोभयमेव वा। न कथञ्चन दुर्य्योनिः प्रकृतिं स्वान्नियच्छति ॥ ५९ ॥

यस्मात् पित्र्यस्वेति। असौ सङ्करजातो दुष्टयोनिः

पितृसम्बन्धिदुष्टस्वभावत्वं सेवते मातृसम्बन्धिवोभयसम्बन्धि वा नकदाचिदसावात्मकारणं गोपयितुं शक्नोति ॥ ५९ ॥

कुले मुख्येपि जातस्य यस्य स्याद्योनिसङ्करः।
संश्रयत्येव तच्छीलन्नरोल्पमपि वा बहु ॥ ६० ॥

कुले इति। महाकुलप्रसूतस्यापि यस्य योनिसङ्करः प्रच्छन्नो भवति समनुष्यो जनकस्वभावं स्तोकमप्रचुरं वा सेवत एव ॥ ६० ॥

यत्र त्वेते परिध्वंसाजायन्ते वर्णदूषकाः। राष्ट्रिकैः सह तद्राष्ट्रं चिप्रमेव विनश्यति ॥ ६१ ॥

यत्रेति। यस्मिन्राष्ट्रे एते वर्णसङ्करा वर्णानां दूषका जायन्ते तद्राष्ट्रं राष्ट्रवासिजनैः सह शीघ्रमेव नाशमेति। तस्मा द्राज्ञा वर्णानां सङ्करो निरसनीयः ॥ ६१ ॥

ब्राह्मणार्थे गवार्थे वा देहत्यागोनुपस्कृतः।
स्त्रीबालाभ्युपपत्तौ च बाह्यानां सिद्धिकारणम् ॥ ६२ ॥

ब्राह्मणार्थ इति। गोब्राह्मणस्त्रीबालानामन्यतमस्यापि परित्राणार्थं दृष्टप्रयोजनानपेचः प्राणत्यागः प्रतिलोमजानां स्वर्गप्राप्तिकारणम् ॥ ६२ ॥

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एतं सामासिकं धर्म्मं चातुर्व्वर्ण्ये ऽब्रवीन्मनुः ॥ ६३॥

अहिंसेत्यादि । हिंसात्यागो यथार्थाभिधानम् । अन्यायेन परधनस्याग्रहणं मृज्जलादिना विशुद्धिरिन्द्रियसंयम इत्येवं धर्म्मं सङ्क्षेपतश्चातुर्व्वर्ण्यानुष्ठेयं मनुराह प्रकरणसामर्थ्यात्सङ्कीर्णानामप्ययं धर्म्मो वेदितव्यः ॥ ६३ ॥

शूद्रायां ब्राह्मणाज्जातः श्रेयसा चेत्प्रजायते । अश्रेयान् श्रेयसीं जातिङ्गच्छत्यासप्तमाद्युगात् ॥ ६४॥

इदानीं सर्व्ववर्णेषु तुल्यास्वित्युक्तलक्षणव्यतिरेकेणापि ब्राह्मणादिदर्शयितुमाह शूद्रायामिति । शूद्रायां ब्राह्मणाज्जातः पारशवाख्यो वर्णः प्रजायतइति सामर्थ्यात् स्त्रीरूपः स्यात् । सा यदि स्त्री ब्राह्मणेनोढा सती प्रसूयते सा दुहितरमेव जनयति साप्यन्येन ब्राह्मणेनोढा सती दुहितरमेव जनयति साप्येवमेवं सप्तमे युगे जन्मनि स पारशवाख्यो वर्णो वीजप्राधान्यात् ब्राह्मण्यं प्राप्नोति आसप्तमाद्युगादित्यभिधानात् सप्तमे जन्मनि ब्राह्मणः सम्पद्यतइत्यर्थः ॥ ६४ ॥

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्।
क्षत्रियाज्जातमेवन्तु विद्याद्वैश्यात्तथैव च ॥ ६५ ॥

शूद्र इति। एवं पूर्व्वश्लोकोक्तरीत्या शूद्रो ब्राह्मणतां याति ब्राह्मणस्य शूद्रतामेति ब्राह्मणोऽत्र ब्राह्मणात् शूद्रायामुत्पन्नः पारशवो ज्ञेयः स यदि पुमान् केवलशूद्रोद्वाहेन तस्यां पुमांस मेव जनयति सोपि केवलशूद्रोद्वाहेनापरं पुमांसमेव जनयति सोप्येवं सप्तमं जन्म प्राप्तः केवलशूद्रतां बीजनिकर्षात् क्रमेण प्राप्नोति एवं क्षत्रियाद्वैश्याच्च शूद्रायां जातस्योत्कर्षापकर्षौ जानीयात् किन्तु जातेरपकर्षात् जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेपिवा इति याज्ञवल्क्यदर्शनाच्च क्षत्रियाज्जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ बोद्धव्यौ वैश्याज्जातस्य ततोप्युत्कर्षात् याज्ञवल्क्येनापि वा शब्देन पक्षान्तरस्य संगृहीतत्वात् वृद्धव्याख्यानुरोधाच्च तृतीये जन्मनि उत्कर्षापकर्षौ ज्ञेयौ अनेनैव न्यायेन ब्राह्मणेन वैश्यायां जातस्य पञ्चमे जन्मनि उत्कर्षापकर्षौ क्षत्रियायां जातस्य तृतीये क्षत्रियेण वैश्यायां जातस्य तृतीय एव बोद्धव्यौ ॥ ६५ ॥

अनार्य्यायां समुत्पन्नो ब्राह्मणात्तु यदृच्छया।
ब्राह्मण्यामप्यनार्य्यात्तु श्रेयस्त्वं क्वेति चेद्भवेत् ॥ ६६॥

अनार्य्येति। एकः शूद्रायां यदृच्छया अनूढायामपि

ब्राह्मणादुत्पन्नोऽन्यश्च ब्राह्मण्यां शूद्राज्जातः द्वयोर्म्मध्ये कतरो त्पन्नस्य श्रेयस्त्वमिति चेत्संशयः क्वचित् स्यात् संशयवीजञ्च यथा वीजोत्कर्षात् ब्राह्मणात् शूद्रायां जातः साधुः शूद्रः एवं चेत्रो त्कर्षाद्ब्राह्मण्यामपि शूद्रेण जातः किमिति साधुः शूद्रो न स्यात् ॥ ६६ ॥

जातो नार्य्यामनार्य्यायामार्य्यादार्य्यो भवेद्गुणैः।
जातोऽप्यनार्य्यादार्य्यायामनार्य्य इति निश्चयः ॥६७॥

तत्र निर्णयमाह जात इति। शूद्रायां स्त्रियां ब्राह्मणाज्जातः स्मृत्युक्तैः पाकयज्ञादिभिर्गुणैरनुष्ठीयमानैर्युक्तः प्रशस्तो भवति शूद्रेण पुनर्ब्राह्मण्यां जातः प्रतिलोमतउत्पन्नतया शूद्रधर्म्मे ष्वप्यनधिकारादप्रशस्त इति निश्चयः न्यायप्राप्तोऽप्यर्थो वचन प्रामाण्यादत्र बोध्यते ॥ ६७ ॥

तावुभावप्यसंस्कार्य्याविति धर्म्मो व्यवस्थितः।
वैगुण्याज्जन्मनः पूर्व्व उत्तरः प्रतिलोमतः ॥ ६८ ॥

तावुभाविति। पारशवचण्डालौ द्वावप्यनुपनेयाविति व्यव स्थिता शास्त्रमर्य्यादा पूर्व्वः पारशवः शूद्राजातत्त्वेन जातिवैगु ण्यादनुपनेयः प्रातिलोम्येन शूद्रेण ब्राह्मण्यां जातत्वात् इत्युत्तर त्वेनानुपनेयः ॥ ६८ ॥

सुवीजञ्चैव सुक्षेत्रे जातं सम्पद्यते यथा। तथार्य्याज्जात आर्य्यायां सर्व्वं संस्कारमर्हति ॥ ६९ ॥

सुवीजमिति। यथाशोभनवीजं शोभनक्षेत्रे जातं समृद्धं भवति एवं द्विजातेर्द्विजातिस्त्रियां सवर्णायामानुलोम्येन च क्षत्रियावैश्ययोर्जातः सवर्णसंस्कारं क्षत्रियवैश्यसंस्कारञ्च सर्व्वं श्रौतं स्मार्त्तञ्चार्हति नच पारशवचण्डालाविति पूर्व्वोक्तदार्ढ्यार्थमेतत् ॥ ६९ ॥

वीजमेके प्रशंसन्ति क्षेत्रमन्ये मनीषिणः। वीजक्षेत्रे तथैवान्ये तत्रेयन्तु व्यवस्थितिः ॥ ७० ॥

प्रदर्शनान्तराण्युक्तस्यैवार्थस्य स्थैर्य्यार्थमाह वीजमिति। केचित्पण्डिता वीजं स्तुवन्ति हरिणाद्युत्पन्नस्य ऋष्यशृङ्गादेर्ब्रह्ममुनित्वदर्शनात्। अपरे पुनः क्षेत्रं स्तुवन्ति क्षेत्रस्वामिपुत्रत्वदर्शनात् अन्ये पुनर्वीजक्षेत्रे उभे अपि स्तुवन्ति सुवीजस्य सुक्षेत्रे समृद्धिदर्शनात् एतस्मिन्मतभेदे वक्ष्यमाणेयं व्यवस्था ज्ञेया ॥ ७० ॥

अक्षेत्रे वीजमुत्सृष्टमन्तरैव विनश्यति। अवीजकमपि क्षेत्रं केवलं स्थण्डिलम्भवेत् ॥ ७१ ॥

अक्षेत्रइति। ऊषरप्रदेशे वीजमुप्तं फलमददन्तराल

एव विनश्यति शोभनमपि चेत्रं वीजरहितं स्थण्डिलमेव केवलं स्यात् नतु शस्यमुत्पद्यते तस्मात्प्रत्येकन्निन्दया सुवीजञ्चैव सुचेत्रइति प्रागुक्तं उभयप्राधान्यमेवाभिमतम्॥ ७१॥

यस्माद्वीजप्रभावेण तिर्य्यग्जा ऋषयोऽभवन्।
पूजिताश्च प्रशस्ताश्च तस्माद्वीजम्प्रशस्यते॥ ७२॥

इदानीं वीजप्राधान्यपचे दृष्टान्तमाह यस्मादिति। यस्माद्वीजमाहात्म्येन तिर्य्यग्जातिहरिण्यादिजाता अपि ऋष्यशृङ्गादयो मुनित्वम्प्राप्ताः पूजिताश्च अभिवाद्यत्वादिना वेदज्ञानादिना प्रशस्ता वाचा संस्तुताः तस्माद्वीजं प्रस्तूयते एवञ्च वीजप्राधान्यनिगमनं वीजयोन्योर्मध्ये वीजोत्कृष्टाजातिः प्रधानमित्येवम्परतया बोद्धव्यम्॥ ७२॥

अनार्य्यमार्य्यकर्म्माणमार्य्यं चानार्य्यकर्म्मिणं।
सम्प्रधार्य्याब्रवीद्धाता न समौ नासमाविति॥ ७३॥

अनार्य्यमिति। शूद्रं द्विजातिकर्म्मकारिणं द्विजातिञ्च शूद्रकर्म्मकारिणं ब्रह्मा विचार्य्य न समौ नासमावित्यवोचत् यतः शूद्रोद्विजातिकर्म्मापि न द्विजातिसमः तस्यानधिकारिणो द्विजाति

कर्म्माचरणेपि तत्साम्याभावात्। एवं शूद्रकर्म्मापि द्विजातिः न शूद्रसमः निषिद्धसेवनेन जात्युत्कर्षस्यानपायात् नाप्यसमो निषिद्धाचरणेनोभयोः साम्यात्। तस्माद्यद्यस्य विगर्हितं तत्तेन न कर्त्तव्यमिति सङ्करपर्य्यन्तवर्णधर्म्मोपदेशः॥ ७३॥

ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्म्मण्यवस्थिताः। ते सम्यगुपजीवेयुः षट् कर्म्माणि यथाक्रमम्॥ ७४॥

इदानीं ब्राह्मणानामापद्धर्म्मप्रतिपादयिष्यन्निदमाह ब्राह्मणाइति। ये ब्राह्मणा ब्रह्मप्राप्तिकारणब्रह्मध्याननिष्ठाः स्वकर्म्मानुष्ठाननिरतास्त ते षट् कर्म्माणि वक्ष्यमाणान्यध्यापनादीनि क्रमेण सम्यगनुतिष्ठेयुः॥ ७४॥

अध्यापनमध्ययनं यजनं याजनन्तथा। दानम्प्रतिग्रहश्चैव षट् कर्म्माण्यग्रजन्मनः॥ ७५॥

तानि कर्म्माण्याह अध्यापनमिति। अध्यापनाध्ययने साङ्गस्य वेदस्य। तथा यजनयाजने दानप्रतिग्रहौ चेति एतानि षट् कर्म्माणि ब्राह्मणस्य वेदितव्यानि॥ ७५॥

षखान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।
याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥ ७६॥

षखामिति। अस्य ब्राह्मणस्य एषामध्यापनादीनां षखां कर्म्मणां मध्याद्याजनमध्यापनं विशुद्धप्रतिग्रहैर्धनं लिप्सेत् प्रशस्तेभ्योद्विज इति वचननिर्द्देशाद्विजातेः प्रतिग्रह इत्येतानि त्रीणि कर्म्माणि जीवनार्थानि ज्ञेयानि॥ ७६॥

त्रयो धर्म्मा निवर्त्तन्ते ब्राह्मणात्क्षत्रियम्प्रति।
अध्यापनं याजनञ्च तृतीयश्च प्रतिग्रहः॥ ७७॥

त्रयो धर्म्मा इति। ब्राह्मणापेक्षया क्षत्रियस्याध्यापनयाजनप्रतिग्रहाख्यानि वृत्त्यर्थानि त्रीणि कर्म्माणि निवर्त्तन्ते अध्ययनयागदानानि तु तस्यापि भवन्ति॥ ७७॥

वैश्यम्प्रति तथैवैते निवर्त्तेरन्निति स्थितिः। न
तौ प्रति हि तान् धर्म्मान्मनुराह प्रजापतिः॥७८॥

वैश्यम्प्रतीति। यथा क्षत्रियस्याध्यापनयाजनप्रतिग्रहा निवर्त्तन्ते तथा वैश्यस्यापीति शास्त्रव्यवस्था। यस्मान्मनुः प्रजा

पतिः तौ क्षत्रियवैश्यौ प्रति तानि वृत्त्यर्थानि कर्माणि कर्त्तव्यत्वेन नोक्तवान् एवं वैश्यस्याप्यध्ययनयागदानानि भवन्ति ॥ ७८ ॥

शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशुकृषिर्विशः।
आजीवनार्थन्धर्मस्तु दानमध्ययनं यजिः ॥ ७९ ॥

शस्त्रास्त्रेति। शस्त्रं खड्गादि अस्त्रं वाणादि एतद्धारणम्प्रजारक्षणाय क्षत्रियस्य वृत्त्यर्थम्। वाणिज्यपशुरक्षणकृषिकर्माणि वैश्यस्य जीवनार्थानि। धर्मार्थाः पुनरनयोर्दानाध्ययनयागा भवन्ति ॥ ७९ ॥

वेदाभ्यासो ब्राह्मणस्य क्षत्रियस्य च रक्षणम्।
वार्त्ताकर्मैव वैश्यस्य विशिष्टानि स्वकर्मसु ॥ ८० ॥

वेदेति। वेदाभ्यासो वेदाध्यापनं रक्षावार्त्ताभ्यां वृत्त्यर्थाभ्यां सहोपदेशादेतद्ब्राह्मणस्य। प्रजारक्षणं क्षत्रियस्य। वाणिज्यं पाशुपाल्यं वैश्यस्य। एतान्येतेषां वृत्त्यर्थकर्मसु श्रेष्ठानि ॥ ८० ॥

अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा।
जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः ॥ ८१ ॥

अधुना आपद्धर्मानाह अजीवन्निति। यथोक्तेनाध्यापना

दिस्वकर्म्मणा ब्राह्मणो नित्यकर्म्मानुष्ठानकुटुम्बसम्वर्द्धनपूर्व्व कमजीवन् क्षत्रियकर्म्मणा ग्रामनगररक्षणादिना जीवेत्। यस्मात्क्षत्रियधर्म्मोऽस्य सन्निकृष्टा वृत्तिः ॥ ८१ ॥

उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्।
कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकां ॥ ८२ ॥

उभाभ्यामिति। ब्राह्मण उभाभ्यां स्ववृत्तिक्षत्रियवृत्तिभ्यामप्यजीवन् केन प्रकारेण वर्त्ततेति यदि संशयः स्यात्तदा कृषिपशुरक्षणे आश्रित्य वैश्यस्य वृत्तिमनुतिष्ठेत्। कृषिगोरक्षग्रहणं वाणिज्यस्यापि प्रदर्शनार्थं तथा च विक्रेयाणि वक्ष्यति स्वयं कृतश्चेद् कृष्यादि ब्रह्मणापद्वृत्तिः। अस्वयं कृतस्य ऋतामृताभ्यां जीवेत इत्यनापद्येव विहितत्वात् ॥ ८२ ॥

वैश्यवृत्त्यापि जीवंस्तु ब्राह्मणः क्षत्रियोपि वा।
हिंसाप्रायाम्पराधीनां कृषिं यत्नेन वर्जयेत् ॥ ८३॥

सम्प्रति कृष्यादेर्बलाबलमाह वैश्येति। ब्राह्मणः क्षत्रियो वा वैश्यवृत्त्यापि जीवन् भूमिष्ठजन्तुहिंसाबहुलां बलीवर्द्दादिपराधीनां कृषिं यत्नतस्त्यजेत् अतः पशुपालनाद्यभावे कृषिः कार्य्येति द्रष्टव्यम्। क्षत्रियोपि वेत्युपादानात्क्षत्रियस्याप्यात्मीयवृत्त्यभावे वैश्यवृत्तिरस्तीत्यवगम्यते ॥ ८३ ॥

कृषिं साध्विति मन्यन्ते सा वृत्तिः सद्विगर्हिता ।
भूमिम्भूमिशयांश्चैव हन्ति काष्ठमयोमुखं ॥ ८४ ॥

कृषिमिति । साध्विदञ्जीवनमिति कृषिं केचिन्मन्यन्ते सा पुनर्ज्जीविका साधुभिर्न्निन्दिता यस्माद्धलकुद्दालादिलोह प्रान्तं काष्ठं भूमिम्भूमिष्ठजन्तूंश्च हन्ति ॥ ८४ ॥

इदन्तु वृत्तिवैकल्यात्त्यजतो धर्म्मनैपुणम् । विट् पण्यमुद्धृतोद्धारं विक्रेयं वित्तवर्द्धनम् ॥ ८५ ॥

इदन्त्विति । ब्राह्मणस्य क्षत्रियस्य चात्मीयवृत्तेरसम्भवे धर्म्मप्रति निष्णातत्त्वं त्यजतो वैश्येन यद्विक्रेतव्यं द्रव्यजातं तत् वक्ष्यमाणवर्ज्जनीयवर्जितं धनवृद्धिकरं विक्रेयं ॥ ८५ ॥

सर्व्वान्रसानपोहेत कृतान्नञ्च तिलैः सह ।
अश्मनो लवणञ्चैव पशवो ये च मानुषाः ॥ ८६ ॥

तानि वर्जनीयान्याह सर्व्वानिति । सर्व्वान् वोद्यमानान् रसान् तथा सिद्धान्नतिलपाषाणलवणपशुमनुष्यान् न विक्रिणीत । रसत्वेनैव लवणस्य निषेधसिद्धौ विशेषेण निषेधो दोषगौरवज्ञापनार्थः तच्च प्रायश्चित्तगौरवार्थमेव एवमन्यस्यापि पृथङ्निषेधो व्याख्येयः ॥ ८६ ॥

सर्व्वञ्च तान्तवं रक्तं शाणचौमाविकानि च ।
अपि चेत्स्युररक्तानि फलमूले तथौषधी ॥ ८७॥

सर्व्वमिति। सर्व्वन्तन्तुनिर्म्मितं वस्त्रं कुसुम्भादिना रक्तं वर्ज्जयेत्। शणक्षुमातन्तुमयान्याविकलोमभवानि च यद्यलोहितान्यपि भवेयुः तथापि न विक्रीणीत तथा फलमूलगुडूच्यादीनि वर्ज्जयेत् ॥ ८७ ॥

अपः शस्त्रं विषं मांसं सोमङ्गन्धांश्च सर्व्वशः ।
क्षीरं क्षौद्रन्दधि घृतं तैलं मधु गुडं कुशान् ॥ ८८ ॥

अप इति। जललोहविषमांससोमक्षीरदधिघृततैलगुडदर्भान् तथा गन्धवन्ति सर्व्वाणि कर्पूरादीनि क्षौद्रं माक्षिकं मधु मधूच्छिष्टं शस्त्रासवमधूच्छिष्टेति याज्ञवल्क्येन पठितं वर्जयेत् ॥ ८८ ॥

आरण्यांश्च पशून्सर्वान्दंष्ट्रिणश्च वयांसि च ।
मद्यन्नीलिञ्च लाक्षाञ्च सर्व्वांश्चैकशफांस्तथा ॥ ८९ ॥

आरण्यानिति। आरण्यान् सर्व्वान् पशून् हस्त्यादीन्दंष्ट्रिणः सिंहादीन् तथा पक्षिमद्यलाक्षैकशफांश्चाश्वादीन् न विक्रीणीत ॥ ८९ ॥

कामसुत्पाद्य कृष्यान्तु स्वयमेव कृषीवलः। विक्री
णीत तिलान् शुद्धान् धर्म्मार्थमचिरस्थितान्॥ ९०॥

कामसिति। कर्षकः स्वयमेव कर्षणेन तिलानुत्पाद्य द्रव्यान्त
रेण मिश्रान् उत्पत्त्यनन्तरमेव न तु लाभार्थं कालान्तरं
प्रतीच्य धर्म्मनिमित्तमिच्छातोविक्रीणीत निषिद्धस्यापि तिल
विक्रयस्य धर्म्मार्थमयम्प्रतिप्रसवः॥ ९०॥

भोजनाभ्यञ्जनाद्दानाद्यदन्यत्कुरुते तिलैः।
कृमिभूतः श्वविष्ठायाम्पितृभिः सह मज्जति॥ ९१॥

भोजनेति। भोजनाभ्यङ्गदानव्यतिरिक्तं यदन्यन्निषिद्धं विक्र
यादि तिलानां कुरुते तेन पापेन पितृभिः सह कृमित्वं प्राप्तः
कुक्कुरपुरीषे मज्जति॥ ९१॥

सद्यः पतति मांसेन लाक्षया लवणेन च। त्र्यहेण
शूद्रीभवति ब्राह्मणः क्षीरविक्रयात्॥ ९२॥

सद्य इति। मांसलाक्षालवणविक्रयैर्ब्राह्मणस्तत्क्षणादेव पत
तीति दोषगौरवख्यापनार्थमेतत् पञ्चानामेव महापातका
नाम्पातित्यहेतूनां वक्ष्यमाणत्वात्। क्षीरविक्रयात् त्र्यहेण

शूद्रतां प्राप्नोति एतदपि दोषगौरवात् प्रायश्चित्तगौरवख्यापनार्थम् ॥ ९२ ॥

इतरेषान्तु पण्यानां विक्रयादिह कामतः ।
ब्राह्मणः सप्तरात्रेण वैश्यभावं नियच्छति ॥ ९३ ॥

इतरेषामिति । ब्राह्मण उक्तेभ्यो मांसादिभ्योऽन्येषां प्रतिषिद्धानाम्पण्यानां इच्छातो न तु प्रमादात् द्रव्यान्तरसंश्लिष्टानां सप्तरात्रविक्रयणेन वैश्यत्वङ्गच्छति ॥ ९३ ॥

रसा रसैर्निमातव्या नत्वेव लवणं रसैः । कृता न्नञ्चाकृतान्नेन तिला धान्येन तत्समाः ॥ ९४ ॥

रसाइति । रसा गुडादयो रसैर्घृतादिभिः परिवर्त्तनीयाः लवणम्पुनः रसान्तरेण न परिवर्त्तनीयं सिद्धान्नञ्चामान्नेन परिवर्त्तनीयं तिला धान्येन धान्यं प्रस्थः प्रस्थेनेत्येवं तत्समाः परिवर्त्तनीयाः ॥ ९४ ॥

जीवेदेतेन राजन्यः सर्व्वेणाप्यनयङ्गतः । न त्वेवं ज्यायसीं वृत्तिमभिमन्येत कर्हिचित् ॥ ९५ ॥

जीवेदिति । क्षत्रियः आपद्ग्रस्तः एतेनेत्यभिधाय सर्व्वेणेत्यभिधानात् ब्राह्मणगोचरतया निषिद्धेनापि रसादिविक्रयणेन

वैश्यवज्जीवेत् न पुनः कदाचिद्ब्राह्मणजीविकामाश्रयेत् न केवलं क्षत्रियः वैश्यादयोऽन्येपि ॥ ९५ ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टकर्म्मभिः। तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥ ९६ ॥

यो लोभादिति। यो निकृष्टजातिः सन् लोभादुत्कृष्टजाति विहितकर्म्मभिर्जीवेत् तं राजा गृहीतसर्व्वस्वं कृत्वा तदानीमेव देशान्निःसारयेत् ॥ ९६ ॥

वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः। परधर्म्मेण जीवन् हि सद्यः पतति जातितः ॥ ९७ ॥

वरमिति। विगुणमपि स्वकर्म्म कर्त्तुं न्याय्यं न परकीयं संपूर्णमपि यस्माज्जात्यन्तरविहितकर्म्मणा जीवन् तत्क्षणादेव स्वजातितः पततीति दोषो वर्जनार्थः ॥ ९७ ॥

वैश्योऽजीवन् स्वधर्म्मेण शूद्रवृत्त्यापि वर्त्तयेत्। अनाचरन्नकार्य्याणि निवर्त्तेत च शक्तिमान् ॥ ९८ ॥

वैश्य इति। वैश्यः स्ववृत्त्या जीवितुमशक्नुवन् शूद्रवृत्त्यापि द्विजातिशुश्रूषया उच्छिष्टभोजनादीन्यकुर्वन् वर्त्तेत निस्तीर्णापत्कामशः शूद्रवृत्तितो निवर्त्तेत ॥ ९८ ॥

अशक्नुवंस्तु शुश्रूषां शूद्रः कर्त्तुं द्विजन्मनाम।
पुत्रदारात्ययम्प्राप्तो जीवेत्कारुककर्म्मभिः ॥ ९९ ॥

अशक्नुवन्निति। शूद्रः द्विजातिशुश्रूषां कर्त्तुमक्षमः क्षुदवसन्नपुत्रकलत्रः सूपकारादीनां कर्म्मभिर्जीवेत् ॥ ९९ ॥

यैः कर्म्मभिः प्रचरितैः शुश्रूष्यन्ते द्विजातयः।
तानि कारुककर्म्माणि शिल्पानि विविधानि च ॥ १०० ॥

यैरिति। पूर्व्वोक्तकारुकर्म्मविशेषाभिधानार्थं इदं। यैः कर्म्मभिः कृतैर्द्विजातयः परिचर्य्यन्ते तानि कारुकर्म्माणि तक्षणादीनि शिल्पानि च चित्रलिखितादीनि नानाप्रकाराणि कुर्य्यात् ॥ १०० ॥

वैश्यवृत्तिमनातिष्ठन् ब्राह्मणः स्वे पथि स्थितः।
अवृत्तिकर्षितः सीदन्निमं धर्म्मं समाचरेत् ॥ १०१ ॥

वैश्येति। ब्राह्मणो वृत्त्यभावपीडितोऽवसादङ्गच्छन् क्षत्रियवैश्यवृत्तिमनातिष्ठन् स्वधर्म्मो वरं विगुण इत्युक्तत्वात् स्ववृत्तावेव वर्त्तमान इमां वक्ष्यमाणां वृत्तिमनुतिष्ठेत् अतश्च विगुणप्रतिग्रहादिस्ववृत्त्यसम्भवे परवृत्त्याश्रयणं ज्ञेयम् ॥ १०१ ॥

सर्व्वतः प्रतिगृह्णीयाद्ब्राह्मणस्त्वनयङ्गतः। पवित्रं दुष्यतीत्येतत् धर्म्मतो नोपपद्यते॥ १०२॥

सर्व्वत इति। ब्राह्मण आपदं प्राप्तः सर्व्वेभ्योपि निन्दित निन्दिततरनिन्दिततमेभ्यः क्रमेण प्रतिग्रहं कुर्य्यात् अचार्थान्तरन्यासनामाऽलङ्कारः। यस्मात्पवित्रं गङ्गादि रथ्योदकादिना दुष्यतीत्येतत् शास्त्रस्थित्या नोपपद्यते॥ १०२॥

नाध्यापनाद्याजनाद्वा गर्हिताद्वा प्रतिग्रहात्। दोषो भवति विप्राणां ज्वलनाम्बुसमा हि ते॥१०३॥

यस्मात् नाध्यापनादिति। ब्राह्मणानामापदि गर्हिताध्यापनयाजनप्रतिग्रहैरधर्म्मो न भवति यस्मात् स्वभावतः पवित्रत्वेनाग्न्युदकतुल्यास्ते॥ १०३॥

जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते॥ १०४॥

जीवितेति। यः प्राणात्ययमाप्तः प्रतिलोमजादन्नमश्नाति सोऽन्तरीक्षमिव कर्द्दमेन पापेन न सम्बध्यते॥ १०४॥

अजीगर्त्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः। नचालिप्यत पापेन क्षुत्प्रतीकारमाचरन्॥ १०५॥

अत्र परकृतिरूपार्थवादमाह अजीगर्त्तइति। ऋषिरजीगर्त्ताख्यो बुभुक्षितः सन् पुत्रं शुनःशेफनामानं स्वयं विक्रीतवान् यज्ञे गोशतलाभाय यज्ञयूपे बद्धा विशसिता भूत्वा हन्तुं प्रचक्रमे नच क्षुत्प्रतीकारार्थं तथा कुर्व्वन् पापेन लिप्तः एतच्च वहृचब्राह्मणे शुनःशेफाख्यानेषु व्यक्तमुक्तम्॥ १०५॥

श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्म्माधर्म्मविचक्षणः। प्राणानाम्परिरक्षार्थं वामदेवो न लिप्तवान्॥१०६॥

श्वमांसमिति। वामदेवाख्य ऋषिर्द्धर्म्माधर्म्मज्ञः क्षुधार्त्तः प्राणत्राणार्थं श्वमांसं खादितुमिच्छन् दोषेण न लिप्तवान् ॥ १०६॥

भरद्वाजः क्षुधार्त्तस्तु सपुत्रो विजने वने। बह्वीर्गाः प्रतिजग्राह वृधोस्तक्ष्णो महातपाः॥ १०७॥

भरद्वाजइति। भरद्वाजाख्यो मुनिः महातपस्वी पुत्रसहितो निर्ज्जने वने अरण्ये उषित्वा क्षुत्पीडितो वृधुनाम्नस्तक्ष्णो बह्वीर्गाः प्रतिगृहीतवान्॥ १०७॥

क्षुधार्त्तश्चात्तुमभ्यागाद्विश्वामित्रः श्वजाघनीं।
चण्डालहस्तादादाय धर्म्माधर्म्मविचक्षणः॥१०८॥

क्षुधार्त्त इति। ऋषिर्व्विश्वामित्रो धर्म्माधर्म्मज्ञः क्षुत्पीडितः चण्डालहस्ताद्गृहीत्वा कुक्कुरजघनमांसम्भक्षितुमध्यवसितवान् ॥१०८॥

प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः॥१०९॥

प्रतिग्रहादिति। गर्हितानामप्यध्यापनयाजनप्रतिग्रहाणां मध्यात् ब्राह्मणस्यासत्प्रतिग्रहो निकृष्टः परलोके नरकहेतुः ततस्त्वापदि प्रथमन्निन्दिताध्यापनयाजनयोः प्रवर्त्तितव्यं तदसम्भवे त्वसत्प्रतिग्रह इत्येवम्परमेतत्॥१०९॥

याजनाध्यापने नित्यं क्रियेते संस्कृतात्मनाम्।
प्रतिग्रहस्तु क्रियते शूद्रादप्यन्त्यजन्मनः॥११०॥

अत्र हेतुमाह याजनेति। याजनाध्यापने आपद्यनापदि च उपनयनसंस्कृतात्मनां द्विजातीनामेव क्रियेते प्रतिग्रहः पुनर्निकृष्टजातेः शूद्रादपि क्रियते तस्मादसौ ताभ्यां गर्हितः॥११०॥

जपहोमैरपैत्येनो याजनाध्यापनैः कृतम्। प्रतिग्रहनिमित्तन्तु त्यागेन तपसैव च ॥ १११ ॥

जपेति। एनो ग्रहणादसत्प्रतिग्रहयाजनाध्यापनैर्यदुत्पन्नं पापं तत्प्रायश्चित्तप्रकरणे वक्ष्यमाणक्रमेण जपहोमैर्नश्यति असत्प्रतिग्रहजनितम्पुनः प्रतिगृहीतद्रव्यत्यागेन मासं गोष्ठे पयः पीत्वेत्येवमादिवक्ष्यमाणतपसा चापगच्छति ॥ १११ ॥

शिलोञ्छमप्याददीत विप्रोऽजीवन् यतस्ततः। प्रतिग्रहाच्छिलः श्रेयांस्ततोप्युञ्छः प्रशस्यते॥११२॥

शिलोञ्छमिति। ब्राह्मणः स्ववृत्त्याऽजीवन् यतस्तत इत्युपपातक्यादिभ्योपि शिलोञ्छं गृह्णीयात् न तु तत्सम्भवेऽसत्प्रतिग्रहं कुर्य्यात् यस्मादसत्प्रतिग्रहात् शिलः प्रशस्तः मञ्जर्य्यात्मकानेकधान्योन्नयनं शिलस्ततोप्युञ्छः श्रेष्ठः एकैकधान्यादिगुडकोच्चयनमुञ्छः ॥ ११२ ॥

सीदद्भिः कुप्यमिच्छद्भिर्द्धनं वा पृथिवीपतिः। याच्यः स्यात्स्नातकैर्व्विप्रैरदित्संस्त्यागमर्हति ॥ ११३ ॥

सीदद्भिरिति। स्नातकैर्ब्राह्मणैर्धनाभावात् धर्म्मार्थं कुटुम्बार्थं वावसादं गच्छद्भिः सुवर्णरजतव्यतिरिक्तं धान्यवस्त्रादि कुप्य

धनं यागाद्युपयुक्तं हिरण्याद्यपि आपत्प्रकरणात्क्षत्रियोण्युच्छास्त्रवर्त्ती याचितव्यः स्यात्। यश्च दातुन्नेच्छति कृपणत्वेनावधारितः स त्याज्यो न याचनीय इत्यर्थः। मेधातिथिगोविन्दराजौ तु त्यागमर्हतीति तस्य देशे न वस्तव्यमिति व्याचचाते॥ ११३॥

अकृतञ्च कृतात्क्षेत्राद्गौरजाविकमेव च। हिरण्यं धान्यमन्नञ्च पूर्व्वम्पूर्व्वमदोषवत्॥ ११४॥

अकृतञ्चेति। अकृतमनुप्तशस्यं चेत्रं कृतादुप्तशस्यात्प्रतिग्रहे दोषरहितं तथा गोक्षागमेषहिरण्यधान्यसिद्धान्नानां मध्यात्पूर्व्वम्पूर्व्वं अदुष्टं। ततस्तेषाम्पूर्व्वपूर्व्वासम्भवे परः परो ज्ञेयः॥ ११४॥

सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥ ११५॥

सप्तेति। दायाद्याः सप्त धनागमाः यथाधनाधिकारं धर्मादनपेताः तत्र दायोऽन्वयागतधनं लाभो निध्यादेः मैत्र्यादिलब्धस्य च। क्रयः प्रसिद्धः एते त्रयस्तुर्णामपि वर्णानान्धर्म्याः। जयधनं विजयलब्धेन क्षत्रियस्य धर्म्यः प्रयोगो वृद्ध्यादिधनस्य।

कर्म्मयोगश्च कृषिवाणिज्ये एतौ प्रयोगौ वैश्यस्यधर्म्मौ सत्प्रतिग्रहो ब्राह्मणस्य धर्म्मः एवञ्चैतेषां धर्म्मत्ववचनादेतदभावे अन्येष्वऽनापद्विहितेषु वृत्तिकर्म्मसु प्रवर्त्तितव्यं तदभावे चापद्विहितेषु प्रवर्तेष्वित्येतदर्थमेतद्विहोच्यते ॥ ११५ ॥

विद्या शिल्पम्भृतिः सेवा गोरक्ष्यं विपणिः कृषिः।
धृतिर्भैक्ष्यं कुसीदञ्च दश जीवनहेतवः ॥ ११६ ॥

विद्येति। आपत्प्रकरणाज्जीवनहेतव इति निर्देशात् एषांमध्ये यया वृत्त्या यस्यानापदि जीवनं निषिद्धं तया तस्यापद्यभ्यनुज्ञायते यथा ब्राह्मणस्य भृतिसेवादि एवं शिल्पादावपि ज्ञेयं विद्या वेदविद्याव्यतिरिक्ता वैद्यतर्कविषापनयनादिविद्या। सर्व्वेषामापदि जीवनार्थेन दुष्यति शिल्पं लिखनादिकरणं भृतिः प्रेष्यभावेन वेतनग्रहणं सेवा पराज्ञासम्पादनं गोरक्ष्यं पाशुपाल्यं विपणिर्व्वणिज्या कृषिः स्वयंकृता धृतिः सन्तोषः तस्मिन् सति अल्पकेनापि जीव्यते भैक्ष्यं भिक्षासमूहः कुसीदं वृद्ध्या धनप्रयोगः स्वयं कृतोपि इत्येभिर्दशभिरापदि जीवनीयम् ॥ ११६ ॥

ब्राह्मणः क्षत्रियो वापि वृद्धिन्नैव प्रयोजयेत्।
कामन्तु खलु धर्म्मार्थं दद्यात्पापीयसेऽल्पिकां ॥११७॥

ब्राह्मण इति। ब्राह्मणः क्षत्रियो वापि वृद्ध्यादिधनमापद्यपि

न प्रयुञ्जीत किन्तु निकृष्टकर्म्मणे धर्म्मार्थमल्पिकया वृद्ध्या प्रयुञ्जीत ॥ ११७ ॥

चतुर्थमाददानोऽपि क्षत्रियो भागमापदि। प्रजा रक्षन् परं शक्त्या किल्बिषात्प्रतिमुच्यते ॥ ११८ ॥

इदानीं राज्ञामापद्धर्म्ममाह चतुर्थमिति। राज्ञो धान्यानामष्टमदत्त्वाद्युक्तं स आपदि धान्यादेश्चतुर्थमपि भागं करार्थं गृह्णन् परया शक्त्या प्रजा रक्षन्नधिककरग्रहणपापेन न सम्बध्यते ॥ ११८ ॥

स्वधर्म्मो विजयस्तस्य नाहवे स्यात्पराङ्मुखः। शस्त्रेण वैश्यान्रक्षित्वा धर्म्म्यमाहारयेद्बलिं ॥ ११९ ॥

कस्मात्पुनरापद्यपि राज्ञो रक्षणमुच्यते यस्मात् स्वधर्म्म इति। राज्ञः शत्रुविजयः स्वधर्म्मो विजयफलं युद्धमित्यर्थः। प्रजारक्षणप्रयुक्तस्य यदि कुतश्चिद्भयं स्यात् तदा न युद्धपराङ्मुखो भवेत् एवञ्च शस्त्रेण वैश्यान् दस्युभ्यो रक्षित्वा तेभ्यो धर्म्मादनपेतमाप्तपुरुषैर्बलिमाहारयेत् ॥ ११९ ॥

धान्येऽष्टमं विशां शुल्कं विंशं कार्षापणावरम्। कर्म्मोपकरणाः शूद्राः कारवः शिल्पिनस्तथा ॥१२०॥

कासौ बलिस्तमाह धान्य इति। धान्यविषये उपचये वैश्याना

मष्टमभागं शुल्कमाहारयेत्। धान्यानां द्वादशोपि भाग उक्तः आपद्ययमष्टम उच्यते अत्यन्तापदि प्रागुक्तश्चतुर्थो वेदितव्यः तथा हिरण्यादीनां कार्षापणान्तानां विंशतितमं भागं शुल्कं गृह्णीयात् तचापि पञ्चाशद्भाग आदेयो राज्ञा पशुहिरण्ययोरित्यापदिना पञ्चाशद्भाग उक्तः आपद्ययं विंश उच्यते। तथा शूद्राः कारवः सूपकारादयः शिल्पिनः तक्षादयः कर्म्मणैवोपकुर्व्वन्ति नतु तेभ्य आपद्यपि करो ग्राह्यः ॥१२०॥

शूद्रस्तु वृत्तिमाकाङ्क्षेत् क्षत्रमाराधयेद्यदि।
धनिनं वाप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥१२१॥

शूद्रस्त्विति। शूद्रो ब्राह्मणशुश्रूषयाऽजीवन् यदि वृत्तिमाकाङ्क्षेत्तदा क्षत्रियम्परिचर्य्य तदभावे धनिनं वैश्यं परिचर्य्य जीवितुमिच्छेत् द्विजातिशुश्रूषणासामर्थ्ये तु प्रागुक्तानि कर्म्माणि कुर्य्यात् ॥ १२१ ॥

स्वर्गार्थमुभयार्थं वा विप्रानाराधयेत्तु सः। जात
ब्राह्मणशब्दस्य साह्यस्य कृतकृत्यता ॥ १२२ ॥

स्वर्गार्थमिति। स्वर्गप्राप्त्यर्थं स्वर्गस्ववृत्तिलिप्सार्थं वा ब्राह्मणानेव शूद्रः परिचरेत्। यस्माज्जातो ब्राह्मणाश्रितोयमिति शब्दो

यस्य शाकपार्थिवादिलाभमात्रः। सास्य शूद्रस्य कृतकृत्यता तदुपदेशतया असौ कृतकृत्यो भवति ॥ १२२ ॥

विप्रसेवैव शूद्रस्य विशिष्टं कर्म्म कीर्त्त्यते। यदतोऽन्यद्धि कुरुते तद्भवत्यस्य निष्फलम् ॥ १२३ ॥

यतएवमतः विप्रेति। ब्राह्मणपरिचर्य्यैव शूद्रस्य कर्मान्तरेभ्यः प्रकृष्टं कर्म शास्त्रेऽभिधीयते यस्मादेतद्व्यतिरिक्तं यदसौ कर्म कुरुते तदस्य निष्फलम्भवतीति पूर्व्वस्तुत्यर्थं नलन्यनिवृत्तये पाकयज्ञादीनामपि तस्य विहितत्वात् ॥ १२३ ॥

प्रकल्प्या तस्य तैर्वृत्तिः स्वकुटुम्बाद्यथार्हतः। शक्तिञ्चावेक्ष्य दाक्ष्यञ्च भृत्यानाञ्च परिग्रहं ॥१२४॥

प्रकल्प्येति। तस्य परिचारकशूद्रस्य परिचर्य्यासामर्थ्यं कर्म्मोत्साहम्पुत्रदारादिभर्त्तव्यपरिमाणञ्चावेक्ष्य तैर्ब्राह्मणैः स्वगृहादनुरूपा जीविका कल्पनीया ॥ १२४ ॥

उच्छिष्टमन्नन्दातव्यं जीर्णानि वसनानि च। पुलाकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः ॥१२५॥

उच्छिष्टमिति। तस्मै प्रकृताश्रितशूद्राय भुक्तावशिष्टान्नं

ब्राह्मणैर्देयं एवञ्च न शूद्राय मतिन्दद्यात् नोच्छिष्टमित्यना श्रितशूद्रविषयमवतिष्ठते तथाजीर्णवस्त्रासारधान्यजीर्णशय्या परिच्छदा अस्मै देयाः ॥ १२५ ॥

न शूद्रे पातकं किञ्चिन्नच संस्कारमर्हति । नास्या धिकारो धर्म्मेऽस्ति न धर्म्मात्प्रतिषेधनम् ॥ १२६ ॥

न शूद्रइति । लशुनादिभक्षणेन शूद्रे न किञ्चित्पातकम्भ वति नतु ब्रह्मवधादावपि अहिंसासत्यमित्यादेश्चातुर्व्वर्ण्यसा धारणत्वेन विहितत्वात् । नचाप्युपनयनादिसंस्कारमर्हति नास्याग्निहोत्रादिधर्म्मे अधिकारोऽस्ति अविहितत्वात् । नच शूद्र विहितात्पाकयज्ञादिधर्म्मादस्य निषेधः एवञ्चास्य सर्व्वस्य सिद्धार्थत्वात् अयं श्लोक उत्तरार्थोऽनुवादः ॥ १२६ ॥

धर्म्मेप्सवस्तु धर्म्मज्ञाः सतां वृत्तिमनुष्ठिताः । मन्त्र वर्ज्जन्न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च ॥ १२७ ॥

धर्म्मेति । ये पुनः शूद्राः स्वधर्म्मवेदिनो धर्म्मप्राप्तिकामास्त्रै वर्णिकानामाचारमनिषिद्धमाश्रिताः ते नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेदिति याज्ञवल्क्यवचनात् नमस्कारम न्त्रेण मन्त्रान्तररहितं पञ्चयज्ञादिधर्म्मं कुर्व्वाणा न प्रत्यवा यमाप्नुवन्ति ख्यातिञ्च लोके लभन्ते ॥ १२७ ॥

यथा यथा हि सद्वृत्तमातिष्ठत्यनसूयकः। तथा तथेमञ्चामुञ्च लोकम्प्राप्नोत्यनिन्दितः ॥ १२८ ॥

यथेति। परगुणानिन्दकः शूद्रो यथा यथा द्विजात्याचारमनिषिद्धमनुतिष्ठति तथा तथा जनैरनिन्दित इह लोके उत्कृष्टः स्मृतः स्वर्गादिलोकञ्च प्राप्नोति ॥ १२८ ॥

शक्तेनापि हि शूद्रेण न कार्य्यो धनसञ्चयः। शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते ॥ १२९ ॥

शक्तेनापीति। धनार्जनसमर्थेनापि शूद्रेण पोष्यवर्गसंवर्द्धन पञ्चयज्ञाद्युचितादधिकबहुधनसञ्चयो न कर्त्तव्यः यस्मात् शूद्रो धनं प्राप्य शास्त्रानभिज्ञत्वेन धनमदात् शुश्रूषायाश्चाकरणात् ब्राह्मणानेव पीडयतीत्युक्तस्यानुवादः ॥ १२९ ॥

एते चतुर्णां वर्णानामापद्धर्माः प्रकीर्त्तिताः। यां सम्यगनुतिष्ठन्तो व्रजन्ति परमाङ्गतिम् ॥ १३० ॥

एतदिति। अमी चतुर्णां वर्णानां आपद्यनुष्ठेया धर्म्मा उक्ता यान्सम्यगाचरन्तो विहितानुष्ठानात् निषिद्धाऽनाचरणाच्च निष्पापतया ब्रह्मज्ञानलाभेन परमां गतिं मोक्षलक्षणां लभन्ते ॥ १३० ॥

एष धर्म्मविधिः कृत्स्नश्चातुर्वर्ण्यस्य कीर्त्तितः।
अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं शुभं ॥ १३१ ॥

इति मानवे धर्मशास्त्रे भृगुप्रोक्तायां संहितायां दशमोऽध्यायः ॥

एषइति। अयश्चतुर्णां वर्णानामाचारः समग्रः कथितः। अतऊर्द्धं प्रायश्चित्तानुष्ठानं शुभमभिधास्यामि ॥ १३१ ॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां दशमोऽध्यायः ॥

---

## ॥ ११ एकादशोऽध्यायः ॥

---

सान्तानिकं यच्यमाणमध्वगं सर्व्ववेदसम् ।
गुर्व्वर्थम्पितृमात्रर्थं स्वाध्यायार्थ्युपतापिनः ॥ १ ॥
नवैतान् स्नातकान्विद्याद्ब्राह्मणान्धर्म्मभिक्षुकान् ।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्याविशेषतः ॥ २ ॥

सान्तानिकमिति । नवैतानिति । नन्वतः परम्प्रवक्ष्यामि प्रायश्चित्तविधिं शुभमिति प्रायश्चित्तस्य वक्तव्यतया प्रतिज्ञातत्वात् । सान्तानिकादिभ्यो देयमित्यादेः कः प्रस्तावः उच्यते । दानेनाकार्य्यकारिणइति प्रागुक्तत्वात् । दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्नित्यादेश्च वक्ष्यमाणत्वात् प्रकृष्टप्रायश्चित्तात्मकदानपात्रोपन्यासः प्रकृतोपयुक्त एव वर्णाश्रमधर्मादिव्यतिरिक्तप्रायश्चित्तादिनैमित्तिकधर्म्मकथनार्थत्वाच्चास्याध्यायस्य अन्यस्यापि नैमित्तिकधर्म्मस्यात्रोपन्यासो युक्तः । सन्तानप्रयोजनत्वाद्विवाहस्य सान्तानिको विवाहार्थी यक्ष्यमाणोऽवश्यकर्त्तव्यज्योतिष्टोमादियागं चिकीर्षुः अध्वगः पान्थः सर्व्ववेदसः कृतसर्वस्वदक्षिणविश्वजिद्यागः विद्यागुरोर्ग्रासाच्छादनादिरर्थः प्रयोजनं यस्य स गुर्व्वर्थः एवम्पितृमात्रर्थावपि स्वाध्यायार्थी स्वाध्यायाध्ययनकालीनाच्छादनाद्यर्थी ब्रह्मचारी उपतापी

रोगी एतान्नव ब्राह्मणान् धर्म्मभिक्षाशीलान् स्नातकान् जानीयात्। एतेभ्यो निर्द्धनेभ्यो गोहिरण्यादि दीयतइति दानं विद्याविशेषानुरूपेण दद्यात्॥ १॥ ॥ २॥

एतेभ्यो हि द्विजाग्र्येभ्यो देयमन्नं सदक्षिणम्।
इतरेभ्यो वहिर्वेदि कृतान्नन्देयमुच्यते॥ ३॥

एतेभ्यइति। एतेभ्यो नवभ्यो ब्राह्मणश्रेष्ठेभ्यो अन्तर्वेदि सदक्षिणमन्नन्दातव्यम्। एतद्व्यतिरिक्तेभ्यः पुनः सिद्धान्नं वहिर्वेदि देयत्वेनोपदिश्यते धनदानेत्वनियमः॥ ३॥

सर्व्वरत्नानि राजा तु यथार्हम्प्रतिपादयेत्। ब्राह्मणान्वेदविदुषो यज्ञार्थञ्चैव दक्षिणाम्॥ ४॥

सर्व्वेति। राजा पुनः सर्व्वरत्नानि मणिमुक्तादीनि यागोपयोगि च दक्षिणार्थन्धनं विद्यानुरूपेण वेदविदो ब्राह्मणान् स्वीकारयेत्॥ ४॥

कृतदारोऽपरान् दारान् भिक्षित्वा योधिगच्छति।
रतिमात्रं फलन्तस्य द्रव्यदातुस्तु सन्ततिः॥ ५॥

कृतेति। यः सभार्य्यः सन्तत्यर्थादिनिमित्तमन्तरेणापरान् दारान् भिक्षित्वा करोति तस्य रतिमात्रं फलं धनदातुः पुनस्तदुत्पन्नान्यपत्यानि भवन्तीति निन्दातिशयः तेन नैव धनं याचित्वाऽन्यो विवाहः कर्त्तव्यः नाप्येवं विधाय नियमतो धनं देयमित्येव तात्पर्य्यार्थः॥ ५॥

धनानि तु यथाशक्ति विप्रेषु प्रतिपादयेत्। वेदवित्सु विविक्तेषु प्रेत्य स्वर्गं समश्नुते ॥ ६ ॥

धनानीति। धनानि गोभूहिरण्यादीनि शक्त्यनतिक्रमेण ब्राह्मणेषु वेदज्ञेषु विविक्तेषु पुत्रकलत्राद्यवसक्तेषु प्रतिपादयेत्तद्दशाच्च स्वर्गप्राप्तिर्भवतीति ॥ ६ ॥

यस्य त्रैवार्षिकम्भक्तम्पर्य्याप्तम्भृत्यवृत्तये। अधिकं वापि विद्येत स सोमम्पातुमर्हति ॥ ७ ॥

यस्येति। यस्यावश्यपोष्यभरणार्थं वर्षत्रयपर्य्याप्तं तदधिकं वा भक्तादि स्यात् स काम्यसोमयागं कर्त्तुमर्हति। नित्यस्य पुनर्यथाकथञ्चिदवश्यकर्त्तव्यत्वात् नायं निषेधः अतएव समाप्ते सोमिकैर्म्मखैरिति नित्यविषयमुक्तवान् ॥ ७ ॥

अतः स्वल्पीयसि द्रव्ये यः सोमम्पिवति द्विजः। सपीतसोमपूर्वोपि न तस्याप्नोति तत्फलम् ॥ ८ ॥

अतइति। त्रैवार्षिकधनादल्पतरे धने सति यः सोमयागं करोति तस्य प्रथमसोमयागो नित्योपि न सम्पन्नो भवति सुतरां द्वितीययागः काम्यः ॥ ८ ॥

२ झ

शक्तः परजने दाता स्वजने दुःखजीविनि। मध्वापातोविषास्वादः स धर्म्मप्रतिरूपकः ॥ ९ ॥

शक्तइति। यो बहुधनत्वाद्दानशक्तः सन् अवश्यभरणीये पितृमात्रादिज्ञातिजने दौर्गत्यात् दुःखोपेते सति यशोर्थमन्येभ्यो ददाति स तस्य दानविशेषो धर्म्मप्रतिरूपको न तु धर्म्म एव मध्वापातो मधुरोपक्रमः प्रथमं यशस्करत्वात् विषास्वादस्त्वान्ते नरकफलत्वात्तस्मादेतन्न कार्य्यम् ॥ ९ ॥

भृत्यानामुपरोधेन यत्करोत्यौर्द्ध्वदेहिकम्। तद्भवत्यसुखोदर्कं जीवतस्य मृतस्य च ॥ १० ॥

भृत्यानामिति। पुत्रदाराद्यवश्यभर्त्तव्यपीडनेन यत् पारलौकिकधर्म्मबुद्ध्या दानादि करोति तस्य दातुर्जीवतो मृतस्य च तद्दानं दुःखफलम्भवति पूर्व्वं कीर्त्त्यादिदृष्टार्थदानप्रतिषेधः उक्त इदानीन्त्वदृष्टार्थदानप्रतिषेधः ॥ १० ॥

यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः। ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ ११ ॥

यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः। कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ १२ ॥

यज्ञश्चेति। योवैश्य इति। क्षत्रियादेर्यजमानस्य विशेषतो

ब्राह्मणस्य यदि यज्ञ इतराङ्गसम्पत्तौ सत्यामेकेनाङ्गेनासम्पूर्णः स्यात् तदा यो वैश्यो बहुपश्वादिधनः पाकयज्ञादिरहितो ऽसोमयाजी तस्य गृहात्तदङ्गोचितन्द्रव्यं बलेन चौर्य्येण वा हरेत्। एतच्च धर्म्मप्रधाने सति राजनि कार्य्यं सहि शास्त्रार्थ मनुतिष्ठन्तं न निगृह्णाति ॥ ११ ॥ २२ ॥

आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥ १३ ॥

आहरेदिति। यज्ञस्य द्वित्र्यङ्गवैकल्ये सति तानि त्रीणि चा ङ्गानि द्वे वाङ्गे वैश्यादलाभे सति निर्विशङ्कं शूद्रस्य गृहात् बलेन चौर्य्येण वा हरेत् यस्माच्छूद्रस्य कश्चिदपि यज्ञसंबन्धो नास्ति न यज्ञार्थन्धनं शूद्राद्विप्रोभिचेतेति वक्ष्यमाणप्रतिषेधः शूद्राद्याचनस्य न बलग्रहणादेः ॥ १३ ॥

योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १४ ॥

यद्रति। योऽनाहिताग्निः गोशतपरिमाणधन आहिताग्नि र्वा ऽसोमयाजी गोसहस्रपरिमितधनः द्वयोरपि गृहाभ्याम कृतमङ्गद्वयं त्रयं वा शीघ्रं सम्पादयितुं ब्राह्मणेन द्वाभ्यामाहर णीयं ब्राह्मणक्षत्रियाभ्यामपि ब्राह्मण आहरेत्। क्षत्रियस्य तु दस्युक्रियावद्ब्राह्मणस्वहरणं निषेधयिष्यति ॥ १४ ॥

आदाननित्याच्चादातुराहरेदप्रयच्छतः ।
तथा यशोऽस्य प्रथते धर्म्मश्चैव प्रवर्द्धते ॥ १५ ॥

आदानेति। प्रतिग्रहादिना आदानं धनग्रहणं नित्यं यस्यासौ आदाननित्यः ब्राह्मणः तस्मादिष्टापूर्त्तदानरहितात् यज्ञाङ्गद्रव्यचयार्थायां याचनायां कृतायां अददतो बलेन चौर्येण वा हरेत् तथा कृते अपहर्त्तुः ख्यातिः प्रकाशते धर्म्मस्य वृद्धिश्चेति ॥ १५ ॥

तथैव सप्तमे भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः ॥ १६ ॥

तथैवेति। सायंप्रातर्भोजनोपदेशात् त्रिरात्रोपवासे वृत्ते चतुर्थेऽहनि प्रातः सप्तमे भक्ते प्राप्ते दानादिधर्म्मरहितादेकदिनपर्य्याप्तमर्थं चौर्य्यादिना हर्त्तव्यम् ॥१६ ॥

खलात्क्षेत्रादगाराद्वा यतो वाप्युपलभ्यते ।
आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति॥ १७॥

खलादिति। धान्यादिमर्दनस्थानात्क्षेत्राद्वा गृहाद्वा यतो अन्यस्मात्प्रदेशाद्वा धान्यं हीनकर्म्मसम्बन्धि लभ्यते ततो हर्त्तव्यं यदिवासौ धनस्वामी पृच्छति किन्निमित्तं कृतमिति तस्मै पृच्छते सनिमित्तञ्चौर्य्यादि वक्तव्यम् ॥ १७ ॥

ब्राह्मणस्वं न हर्त्तव्यं क्षत्रियेण कदाचन। दस्यु
निष्क्रिययोस्तु स्वमजीवन् हर्त्तुमर्हति ॥ १८ ॥

ब्राह्मणेति। उक्तेष्वपि निमित्तेषु क्षत्रियेण ब्राह्मणस्य धनन्त
तोपहष्टत्वात् न हर्त्तव्यं समानन्यायतया वैश्यशूद्राभ्यां उत्कृ
ष्टजातितो न हर्त्तव्यं। प्रतिषिद्धकृद्विहिताननुष्ठायिनोः पुनर्ब्रा
ह्मणक्षत्रिययोरत्यन्तापदि क्षत्रियो हर्त्तुमर्हति ॥ १८ ॥

योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति।
स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ ॥ १९ ॥

योऽसाधुभ्यइति। यो हीनकर्म्मादिभ्य उत्कृष्टेभ्योऽभिहितेष्वपि
निमित्तेषु उक्तानुरूपं यज्ञाङ्गादिसिद्धये धनं हृत्वा साधुभ्य
उत्कृष्टेभ्य ऋत्विगादिभ्यो ददाति स यस्यापहरति तद्दुरितं
नाशयति यस्मै च ददाति तं दौर्गत्याभिघातादित्येवं द्वावप्या
त्मानमुडुपं कृत्वा दुःखान्मोचयति ॥ १९ ॥

यद्धनं यज्ञशीलानान्देवस्वन्तद्विदुर्बुधाः। अय
ज्वनान्तु यद्वित्तमासुरस्वं तदुच्यते ॥ २० ॥

यद्धनमिति। यज्ञशीलानां यद्धनं तद्यागादौ विनियोगात्

देवत्वं विद्वांसो मन्यन्ते यागादिपूर्त्त्यानान्तु यद्द्रव्यं तद्धर्म्म विनियोगाभावादासुरत्वमुच्यते अतस्तदपहृत्य यागसम्पादनाद्देवत्वं कर्त्तव्यम् ॥ २० ॥

न तस्मिन्धारयेद्दण्डं धार्म्मिकः पृथिवीपतिः । क्षत्रियस्य हि बालिश्याद्ब्राह्मणः सीदति क्षुधा ॥ २१ ॥

न तस्मिन्निति । तस्मिन्नुक्तनिमित्ते चौर्य्यबलात्कारं कुर्वाणे धर्म्मप्रधानो राजा दण्डन्न कुर्यात् यस्माद्राज्ञो मूढत्वाद्ब्राह्मणः क्षुधावसादं प्राप्नोति ॥ २१ ॥

तस्य भृत्यजनं ज्ञात्वा स्वकुटुम्बान्महीपतिः । श्रुतशीले च विज्ञाय वृत्तिन्धर्म्यां प्रकल्पयेत् ॥ २२ ॥

ततश्च तस्येति । तस्य ब्राह्मणस्यावश्यभरणीयपुत्रादिवर्गं ज्ञात्वा श्रुताचारौ च तदनुरूपां वृत्तिं स्वगृहाद्राजा कल्पयेत् ॥ २२ ॥

कल्पयित्वाऽस्य वृत्तिञ्च रक्षेदेनं समन्ततः । राजा हि धर्म्मषड्भागन्तस्मात्प्राप्नोति रक्षितात् ॥ २३ ॥

कल्पयित्वेति । अस्य ब्राह्मणस्य जीविकां विधाय शत्रुचौरादेः सर्व्वतो रक्षेत् । यस्माद्ब्राह्मणाद्रक्षितात्तस्य धर्म्मषड्भागम्प्राप्नोति ॥ २३ ॥

न यज्ञार्थन्धनं शूद्राद्विप्रो भिक्षेत कर्हिचित्। यजमानो हि भिक्षित्वा चण्डालः प्रेत्य जायते ॥ २४ ॥

नयज्ञार्थमिति। यज्ञसिद्ध्यर्थे धनम्ब्राह्मणः कदाचिन्न शूद्राद्याचेत्। यस्माच्छूद्राद्याचित्वा यज्ञं कुर्व्वाणो मृतश्चाण्डालो भवति अतो याचननिषेधात् शूद्राद्याचितोपस्थितं यज्ञार्थमप्यविरुद्धम् ॥ २४ ॥

यज्ञार्थमर्थम्भिक्षित्वा यो न सर्व्वम्प्रयच्छति। स याति भासतां विप्रः काकतां वा शतं समाः ॥ २५ ॥

यज्ञार्थमिति। यज्ञसिद्ध्यर्थं धनं याचित्वा यो यज्ञे सर्व्वन्न विनियुङ्क्ते स शतं वर्षाणि भासत्वं काकत्वं वा प्राप्नोति ॥ २५ ॥

देवस्वम्ब्राह्मणस्वं वा लोभेनोपहिनस्ति यः। स पापात्मा परे लोके गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

देवस्वमिति। प्रतिमादिदेवतार्थमुत्सृष्टं धनन्देवस्वं ब्राह्मणस्वञ्च यो लोभादपहरति स पापस्वभावो जन्मान्तरे गृध्रोच्छिष्टेन जीवति ॥ २६ ॥

इष्टिं वैश्वानरीं नित्यन्निर्वपेदब्दपर्य्यये। क्लृप्ता
नाम्पशुसोमानान्निष्कृत्यर्थमसम्भवे ॥ २७ ॥

इष्टिमिति। समाप्ते वर्षे द्वितीयवर्षस्य प्रवृत्तिरब्दपर्य्यय
श्चैत्रशुक्लादिस्य वर्षप्रवृत्तिः तत्र वर्षान्तरे वैश्वानरीमिष्टिं
विहितपशुसोमयागासम्भवे तदकरणदोषनिर्हरणार्थं सर्व्वदा
शूद्रादित उक्तधनग्रहणरूपामिष्टिं कुर्य्यात् ॥ २७ ॥

आपत्कल्पेन यो धर्म्मं कुरुते ऽनापदि द्विजः।
स नाप्नोति फलं तस्य परत्रेति विचारितम् ॥ २८ ॥

आपदिति। आपद्विहितेन विधिना योऽनापदि धर्म्मानुष्ठानं
द्विजः कुरुते तस्य तत्परलोके निष्फलम्भवतीति मन्वादिभि
र्विचारितम् ॥ २८ ॥

विश्वैश्च देवैः साध्यैश्च ब्राह्मणैश्च महर्षिभिः।
आपत्सु मरणाद्भीतैर्विधेः प्रतिनिधिः कृतः ॥ २९ ॥

विश्वैरिति। विश्वदेवाख्यैर्देवैः साध्यैश्च तथा महर्षिभिर्ब्राह्म
णैर्मरणाद्भीतैरापत्सु मुख्यस्य विधेः सोमादेर्वैश्वानर्य्यादिः प्रति
प्रतिनिधिरनुष्ठितोऽसौ मुख्यासम्भवे कार्य्यः नतु मुख्यसम्भवे
॥ २९ ॥

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्प रायिकं तस्य दुर्म्मतेर्विद्यते फलम्॥ ३०॥

प्रभुरिति। यो मुख्यानुष्ठानसमर्थः सन् आपद्विहितेन प्रति निधिना अनुष्ठानं करोति तस्य दुर्बुद्धेः पारलौकिकं अभ्युदय रूपं प्रत्यवायपरिहारफलञ्च न भवति आपत्कल्पेन यो धर्म्म मित्यनेनोक्तमप्येतत् शास्त्रादरार्थं पुनरुच्यते॥ ३०॥

न ब्राह्मणो वेदयेत किञ्चिद्राजनि धर्म्मवित्। स्ववीर्य्येणैव तान् शिष्यान्मानवानपकारिणः॥ ३१॥

नेति। धर्म्मज्ञो ब्राह्मणः किञ्चिदप्यपकृतं न राज्ञः कथयेत् अपितु स्वशक्त्यैव वक्ष्यमाणाभिचारादिनाऽपकारिणो मनुष्यान् निगृह्णीयात्। ततश्च स्वकीयधर्म्मविरोधादिप्रकृष्टापराध करणे सत्यभिचारादि न दोषायेत्येवम्परमेतत् नत्वभि चारो विधीयते राजनिवेदनं वा निषिध्यते॥ ३१॥

स्ववीर्य्याद्राजवीर्य्याच्च स्ववीर्य्यम्बलवत्तरं। तस्मात् स्वेनैव वीर्य्येण निगृह्णीयादरीन् द्विजः॥ ३२॥

स्ववीर्य्यादिति। यस्मात् स्वसामर्थ्याद्राजसामर्थ्याच्च परा धीनराजसामर्थ्यापेक्षया स्वसामर्थ्यमेव स्वाधीनत्वाद्बलीयः तस्मात् स्वेन वीर्य्येणैव शत्रून् ब्राह्मणो निगृह्णीयात्॥ ३२॥

२ च

श्रुतीरथर्वाङ्गिरसीः कुर्यादित्यविचारयन्। वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः॥ ३३॥

तत्किं स्ववीर्य्यमित्याह श्रुतीरिति। अथर्ववेदे अङ्गिरसी दृष्टाभिचारश्रुतीरविचारयन् कुर्य्यात् तदर्थमभिचारमनुतिष्ठेत् इत्यर्थः यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रकार्य्यकरणात् शस्त्रं तेन ब्राह्मणः शत्रून् हन्यात् न तु शत्रुनियमाय राजा वाच्यः॥ ३३॥

क्षत्रियो बाहुवीर्य्येण तरेदापदमात्मनः। धनेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः॥ ३४॥

क्षत्रिय इति। क्षत्रियः स्वपौरुषेण शत्रुतः परिभवलक्षणामात्मन आपदं निस्तरेत्। वैश्यशूद्रौ पुनः प्रतिकर्त्तृधनदानेन ब्राह्मणस्त्वभिचारात्मकैर्जपहोमैः॥ ३४॥

विधाता शासिता वक्ता मैत्रीब्राह्मणउच्यते। तस्मै नाकुशलं ब्रूयान्न शुष्काङ्गिरमीरयेत्॥ ३५॥

विधातेति। विहितकर्मणामनुष्ठाता पुत्रशिष्यादीनां शास्ता

प्रायश्चित्तादिधर्म्माणां वक्ता सर्व्वभूतमैत्रीप्रधानो ब्राह्मण उच्यते तस्मै निगृह्यतामयमित्येवं अनिष्टं न ब्रूयात् नापि साक्रोशां वाचं वाग्दण्डधिग्दण्डरूपां तस्योच्चारयेत् ॥ ३५ ॥

न वै कन्या न युवतीर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा॥३६॥

नवै इति। कन्या अनूढा ऊढापि तरुणी तथा अल्पाध्यायि मूर्खव्याध्यादिपीडितानुपनीताः श्रौतान् सायंप्रातर्होमान्न कुर्य्युः। हावयेदिति प्रसक्तावयं कन्यादीनां प्रतिषेधः॥ ३६ ॥

नरके हि पतन्त्येते जुह्वतः स च यस्य तत्। तस्मा द्वैतानकुशलो होता स्याद्वेदपारगः॥ ३७ ॥

नरकइति। एते कन्यादयो होमं कुर्व्वाणा नरकङ्गच्छन्ति यस्य तदग्निहोत्रं प्रतिनिधिरूपेण कुर्व्वन्ति सोपि नरकङ्गच्छति तस्मात् श्रौतकर्म्म प्रवीणः समस्तवेदाध्यायी होता कार्य्यः॥३७॥

प्राजापत्यमदत्वाश्वमग्न्याधेयस्य दक्षिणां। अना हिताग्निर्भवति ब्राह्मणो विभवे सति॥ ३८॥

प्राजापत्यमिति। आधाने प्राजापत्यमश्वं प्रजापतिदेवताक

मस्वं धनसम्पत्तौ सत्यां ब्राह्मणो दक्षिणामदत्वा कृतेप्याधाने अनाहिताग्निर्भवति आधानफलन्न लभते तस्मादाधाने अस्य दक्षिणां दद्यात् ॥ ३८ ॥

पुण्यान्यन्यानि कुर्व्वीत श्रद्दधानो जितेन्द्रियः।
नत्वल्पदक्षिणैर्यज्ञैर्यजेतेह कथञ्चन ॥ ३९ ॥

पुण्यानीति। श्रद्धावान् वशीकृतेन्द्रियः यज्ञव्यतिरिक्तानि तीर्थयात्रादीनि कर्म्माणि पुण्यानि कुर्व्वीत नतु शास्त्रोक्तदक्षिणातोऽल्पदक्षिणैर्यजेत परोपकारार्थत्वाद्दक्षिणायाः स्वल्पेनार्त्विगादितोषसिद्धाविदं वचनं ॥ ३९ ॥

इन्द्रियाणि यशः स्वर्गमायुः कीर्त्तिं प्रजाः पशून्।
हन्त्यल्पदक्षिणो यज्ञस्तस्मान्नाल्पधनो यजेत् ॥ ४० ॥

इन्द्रियाणीति। चक्षुरादीनि इन्द्रियाणि जीवतः ख्यातिरूपं यशः स्वर्गायुषी मृतस्य ख्यातिरूपां कीर्त्तिमपत्यानि पशूंश्चाल्पदक्षिणो यज्ञः नाशयति तस्मादल्पदक्षिणादानेन यागं न कुर्य्यात् ॥ ४० ॥

अग्निहोत्र्यपविध्याग्नीन् ब्राह्मणः कामकारतः।
चान्द्रायणञ्चरेन्मासं वीरहत्यासमं हि तत् ॥ ४१ ॥

अग्निहोत्रीति। अग्निहोत्री ब्राह्मणः इच्छातोग्निषु सायं

प्रातर्होमानकृत्वा मासञ्चान्द्रायणञ्चरेत् यस्माद्वीरः पुत्रः तस्य हत्या हननन्तत्तुल्यमेतत्। तथाच श्रुतिः वीरहा वा एष देवानां भवति योऽग्निमुद्वासयते। अन्ये तु मासमपविध्येति समर्थयन्ति ॥ ४१ ॥

ये शूद्रादधिगम्यार्थमग्निहोत्रमुपासते। ऋत्विजस्तेहि शूद्राणां ब्रह्मवादिषु गर्हिताः ॥ ४२ ॥

ये शूद्रादिति। ये शूद्रादधिगम्यार्थम्प्राप्य सामान्याभिधानेन याचनेन वा अर्थं स्वीकृत्य वृषलाग्न्युपसेविनामिति वक्ष्यमाणलिङ्गादाधानपूर्व्वकमग्निहोत्रमनुतिष्ठन्ति ते शूद्राणामेव याजकाः नतु तेषान्तत् फलम्भवति अतस्ते वेदवादिषु निन्दिताः ॥ ४२ ॥

तेषां सततमज्ञानां वृषलाग्न्युपसेविनाम्। पदा मस्तकमाक्रम्य दाता दुर्गाणि सन्तरेत्॥ ४३ ॥

तेषामिति। तेषां शूद्रधनाहिताग्निपरिचारिणां मूर्खाणां मूर्द्ध्नि पादन्दत्वा दाता शूद्रः तेन दानेन सततम्परलोके दुःखेभ्यो निस्तरति नतु यजमानानाम्फलम्भवति ॥ ४३ ॥

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्।
प्रसजंश्चेन्द्रियार्थेषु प्रायश्चित्तीयते नरः ॥ ४४ ॥

अकुर्व्वन्निति। नित्यं यद्विहितं सन्ध्योपासनादि नैमित्तिकञ्च शवस्पर्शादौ स्नानादि तदकुर्व्वन् तथा प्रतिषिद्धं हिंसाद्यनुतिष्ठन् अविहितनिषिद्धेषु अत्यन्तासक्तिं कुर्व्वन् नरो मनुष्यजातिमात्रं प्रायश्चित्तमर्हति। नन्विन्द्रियार्थेषु सर्व्वेषु न प्रसज्येत कामतइति निषेधात्। निन्दितपदेनैव प्रसक्तश्चेन्द्रियार्थेष्वित्यपि संगृहीतं अतः पृथक् न वक्तव्यं उच्यते अस्य स्नातकव्रतेषु पाठात्तत्र व्रतानीमानि धारयेदित्युपक्रमान्नायं प्रतिषेधः किन्तु व्रतविधिः तर्ह्यकुर्वन्विहितं कर्म्मेत्यनेनैव प्राप्तत्वात् पृथक् न वक्तव्यमिति चेन्न स्नातकेतरविषयत्वेनास्य सविषयत्वात् ॥ ४४ ॥

अकामतः कृते पापे प्रायश्चित्तं विदुर्बुधाः। कामकारकृतेप्याहुरेके श्रुतिनिदर्शनात् ॥ ४५ ॥

अकामतइति। अबुद्धिकृते पापे प्रायश्चित्तम्भवतीत्याहुः पण्डिताः एके पुनराचार्य्याः कामतः कृते पापे प्रायश्चित्तम्भवतीत्याहुः एतच्च पृथक् कृत्वाभिधानम्प्रायश्चित्तगौरवार्थं श्रुतिनिदर्शनादिति। इन्द्रो यतीन् शालावृकेभ्यः प्रायच्छत् तमश्लीला वागित्यवदत् स प्रजापतिमुपाधावत्तस्मात्तमुपहव्यं

प्रायच्छदिति। अस्यार्थः। इन्द्रो यतीन् बुद्धिपूर्व्वं स्वभ्यो:खादितुं दत्तवान् स प्रायश्चित्तार्थं प्रजापतिसमीपमगमत् तस्मै प्रजा पतिरुपहव्याख्यं कर्म्म प्रायश्चित्तं दत्तवान् अतः कामकार कृतेप्यस्ति प्रायश्चित्तम् ॥ ४५ ॥

अकामतः कृतम्पापं वेदाभ्यासेन शुद्ध्यति।
कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः ॥ ४६॥

अकामतइति। अनिच्छातः कृतम्पापं वेदाभ्यासेन शुद्ध्यति नश्यति वेदाभ्यासेनेति कामकृतविषयप्रायश्चित्तापेक्षया लघु प्रायश्चित्तोपलक्षणार्थं प्रायश्चित्तान्तराणामपि विधानात् रागद्वेषादिव्यामूढतया पुनरिच्छातः कृतं नानाप्रकारैः प्राय श्चित्तैर्विद्याधनतपोभिः शुद्ध्यतीति गुरुप्रायश्चित्तपरं अतः पूर्व्वोक्तस्यैवायं व्याकारः। यद्यपि अधिकारिनिरूपणं प्रकृतं प्रायश्चित्तं त्वनन्तरं वक्ष्यति तथाप्यज्ञानात् लघुप्रायश्चित्ताधि कारी ज्ञानात् गुरुणि प्रायश्चित्ते अधिक्रियतइति अधिकारि निरूपणमेवेदम् ॥ ४६ ॥

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्व्वकृतेन वा। न
संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥ ४७ ॥

प्रायश्चित्तीयतामिति। दैवात् प्रमादादेतच्छरीरकृतेन

पूर्व्वजन्मार्जितदुष्कृतेन वा क्षयरोगादिभिः सूचितेन प्राय स्चित्तीयतां प्राप्य अकृते प्रायश्चित्ते साधुभिः सह याजनादिना संसर्गं न गच्छेत् ॥ ४७ ॥

इह दुश्चरितैः केचित्केचित्पूर्व्वकृतैस्तथा। प्राप्नुवन्ति दुरात्मानो नरा रूपविपर्य्ययम् ॥ ४८ ॥

इहेति। इह जन्मनि निषिद्धाचरणैः केचित् पूर्व्वजन्मकृतैः दुष्टस्वभावा मनुष्याः कौनख्यादिकं रूपविपर्य्ययं प्राप्नुवन्ति ॥ ४८ ॥

सुवर्णचौरः कौनख्यं सुरापः श्यावदन्तताम्।
ब्रह्महा क्षयरोगित्वन्दौश्चर्म्यं गुरुतल्पगः ॥ ४९ ॥
पिशुनः पौतिनासिक्यं सूचकः पूतिवक्त्रताम्।
धान्यचौरोऽङ्गहीनत्वमातिरैक्यन्तु मिश्रकः ॥ ५० ॥
अन्नहर्त्तामयावित्वं मौक्यं वागपहारकः।
वस्त्रापहारकः श्वैत्र्यं पङ्गुतामश्वहारकः ॥ ५१ ॥
एवं कर्म्मविशेषेण जायन्ते सद्विगर्हिताः। जड
मूकान्धवधिरा विकृताकृतयस्तथा ॥ ५२ ॥

सुवर्णेति। पिशुन इति। अन्नहर्त्तेति। एवंकर्मेति।

ब्राह्मणसुवर्णचौरः कुत्सितनखत्वम्प्राप्नोति निषिद्धसुरापः श्यावदन्ततां ब्रह्महा क्षयरोगित्वं गुरुभार्य्यागामी विकोषके हनत्वं पिशुनो विद्यमानदोषाभिधायी दुर्गन्धनासत्वं अविद्यमानदोषाभिधायको दुर्गन्धमुखत्वन्धान्यचौरोऽङ्गहीनत्वं धान्यादेरपद्रव्येण मिश्रणकर्त्ता अतिरिक्ताङ्गत्वं अन्नचौरो मन्दानलत्वं अननुज्ञाताध्यायी मूकत्वं वस्त्रचौरः श्वेतकुष्ठत्वम् अश्वचौरः खञ्जत्वं प्राप्नोति एवं बुद्धिवाक्चक्षुश्रोत्रविकला विकृतरूपाः साधुविगर्हितास्स प्राग्जन्मार्ज्जितोपभुक्तदुष्कृतशेषेणोत्पद्यन्ते॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥

चरितव्यमतोनित्यं प्रायश्चित्तं विशुद्धये ।
निन्द्यैर्हि लक्षणैर्युक्ता जायन्तेऽनिष्कृतैनसः॥ ५३ ॥

चरितव्यमिति। यस्मादनिष्कृतमनाश्रितमेनो यैस्ते अनिष्कृतैनसः अकृतप्रायश्चित्ताः परलोकोपभुक्तदुष्कृतशेषेण निन्द्यैर्लक्षणैः कुनखित्वादिभिर्युक्ता जायन्ते तस्माद्विशुद्धये पापनिर्हरणार्थम्प्रायश्चित्तं सदा कर्त्तव्यं। एवञ्च भिन्ने जुहोतीतिवत् न नैमित्तिकमात्रं प्रायश्चित्तं किन्त्वनिष्कृतैनस इत्युपादानात् तथा विशुद्धये चरितव्यमित्युपदेशात् पापक्षयार्थिन एवाधिकारः तथाहि प्रायश्चित्तं चरितव्यमिति विधावधिकारापेक्षायां फलमात्रनिर्देशात् रात्रिसत्रन्यायेन श्रूयमाणमेव विशुद्धये

इति फलमधिकारिविशेषणं युक्तं इममेवार्थं स्फुटयति याज्ञवल्क्यः। विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति। तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये। पतनमृच्छति पापमाप्नोतीत्यर्थः विशुद्धये पापविनाशाय। बहून्वर्षगणान् घोरान् नरकान् प्राप्य तत्क्षयात्। संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमानित्यादिना महापातक्यादीनान्नरकादिप्राप्तिं वच्यति न तन्नैमित्तिकमाचले प्रायश्चित्तानां सङ्गच्छते। तस्माद्ब्रह्मबधादिजनितपापक्षयार्थिन एव प्रायश्चित्तविधावधिकार इति ज्ञेयम्॥ ५३॥

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥ ५४॥

ब्रह्महत्येति। ब्राह्मणप्राणवियोगरूपफलको व्यापारो ब्रह्महत्या स च साचादन्यंदा नियुज्य तथा गोहिरण्यग्रहणादि निमित्तकार्य्यकस्यापि तदुद्देशेन ब्राह्मणमरणे ब्रह्महत्या। नन्वेवमिषुकारस्यापीषूत्पादनद्वारेण तथा बध्यस्यापि हन्तृगतमन्युत्पादनद्वारा ब्रह्महत्या स्यात्। उच्यते शास्त्रतो यस्य ब्राह्मणहन्तृत्वमतीयते स एव ब्रह्महन्ता अतएव शातातपः। गोभूहिरण्यग्रहणे स्त्रीसम्बन्धे कृतेऽपि वा। यमुद्दिश्य त्यजेत् प्राणांस्तमाहुर्ब्रह्मघातकं। एवञ्चान्यान्यपि शास्त्रीयाण्येव ब्रह्मबध

निमित्तानि ज्ञेयानि। तथा रागात् द्वेषात्प्रमादाद्वा स्वतः परतएव वा। ब्राह्मणं घातयेद्यस्तु तमाहुर्ब्रह्मघातकं इति प्रयोजकस्यापि हन्तृत्वं शास्त्रीयं। तथा निषिद्धसुरायाः पानं ब्राह्मणसुवर्णहरणं गुरुभार्यागमनं गुरुरत्र पिता निषेकादीनि कर्म्माणीत्यादिना तस्य गुरुत्वेन विधानात् एतैश्च सह संसर्गः संवत्सरेण पततीति वच्यमाणप्रकारेण। इत्येतानि महापातकान्याहुः। महापातकसंज्ञा चेयं वच्यमाणोपपातकादिसंज्ञा च लाघवार्थम्॥ ५४॥

अनृतञ्च समुत्कर्षे राजगामि च पैशुनम्।
गुरोश्चालीकनिर्वन्धः समानि ब्रह्महत्यया॥ ५५॥

अनृतमिति। जात्युत्कर्षनिमित्तमुत्कर्षभाषणं यथा ब्राह्मणोऽहमिति अब्राह्मणो ब्रवीति राजनि वा स्तेनादीनामपरेषां मरणफलकंदोषाभिधानं गुरोश्चानृताभिशंसनं तथा च गौतमः। गुरोरनृताभिशंसनमिति महापातकसमानीति। एतानि ब्रह्महत्यासमानीति॥ ५५॥

ब्रह्मोज्झता वेदनिन्दा कौटसाच्यं सुहृद्वधः।
गर्हितानाद्ययोर्जग्धिः सुरापानसमानि षट्॥ ५६॥

ब्रह्मोज्झतेति। ब्रह्मणोऽधीतवेदस्यानभ्यासेन विस्मरणं असच्छास्त्राश्रयणेन वेदकुत्सनं साच्ये मृषाभिधानं मित्रस्याब्रा

ह्मणस्य वधः निषिद्धस्य लशुनादेर्भक्षणं अमाद्यस्य पुरीषादे रदनं। मेधातिथिस्तु न भोज्यं मयैतदिति सङ्कल्प्य यद्भुज्यते तदनाद्यमित्याचष्टे। एतानि सुरापानसमानि ॥ ॥ ५६ ॥

निक्षेपस्यापहरणं नराश्वरजतस्य च। भूमिवज्र मणीनाञ्च रुक्मस्तेयसमं स्मृतम् ॥ ५७ ॥

निक्षेपस्येति। ब्राह्मणसुवर्णव्यतिरिक्तनिःक्षेपस्य हरणं तथा मनुष्यतुरगरूप्यभूमिहीरकमणीनां हरणं सुवर्णस्तेयतुल्यम् ॥ ५७ ॥

रेतःसेकः स्वयोनीषु कुमारीष्वन्त्यजासु च। सख्युः पुत्रस्य च स्त्रीषु गुरुतल्पसमं विदुः ॥ ५८ ॥

रेतःसेकइति। सोदर्यभगिनीकुमारीचाण्डालीसखिपुत्र भार्यासु यो रेतःसेकस्तं गुरुभार्यागमनसमानमाहुः। एतेषा ञ्चैतेन समीकरणं यद्येन समीकृतं तस्य तदीयप्रायश्चित्तार्थं यत्तु कौटसाक्ष्यसुहृद्वधयोः सुरापानसमीकृतयोर्ब्रह्महत्या प्रायश्चित्तं वक्ष्यति तद्विकल्पार्थं। यत्पुनर्गुरोरलीकनिर्ब न्धस्य ब्रह्महत्यासमीकृतस्य पुनरुपरिष्टादब्रह्महत्याप्राय श्चित्तनिर्देशः समीकृतानां न्यूनप्रायश्चित्तं भवतीति ज्ञाप नार्थं तथाच लोके राजसमः सचिवइत्युक्तेः सचिवस्य न्यूनतैव गम्यते अतोपदेशिकप्रायश्चित्तेभ्य आतिदेशिकप्रायश्चित्तानां न्यूनप्रायश्चित्तं समीकृतानाञ्च ॥ ५८ ॥

गोबधोऽयाज्यसंयाज्यपारदार्यात्मविक्रयाः ।
गुरुमातृपितृत्यागः स्वाध्यायाग्न्योः सुतस्य च ॥५९॥
परिवित्तिताऽनुजेनोढे परिवेदनमेव च । तयो
र्दानञ्च कन्यायास्तयोरेव च याजनम् ॥ ६० ॥
कन्यायादूषणञ्चैव वार्द्धुष्यं व्रतलोपनम् । तडा
गारामदाराणामपत्यस्य च विक्रयः ॥ ६१ ॥
व्रात्यता बान्धवत्यागो भृत्याध्यापनमेव च ।
भृताच्चाध्ययनादानमपण्यानाञ्च विक्रयः ॥ ६२ ॥
सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम् । हिंसौ
षधीनां स्त्र्याजीवोऽभिचारो मूलकर्म्म च ॥ ६३ ॥
इन्धनार्थमशुष्काणान्द्रुमाणामवपातनम् ।
आत्मार्थञ्च क्रियारम्भो निन्दितान्नादनन्तथा ॥६४॥
अनाहिताग्नितास्तेयमृणानामनपक्रिया । अस
च्छास्त्राधिगमनं कौशीलव्यस्य च क्रिया ॥ ६५ ॥
धान्यकुप्यपशुस्तेयं मद्यपस्त्रीनिषेवणम् । स्त्रीशूद्र
विट्क्षत्रवधो नास्तिक्यञ्चोपपातकम् ॥ ६६ ॥

इदानी मुपपातकान्याह गोबधेत्यादि । परिवित्तितेति । कन्या
यादिति । व्रात्यतेति । सर्वेति । इन्धनार्थमिति । अनाहितेति ।

धान्येति। गोहननं जातिकर्म्मदुष्टानां याजनम्परपत्नीगमनं आत्म विक्रयः मातृपितृगुरूणाञ्च शुश्रूषाद्यकरणं सर्व्वदा ब्रह्मयज्ञ त्यागः न वेदविस्मरणं ब्रह्मोज्झतेत्यनेनोक्तत्वात्। अग्नेश्च स्मा र्त्तस्य त्यागः श्रौतानामग्निहोत्यपविध्याग्नीनित्युक्तत्वात् सुतस्य च संस्कारभरणाद्यकरणं कनीयसा आदौ विवाहे कृते ज्येष्ठस्य परिवित्तित्वम्भवति दाराग्निहोत्रसंयोगइत्यादिना प्रागुक्तं कनिष्ठस्य परिवेत्तृत्वन्तयोश्च कन्यायादानन्तयोरेव विवाहहो मादियागेष्वार्त्विज्यं कन्याया मैथुनवर्जमंगुलीप्रक्षेपादिना दूषणं रेतःसेकपर्यन्तमैथुनेषु तु रेतःसेकः स्वयोनीषु कुमारीष्व न्त्यजासु च इत्युक्तत्वात् प्रतिषिद्धं। वृद्धिजीवनं ब्रह्मचारिणो मैथुनन्तडागोद्यानभार्य्यापत्यानां विक्रयः यथाकालमनुपनयनं व्रात्यता। तथाचोक्तं अतऊर्द्धं त्रयोप्येते यथाकालमसंस्कृता इति। बान्धवानां पितृव्यादीनां अननुवृत्तिः प्रतिनियतवेतन ग्रहणपूर्व्वकमध्यापनं प्रतिनियतवेतनप्रदानपूर्व्वकमध्ययनञ्च अविक्रय्यादीनां तिलादीनां विक्रयः सुवर्णाद्युत्पत्तिस्थानेषु राजा ज्ञया अधिकारः महतां जलप्रवाहप्रतिबन्धहेतूनां सेतुबन्धा दीनां प्रवर्त्तनं औषधीनां जातिमात्रादीनां हिंसनं एतच्च ज्ञान पूर्व्वकाभ्यासहिंसायां प्रायश्चित्तगौरवात् यत्तूत्कृष्टजानां औ षधीनामित्यादिना वक्ष्यति तत्सकृद्धिंसायां प्रायश्चित्तलाघवात् भार्य्यादिस्त्रीणां वेश्यात्वं कृत्वा तदुपजीवनं श्येनादियज्ञेनानपरा धस्यमारणं मन्त्रौषधादिना वशीकरणं पाकादिदृष्टप्रयोजनार्थं

मात्रमेव वृक्षच्छेदनं अनातुरस्य देवपित्राद्युद्देशमन्तरेण पाका द्यनुष्ठानन्निन्दितान्नस्य लशुनादेः सकृदनिच्छया भक्षणं इच्छा पूर्व्वकाभ्यासभक्षणे पुनर्गर्हितानाद्ययोर्जग्धिरित्युक्तत्वात् सत्य धिकारे अग्न्यनाधानं सुवर्णादन्यस्य सारद्रव्यस्यापहरणं ऋणानाञ्च त्रिभिर्ऋणैर्ऋणवान् जायते इति श्रुत्युक्तानामनपकरणं श्रुतिस्मृतिविरुद्धशास्त्रशिक्षणं नृत्यगीतवादित्रोपसेवनं धान्यस्य ताम्रलोहादेः पशूनाञ्च चौर्य्यं द्विजातीनां पीतमद्यायाः स्त्रियागमनं स्त्रीशूद्रवैश्यक्षत्रियहननं अदृष्टार्थकर्म्माभाववुद्धिः एतत्प्रत्येकमुपपातकं। वान्धवत्याग इत्यनेनैव मात्रादीनान्त्याग प्राप्तौ पृथग्वचनं निन्दार्थं पितृव्यादिवान्धवत्यागेनावश्यमेव प्रायश्चित्तम्भवति किन्तुमात्रादित्यागप्रायश्चित्तात् न्यूनमेव भवति ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥

ब्राह्मणस्य रुजः कृत्वा घ्रातिरघ्रेयमद्ययोः ।
जैह्म्यञ्च मैथुनम्पुंसि जातिभ्रंशकरं स्मृतम् ॥ ६७ ॥

ब्राह्मणस्येति। ब्राह्मणस्य दण्डहस्तादिना पीडाक्रिया यदतिशयदुर्गन्धतयाऽघ्रेयं लशुनपुरीषादि तस्य मद्यस्यघ्राणं कुटिलत्वं वक्रता पुंसि च गुदादौ मैथुनं इत्येतत्प्रत्येकं जाति भ्रंशकरं स्मृतम् ॥ ६७ ॥

खराश्वोष्ट्रमृगेभानामजाविकवधस्तथा। सङ्करीकरणं ज्ञेयं मीनाहिमहिषस्य च ॥ ६८ ॥

खरेति। गर्दभतुरगोष्ट्रमृगहस्तिछागमेषमत्स्यसर्पमहिषाणां प्रत्येकम्वधः सङ्करीकरणं ज्ञेयम् ॥ ६८ ॥

निन्दितेभ्यो धनादानं वाणिज्यं शूद्रसेवनम्। अपात्रीकरणं ज्ञेयमसत्यस्य च भाषणम् ॥ ६९ ॥

निन्दितेभ्य इति। अप्रतिग्राह्यधनेभ्यः प्रतिग्रहो वाणिज्यं शूद्रस्य परिचर्य्या अनृताभिधानं इत्येतत्प्रत्येकमपात्रीकरणं ज्ञेयम् ॥ ६९ ॥

कृमिकीटवयोहत्यामद्यानुगतभोजनम्। फलैधःकुसुमस्तेयमधैर्यञ्च मलावहम् ॥ ७० ॥

कृमीति। कृमयः क्षुद्रजन्तवः तेभ्यईषत् स्थूलाः कीटाः तेषाम्वधः पक्षिणाञ्च मद्यानुगतं यद्भोज्यमपि शाकाद्येकच पेटकादौ कृत्वा मद्येन सहानीतन्तस्य भोजनम्। मेधातिथिस्तु मद्यानुगतं मद्यसंस्पृष्टमाह। तन्न तत्र प्रायश्चित्तगौरवात्। फलकाष्ठपुष्पाणाञ्च चौर्य्यं अल्पेऽपचयेपि अत्यन्तवैकल्यं एतत्सर्वं प्रत्येकं मलिनीकरणम् ॥ ७० ॥

एतान्येनांसि सर्वाणि यथोक्तानि पृथक् पृथक्।
यैर्यैर्व्रतैरपोह्यन्ते तानि सम्यङ्‌निबोधत ॥ ७१ ॥

एतानीति। एतानि ब्रह्महत्यादीनि सर्व्वाणि पापानि भेदेन यथोक्तानि यैर्यैर्व्रतैः प्रायश्चित्तरूपैर्नाश्यन्ते तानि यथावत् शृणुत ॥ ७१ ॥

ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत्।
भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम् ॥७२॥

ब्रह्महेति। यो ब्राह्मणं हतवान्स वने कुटीं कृत्वा हतस्य शिरः कपालन्तदभावे अन्यस्यापि चिह्नं कृत्वा अरण्ये भैक्षमु गात्मनः पापनिर्हरणाय द्वादश वर्षाणि वसेत् व्रतं कुर्य्यात् अत्रापि कृतवापनो निवसेदिति वक्ष्यति मुन्यन्तरोक्ता अपि विशेषाग्राह्याः। तथाच यमः। सप्तागाराण्यपूर्व्वाणि यान्यसङ्कल्पितानि च। संविशेत्तानि शनकैर्व्विधूमे भुक्तवज्जने। भ्रूणघ्नोऽहमिति भिक्षामेनो विख्याप्य सञ्चरेत्। एककालञ्चरेद्भैक्ष्यं तदलब्धोदकम्पिवेत्। अयञ्च द्वादशवार्षिकविधिः ब्राह्मणस्याज्ञानकृतब्राह्मणवधे। इयं विशुद्धिरुदिता प्रमाप्याकामतोद्विजमिति वक्ष्यमाणत्वात् क्षत्रियवैश्यशूद्राणान्तु क्रमेणैतद्द्वादशवार्षिकं द्विगुणन्त्रिगुणञ्चतुर्गुणञ्च द्रष्टव्यम्। यथोक्तम्भविष्यपुराणे। द्विगुणा क्षत्रियाणान्तु वैश्यानां त्रिगुणा स्मृताः। चतुर्गुणातु

शूद्राणाम्पर्षदुक्ता महात्मना। पर्षदश्चव्रतञ्चोक्तं शुद्धये पाप कर्म्मणाम्। यावद्भिर्ब्राह्मणैर्ब्राह्मणानां सभा ततोद्विगुणैः क्षत्रियैः क्षत्रियाणां दुष्टव्यवहारदर्शनाद्यर्था सभा भवेत् त्रिगुणैर्वैश्यैर्वैश्या नाञ्चतुर्भिः शूद्रैः शूद्राणामिति सभावच्च क्षत्रियादीनां त्रयाणां व्रतमपि द्विगुणत्रिगुणचतुर्गुणमित्यर्थः एतानि च मनूक्तब्रह्म वधप्रायश्चित्तवचनानि गुणवत्कृतनिर्गुणब्राह्मणहननविषयत्वेन भविष्यपुराणव्याख्यातानि। हन्ता चेत् गुणवान्वीर अकामान्नि र्गुणो हतः। कर्त्तव्यानि मनूक्तानि नरैर्वै आश्वमेधिकम्। ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत्। गच्छेदवभृथं वापि अकामान्निर्गुणे हते। जातिशक्तिगुणापेक्षं सकृद्बुद्धिकृत न्तथा। अनुबन्धादि विज्ञाय प्रायश्चित्तं प्रकल्पयेत् इति विश्वा मित्रवचनात् प्रायश्चित्ताधिक्यमूहनीयम्। कामकृते तु ब्राह्मण वधे द्विगुणं ब्रह्मवधप्रायश्चित्तं चतुर्विंशतिवर्षन्तदाहा ङ्गिराः। अकामतः कृते पापे प्रायश्चित्तं न कामतः। स्यात्त्वका मकृते यत्तु द्विगुणं बुद्धिपूर्व्वके ॥ ७२ ॥

लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥७३॥

लक्ष्यमिति। धनुःशराद्यायुधधारिणां युद्धमानानां ब्रह्मवधपापक्षयार्थं मयं लक्षीभूतइत्येवञ्जानतां स्वेच्छया

वाणलक्ष्यीभूतोवावतिष्ठेत्। यावन्मृतोमृतकल्पोवा विशुद्धेत्त दाह याज्ञवल्क्यः। संग्रामे वा हतो लक्ष्यीभूतः शुद्धिमवाप्नु यात्। मृतकल्पः प्रहारार्त्तो जीवन्नपि विशुद्ध्यति। अग्नौ प्रदीप्ते वाऽधो मुखस्त्रीन् वारान् शरीरं प्रक्षिपेत्। तथा प्रास्येत यथा म्रियेतेत्यापस्तम्बवचनात्। एवं प्रक्षिपेत् एतत्प्रायश्चित्तद्वयमन न्तरं वक्ष्यमाणं च यजेत वाश्वमेधेनेत्येवम्प्रायश्चित्तत्रयमिदं कामतः क्षत्रियस्य ब्राह्मणवधविषयम्मनुश्लोकमेव लिखित्वा तथाव्याख्यातम्भविष्य पुराणे। लक्ष्यं शस्त्रभृतां वा स्यात् विदुषा मिच्छयात्मनः। प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक् शिराः। यजेत वाश्वमेधेन क्षत्रियो विप्रघातकः। प्रायश्चित्तत्रयं ह्येतत्क्षत्रियस्य प्रकीर्त्तितम्। क्षत्रियो निर्गुणो वीर ब्राह्मणं वेद पारगम्। निहत्यकामतोवीर लक्ष्यः शस्त्रभृतो भवेत्। चतुर्वेद विदन्वीरं ब्राह्मणञ्चाग्निहोत्रिणम्। निहत्य कामादात्मानं क्षिपेदग्नाववाक्शिराः। निर्गुणं ब्राह्मणं हत्वा कामतो गुणवान्न गुह। यजेत वाश्वमेधेन क्षत्रियो यो महीपतिः॥ ७३॥

यजेत वाश्वमेधेन स्वर्जिता गोसवेन वा। अभि जिद्विश्वजिद्भ्यां वा त्रिवृताग्निष्टुतापि वा॥ ७४॥

यजेतेति। यजेत वाश्वमेधेनेत्यनन्तरं व्याख्यातं स्वर्जिता याग विशेषेण गोसवेन वा अभिजिता वा विश्वजिता वा त्रिवृता अग्नि

हता वा यजेत एतानि चाज्ञानतो ब्रह्मवधे प्रायश्चित्तानि त्रैवर्णिकस्य विकल्पितानि। तदुक्तम्भविष्यपुराणे। खर्जितादेश्च यद्वीरकर्म्मणा हतनापते। अनुष्ठानं द्विजातीनां वधे ह्यमति पूर्व्वके॥ ७४ ॥

जपन् वान्यतमं वेदं योजनानां शतं व्रजेत्।
ब्रह्महत्यापनोदाय मितभुङ्नियतेन्द्रियः॥ ७५ ॥

जपन्निति। वेदानां मध्यादेकं वेदं जपन् स्वल्पाहारः संयतेन्द्रियो ब्रह्महत्यापापनिर्हरणाय योजनानां शतङ्गच्छेत् एतदप्यज्ञानकृते जातिमात्रब्राह्मणवधे त्रैवर्णिकस्य प्रायश्चित्तं तथाच भविष्यपुराणे अयमेव श्लोकः पठितो व्याख्यातश्च। जातिमात्रं यदा विप्रं हन्यादमतिपूर्व्वकम्। वेदविद्याग्निहोत्री च तदा तस्य भवेदिदम्॥ ७५ ॥

सर्व्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्। धनं वा जीवनायालं गृहं वा सपरिच्छदम्॥ ७६ ॥

सर्व्वस्वमिति। सर्व्वस्वं वा वेदविदे ब्राह्मणाय दद्यात् यावद्धनञ्जीवनाय समर्थं गृहं वा गृहोपयोगिधनधान्यादियुतं अतः सर्व्वस्वं वा गृहं वा सपरिच्छदन्दद्यात् जीवनायालमिति वचनात् जीवनपर्य्याप्तं सर्व्वस्वं गृहं वा दद्यात् न ततोऽल्पं एतच्चा

ज्ञानतो जातिमात्रब्राह्मणवधे ब्राह्मणस्य प्रायश्चित्तम्। तथाच भविष्यपुराणम्। जातिमात्रं यदा हन्यात् ब्राह्मणं ब्राह्मणो गुह। वेदाभ्यासविहीनो वै धनवानग्निवर्ज्जितः। प्रायश्चित्तन्तदा कुर्य्यादिदम्पापविशुद्धये। धनं वा जीवनायालं गृहं वा सपरिच्छदम्॥ ७६॥

हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम्।
जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहितां॥ ७७॥

हविष्येति। नीवारादिहविष्यान्नभोजी विख्यातप्लक्षस्रवणादारभ्यापश्चिमोदधेःस्रोतः प्रति सरस्वतीं यायात्। एतच्च जातिमात्रब्राह्मणवधे ज्ञानपूर्व्वकं ब्राह्मणस्य। तथा च भविष्यपुराणे। जातिमात्रे हते विप्रे देवेन्द्र मतिपूर्व्वकम्। हन्ता यदा वेदहीनो धनेन च भवेद्गुह। तदैतत् कल्पयेत्तस्य प्रायश्चित्तं निबोध मे। हविष्यभुक् चरेद्वापि प्रतिस्रोतः सरस्वतीम्। अथवा परिमिताहारस्त्रीन्वारान् वेदसंहिताम् जपेत् संहिताग्रहणात् पदक्रमव्युदासः। अत्रापि भविष्यपुराणीयो विशेषः। जातिमात्रन्तु यो हन्यात् विप्रन्त्वमतिपूर्व्वकम्। ब्राह्मणोत्यन्तगुणवान् तदेदम्परिकल्पयेत्। जपेद्वा नियताहारः त्रिव वेदस्य संहिताम्। ऋचो यजूंषि सामानि त्रैविद्याख्यं सुरोत्तम॥७७॥

कृतवापनो निवसेद्ग्रामान्ते गोव्रजे ऽपि वा।
आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः॥ ७८॥

कृतेति। इदानीं समाप्ते द्वादशे वर्षे इत्युपस्थानात् द्वादश वार्षिकस्य विशेषमाह। लूनकेशनखश्मश्रुर्गोब्राह्मणहिते रतः गोब्राह्मणोपकारान्कुर्व्वन् ग्रामसमीपे गोष्ठपुण्यदेशवृक्षमूलान्यतमे निवसेत् वने कुटीं कृत्वेत्यस्य विकल्पार्थमिदम्॥ ७८॥

ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान्परित्यजन्।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च॥ ७९॥

ब्राह्मणार्थइति। प्रक्रान्ते द्वादशवार्षिकेऽन्तराग्न्युदकहिंसकाद्याक्रान्तब्राह्मणस्य गोर्व्वा परित्राणार्थं प्राणान्परित्यजन् ब्रह्महत्यया मुच्यते। गां ब्राह्मणं वा ततः परित्रायामृतोऽपि असमाप्तद्वादशवर्षोऽपि मुच्यते॥ ७९॥

त्र्यवरम्प्रतियोद्धा वा सर्व्वस्वमवजित्य वा। विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते॥ ८०॥

त्र्यवरमिति। स्तेनादिभिर्ब्राह्मणसर्व्वस्वेऽपह्रियमाणे तदानयनार्थं निर्व्याजं यथाशक्ति प्रयत्नं कुर्व्वन् तत्र त्रिवारान् युद्धे प्रवर्त्तमानो नानीतेऽपि सर्व्वस्वे ब्रह्महत्यापापात् प्रमुच्यते। अथ वा

प्रथमवारएव विप्रसर्व्वस्वं अपहृतं जित्वा अर्पयति तथापि मुच्यते। यद्वा। धनापहारकष्टेनात्मनैव ब्राह्मणो युद्धेन मरणे प्रवर्त्तते तदा यद्यप्यपहृतसमधनदानेन तं जीवयति तदापि तन्निमित्ते तस्य प्राणलाभे ब्रह्महत्यापापान्मुच्यते। एतदितर प्रकारान्तरेण तु रक्षणे गोघ्ना गोब्राह्मणस्य चेत्यपुनरुक्तिः ॥ ८० ॥

एवं दृढव्रतो नित्यं ब्रह्मचारी समाहितः। समाप्ते द्वादशे वर्षे ब्रह्महत्यां व्यपोहति ॥ ८१ ॥

एवमिति। एवमुक्तप्रकारेण सर्व्वदा नियमोपहितः स्त्री संयोगादिशून्यः संयतमनाः समाप्ते द्वादशे वर्षे ब्रह्महत्यापापं नाशयति। एवं ब्राह्मणार्थेद्रत्यादिसर्व्वं प्रकान्तद्वादशवार्षिकस्य बोद्धव्यम् ॥ ८१ ॥

शिष्ट्वा वा भूमिदेवानां नरदेवसमागमे। स्वमेनोऽवभृथस्नातो हयमेधे विमुच्यते ॥ ८२ ॥

शिष्ट्वेति। अश्वमेधे ब्राह्मणानामृत्विजां क्षत्रियस्य यजमानस्य समागमे ब्रह्महत्यापापं शिष्ट्वा निवेद्य अवभृथस्नातो ब्रह्महत्यापापान्मुच्यते द्वादशवार्षिकस्योपसंहृतत्वात् स्वतन्त्रमेवेदं प्रायश्चित्तन्तथाच भविष्यपुराणे। यदा तु गुणवान्

विप्रो हन्यात् विप्रन्तु निर्गुणं। अकामतस्तदा गच्छेत्स्नानञ्चैवा श्वमेधिकं। गोविन्दराजस्तु अश्वमेधविवर्ज्जितसकलप्रायश्चित्त शेषता अस्य प्रक्रान्तद्वादशवार्षिकप्रायश्चित्तस्यान्तराऽवभृथ स्नाने तेनैव शुद्धिरित्याह। तदयुक्तभविष्यपुराणवचनविरो धात्॥ ८२ ॥

धर्मस्य ब्राह्मणो मूलमग्रं राजन्य उच्यते। तस्मा त्समागमे तेषामेनो विख्याप्य शुद्ध्यति॥ ८३॥

धर्मेति। यस्माद्ब्राह्मणो धर्मस्य कारणं ब्राह्मणेन धर्मोप देशे कृते धर्म्मानुष्ठानात् राजा तस्याग्रं प्रान्तं मन्वादिभिरुच्यते ताभ्यां ब्राह्मणक्षत्रियाभ्यां समूलाग्रधर्म्मतरुनिष्पत्तेः तस्मात्तेषां समागमे अश्वमेधे पापं निवेद्यावभृथस्नातः शुद्ध्यतीति अस्यैव शेषः॥ ८३ ॥

ब्राह्मणः सम्भवेनैव देवानामपि दैवतम्। प्रमा णञ्चैव लोकस्य ब्रह्मात्रैव हि कारणम्॥ ८४॥

ब्राह्मणइति। ब्राह्मण उत्पत्तिमात्रेणैव किम्पुनः श्रुतादिभि र्देवानामपि पूज्यः सुतरां मनुष्याणां लोकस्य च प्रत्यक्षवत् प्रमाणन्तदुपदेशस्य प्रामाण्यात् यस्मात्तत्र वेदएव कारणं वेद मूलकत्वादुपदेशस्य॥ ८४ ॥

तेषां वेदविदो ब्रूयुस्त्रयोप्येनःसु निष्कृतिम्। सा तेषाम्पावनाय स्यात्पवित्रं विदुषां हि वाक्॥ ८५॥

यतएवमतः तेषामिति। तेषां विदुषां ब्राह्मणानां मध्ये वेदज्ञास्त्रयोपि किमुताधिकाः यत्पापनिर्हरणाय प्रायश्चित्तं ब्रूयुः तत्पापिनां विशुद्धये भवति यस्माद्विदुषां वाक् पावयित्री ततश्च प्रकाशप्रायश्चित्तार्थं विदुषामपि परिषदवश्यं कार्या रहस्यप्रायश्चित्ते पुनरेतन्नास्ति रहस्यत्वविरोधात्॥८५॥

अतोन्यतममास्थाय विधिं विप्रः समाहितः। ब्रह्महत्याकृतम्पापं व्यपोहत्यात्मवत्तया॥ ८६॥

अतइति। अस्मात्प्रायश्चित्तगणादन्यतमं प्रायश्चित्तं ब्राह्मणादिः संयतमना आश्रित्य प्रशस्ततया ब्रह्महत्याकृतम्पापमपनुदति। एतच्च ब्रह्मवधादिप्रायश्चित्तविधानं सकृत्पापकरणविषयम्पापावृत्तौ त्वावर्त्तनीयं एनःसि गुरूणि गुरूणि लघुनि लघूनि इतिगौतमस्मरणात्। पूर्णे चानस्यनस्थ्नान्तु शूद्रहत्याव्रतञ्चरेत्। इति बङ्गमारणे प्रायश्चित्तबङ्गत्वस्य वक्ष्यमाणत्वात् विधेः प्राथमिकादस्माद्द्वितीये द्विगुणं स्मृतम्। तृतीये त्रिगुणं प्रोक्तं इतिदेवलस्मरणाच्च। गृहदाहादिना युगपदनेकब्राह्मणहनने तु भविष्यपुराणीयो विशेषः। ब्राह्मणं ब्राह्मणो वीर

ब्राह्मणान् वा बहून् गुरू। निहत्य युगपद्धीर एकं प्राणान्ति कञ्चरेत्। एतच्चाज्ञानविषयं। तथा च अकामतो यदा हन्यात् ब्राह्मणान् ब्राह्मणो गुरू। चरेद्वने तथाघोरे यावत्प्राण परिक्षयम्। एतच्च प्रकृतत्वाद्युगपन्मारणविषयं क्रममारणे तु विधिः प्राथमिकादस्मादित्यावृत्तिविधायकं वेदवचनं बोद्धव्यं॥ ८६॥

हत्वा गर्भमविज्ञातमेतदेव व्रतञ्चरेत्। राजन्य वैश्यौ चेजानावात्रेयीमेव च स्त्रियम्॥ ८७॥

हत्वेति। प्रकृतत्वाद्ब्राह्मणगर्भविषयं स्त्रीपुन्नपुंसकत्वेना विज्ञातं क्षत्रियं वैश्यञ्च यागप्रवृत्तं हत्वा आत्रेयीञ्च स्त्रियं ब्राह्मणीं। आत्रेयीञ्च ब्राह्मणीमिति यमस्मरणात् हत्वा ब्रह्महत्या प्रायश्चित्तं कुर्य्यात्। आत्रेयी च रजस्वला ऋतुस्नातोच्यते रजस्वलां ऋतुस्नातामात्रेयीमिति वशिष्ठस्मरणात्। एवञ्चाना त्रेयीब्राह्मणीवधे उपपातकं यथोक्तं स्त्रीशूद्रविट्क्षत्रवध इति यत्तूत्तरश्लोके हत्वा च स्त्रीसुहृद्वधमिति तदाहिता ग्निब्राह्मणस्य ब्राह्मणीभार्य्याविषयम्। तथाचाङ्गिराः। आहि ताग्नेर्ब्राह्मणस्य हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्य्या दात्रेयीघ्नस्तथैव च॥ ८७॥

उक्त्वा चैवानृतं साक्ष्ये प्रतिरुध्य गुरुन्तथा। अपहृत्य च निःक्षेपं कृत्वा च स्त्रीसुहृद्वधम्॥ ८८॥

उक्त्वेति। हिरण्यभूम्यादियुक्तसाक्ष्ये अनृतमुक्त्वा गुरोश्च मिथ्याभिशापमुत्पाद्य निक्षेपञ्च ब्राह्मणसुवर्णादन्यद्रजतादि द्रव्यं क्षत्रियादेः सुवर्णमपि चापहृत्य स्त्रीवधं च यथा व्याख्यातं कृत्वा मित्रं चाब्राह्मणं हत्वा ब्रह्महत्याप्रायश्चित्तं कुर्य्यात्॥ ८८॥

इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयते॥ ८९ ॥

इयमिति। एतत्तु प्रायश्चित्तं विशेषोपदेशमन्तरेण कामतो ब्राह्मणवधेऽभिहितं कामतस्तु ब्राह्मणवधे नेयन्निष्कृतिः नैतत्प्रायश्चित्तं किन्त्वतोद्विगुणादिकरणात्मकमिति प्रायश्चित्तगौरवार्थन्नतु प्रायश्चित्ताभावार्थम्। कामतस्तु कृतं मोहात् प्रायश्चित्तैः पृथग्विधैः इति पूर्व्वोक्तविरोधात्॥ ८९॥

सुराम्पीत्वा द्विजो मोहादग्निवर्णां सुराम्पिवेत्। तया स्वकाये निर्दग्धे मुच्यते किल्बिषात्ततः॥ ९०॥

सुरामिति। सुराशब्दः पैष्टीमात्रे मुख्यो न तु गौडीमाध्वीपैष्टीषु त्रितयानुगतैकरूपाभावात् प्रत्येकञ्च शक्तिकल्पने

शक्तिचयकल्पनागौरवप्रसङ्गात्। गौड्यादिमदिरासु गुण वृत्त्यापि सुराशब्दप्रयोगोपपत्तेः। अतएव भविष्यपुराणे। सुरा च पैष्टी मुख्योक्ता न तस्यास्त्वितरे समे। पैष्ट्याः पानेतु चैतासां प्रायश्चित्तं निबोध मे। मनुनोक्तं महाबाहो समासव्यास योगतः। एतासामिति निर्द्धारणे षष्ठी एतासां गौडीमाध्वी पैष्टीनामुक्तानां मध्ये पैष्टीपाने मनूक्तं प्रायश्चित्तं सुरांपीत्वा द्विजोमोहादितीत्यर्थः। मुख्यां सुरां पैष्टीं रागादिव्यामूढतया द्विजो ब्राह्मणः क्षत्रियो वैश्यश्च पीत्वा अग्निवर्णां सुरां पिबे त्तया सुरया शरीरे निर्दग्धे सति द्विजस्तस्मात्पापान्मुच्यते। एतच्च गुरुत्वात्कामकारकृतसुरापानविषयम्। तथाच वृह स्पतिः। सुरापाने कामकृते ज्वलन्तीं तां विनिःक्षिपेत्। मुखे तया स निर्दग्धो मृतः शुद्धिमवाप्नुयात्॥ ९०॥

गोमूत्रमग्निवर्णं वा पिबेदुदकमेव वा। पयोघृतं वा मरणाद्गोशकृद्रसमेव वा॥ ९१॥

गोमूत्रमिति। गोमूत्रजलगोक्षीरगव्यघृतगोमयरसाना मन्यतममग्निस्पर्शं कृत्वा यावन्मरणम्पिवेत्॥ ९१॥

कणान्वा भक्षयेदब्दम्पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजी॥ ९२॥

कणान्वेति। अथवा गोरोमादिकृतवासा जटावान् सुरा

भाजनचिह्नः सूक्ष्मतण्डुलावयवान् आकृष्टतैलन्तिलं वा रात्रा वेकवारं संवत्सरपर्य्यन्तं सुरापानपापनाशार्थम्भक्षयेत्। इद मबुद्धिपूर्व्वकं अमुख्यसुरापाने द्रष्टव्यम् न तु मरणेन वैकल्पिकं लघुत्वात् ॥ ९२ ॥

सुरा वै मलमन्नानाम्पाप्मा च मलमुच्यते। तस्मा द्ब्राह्मणराजन्यौ वैश्यश्च न सुराम्पिबेत् ॥ ९३ ॥

सुरेति। यस्मात्तण्डुलपिष्टसाध्यत्वात्सुरा अन्नमलं मल शब्देन च पापमुच्यते। तस्माद्ब्राह्मणक्षत्रियवैश्याः पैष्टीं सुरां न पिबेयुः इत्यनेन प्रतिषेधे सति एतदतिक्रमे सुरां पीत्वेतिप्राय श्चित्त विधानात् अन्नमलार्थवादाच्च पैष्टीनिषेध एव स्फुटः त्रैवर्णिकस्य मनुनैवोक्तः ॥ ९३ ॥

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा। यथै वैका तथा सर्व्वा न पातव्या द्विजोत्तमैः ॥ ९४ ॥

गौडीति। या गुडेन कृता सा गौडी एवं पिष्टेन कृता पैष्टी मधुकवृक्षो मधुः तत् पुष्पैः कृता सा माध्वी एवन्त्रिःप्रकारा सुरा ज्ञातव्येति मुख्यसुरा साम्यबोधनमितरमद्यापेक्षया ब्राह्म णस्य गौडीमाध्वीपाने प्रायश्चित्तगौरवार्थम्। यथैवैका पैष्टी

मुख्या सुरा पूर्व्ववाक्यनिषिद्धत्वात् त्रैवर्णिकस्यापेक्षया तथा सर्व्वा गौडी माध्वी च द्विजोत्तमैर्न पातव्या ॥ ९४ ॥

यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यन्देवानामश्नता हविः ॥ ९५ ॥

यक्षेति। मद्यमत्रनिषिद्धपैष्टीगौडीमाध्वीव्यतिरिक्तं नवविधम्बोद्धव्यं तदाह पुलस्त्यः। पानसद्राक्षमाधूकं खार्जूरन्तालमैक्षवम्। माध्वीकं टाङ्कमार्द्वीकमैरेयन्नारिकेलजम्। सामान्यानि द्विजातीनां मद्यान्येकादशैव च। द्वादशन्तु सुरा मद्यं सर्व्वेषामधमं स्मृतम्। मांसञ्च प्रतिषिद्धं सुरा च त्रिप्रकारा प्रोक्ता। अस्तूयतइति आसवो मद्यानामवस्थाविशेषः सद्यःकृतसंसाधनः सञ्जातमद्यभावः। यमधिकृत्य इदं पुलस्त्योक्तप्रायश्चित्तम्। द्राक्षेक्षुटंकखर्जूरपनसादेश्चयो रसः। सद्योजातन्तु पीत्वा तं त्र्यहाच्छुद्ध्येद्द्विजोत्तमः। एवं मद्यादिचतुष्टयं यक्षरक्षःपिशाचसम्बंधन्नन्तद्ब्राह्मणेन देवानां हविर्भक्षयता नाशितव्यम्। निषिद्धायाः सुराया इहोपादानं यक्षरक्षःपिशाचान्नतया निन्दार्थम्। अत्र केचिद्देवानामश्नता हविरिति पुंलिङ्गनिर्देशाद्ब्राह्मणस्य पुंस एव मद्यप्रतिषेधो न स्त्रिया इत्याहुः तदसत्। पतिलोकं न सा याति ब्राह्मणी या सुराम्पिबेत्। इहैव सा शुनी गृध्री शूकरी चोपजायते। इति याज्ञवल्क्यादिस्मृतिविरोधात् ॥ ९५ ॥

अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत्।
अकार्य्यमन्यत्कुर्य्याद्वा ब्राह्मणो मदमोहितः ॥ ९६ ॥

अमेध्यइति। ब्राह्मणो मद्यपानमदमूढबुद्धिः सन् अशुचौ वा पतेत् वेदवाक्यं वा उच्चारयेत् ब्रह्महत्याद्यकार्य्यं वा कुर्य्यात्। अतस्तेन मद्यपानं न कार्य्यमिति पूर्व्वस्यैवानुवादः ॥ ९६ ॥

यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्। तस्य व्यपैति ब्राह्मण्यं शूद्रत्वञ्च स गच्छति ॥ ९७ ॥

यस्येति। यस्य ब्राह्मणस्य कायगतं ब्रह्म वेदः संस्काररूपेण वस्थितः एकदेहत्वात् एकवारमपि मद्येनाप्लाव्यते तथा`क वारमपि यो ब्राह्मणो मद्यम्पिबति तस्य ब्राह्मण्यं व्यपैति शूद्रतां स प्राप्नोति तस्मान्मद्यं सर्व्वथैव न पातव्यम् अयमपिपूर्व्वानु वादः ॥ ९७ ॥

एषा विचित्राभिहिता सुरापानस्य निष्कृतिः।
अत ऊर्द्ध्वं प्रवक्ष्यामि सुवर्णस्तेयनिष्कृतिं ॥ ९८ ॥

एषेति। इदं सुरापानजनितपापस्य नानाप्रकारं प्रायश्चित्तमभिहितन्तस्मात्परब्राह्मणं सुवर्णहरणपापस्य निष्कृतिं वक्ष्यामि ॥ ९८ ॥

सुवर्णस्तेयकृद्विप्रो राजानमभिगम्यतु। स्वकर्म्म ख्यापयन् ब्रूयान्मां भवाननुशास्त्विति ॥ ९९ ॥

सुवर्णेति। अपहृत्य सुवर्णन्तु ब्राह्मणस्य यतः स्वयमिति शातातपस्मरणात्। ब्राह्मणसुवर्णचौरो ब्राह्मणो राजानं गत्वा ब्राह्मणसुवर्णापहरणं स्वीयङ्कर्म्म कथयन् ममनिग्रहं करोत्विति ब्रूयात् ब्राह्मणग्रहणं मनुष्यमात्रप्रदर्शनार्थम्। प्रायश्चित्तीयतेनर इति प्रकृतत्वात् क्षत्रियादीनाञ्च प्रायश्चित्तान्तरानभिधानात् ॥ ९९ ॥

गृहीत्वा मुषलं राजा सकृद्धन्यात्तु तं स्वयम्। बधेन शुध्यति स्तेनो ब्राह्मणस्तपसैवतु ॥ १०० ॥

गृहीत्वेति। स्कन्धेनादाय मुषलमित्यादेरुक्तत्वात् तेनार्पितमुषलादिकं गृहीत्वा स्तेयकारिणं मनुष्यमेकवारं राजा स्वयं हन्यात् स च स्तेनो बधेन मुषलाभिघातेन हतो मुक्तोपि वा शुचिरिति याज्ञवल्क्यस्मरणात्। मृतो वा मृतकल्पो वा जीवन् तस्मात् पापान्मुच्यते। ब्राह्मणः पुनस्तपसैवेत्येवकारकरणात्। तथा न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्ववस्थित मित्युक्तत्वाच तपसैव शुद्ध्यति अतएव मन्वर्थव्याख्यानपरे भविष्यपुराणे। यदेतद्वचनं वीर ब्राह्मणस्तपसैव वा। तत्रैव कारणा

सुराधिप। तपसैवेत्यनेनेह प्रतिषेधो बधस्य तु। वाग्वदस्य चत्रियादीनामपि तपोविकल्पार्थः ब्राह्मणस्य तु तपएवेति नियमो न तु ब्राह्मणस्यैव तपः अतएव भविष्यपुराणे। इतरेषा मपि विभो तपो न प्रतिषिध्यत इति ॥ १०० ॥

तपसाऽपनुनुत्सुस्तु सुवर्णस्तेयजं मलम्। चीर वासा द्विजोऽरण्ये चरेद्ब्रह्महणो व्रतम् ॥ १०१ ॥

तदेव तप आह तपसेति। तपसा सुवर्णस्तेये उत्पन्नं पापं द्विजोनिर्हर्त्तुमिच्छन् अरण्यग्रहणात्प्राथम्याच्च ब्रह्महणि यद्व्रतमुक्तं तत्कुर्य्यात् एतच्च द्वादशवार्षिकं क्लेश गौरवात्क्षत्रियादीनां मरणेन विकल्पितत्त्वाच्च ब्राह्मणसम्ब न्धिनः सुवर्णापहरणे। पञ्चकृष्णलको माषस्तेसुवर्णस्तु षोड शेति सुवर्णपरिमाणन्दृष्टव्यन्न ततो न्यूनस्य परिमाणापेचायां मनूक्तपरिमाणस्य ग्रहीतुं न्याय्यत्वात्। यत्त्वधिकपरिमाणम्भ विष्यपुराणे श्रूयते तत्तथाविधानुवन्धविशिष्टापहारे तथाविध प्रायश्चित्तविषयमेव तथाच भविष्यपुराणे। चत्रियाद्यास्त्रयो वर्णा निर्गुणा ह्यघतत्पराः। गुणाढ्यस्य तु विप्रस्य पञ्चनिष्कान् हरन्ति चेत्। निष्कानेकादश तथा दग्ध्वात्मानन्तु पावके। शुद्ध्येयुर्म्मरणाद्वीर चरेद्ब्रह्मात्मशुद्धये ॥ १०१ ॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। गुरुस्त्री गमनीयन्तु व्रतैरेभिरपानुदेत् ॥ १०२ ॥

एतैरिति। ब्राह्मणसुवर्णस्तेयजनितपापमेभिर्व्रतैर्द्विजो निर्हरेत् व्रततपसोर्द्वयोरुक्तत्वात् एतैरिति बहुवचनं सम्बन्धापेक्षया मनूक्तमपि प्रायश्चित्तं कल्पनीयमिति ज्ञापनार्थं। गुरुस्त्रीगमननिमित्तं पुनः पापमेभिर्वक्ष्यमाणैः प्रायश्चित्तैर्निर्हरेत्॥ १०२॥

गुरुतल्प्यभिभाष्यैनस्तप्ते स्वप्यादयोमये। सूर्मीं ज्वलन्तीं स्वाश्लिष्येन्मृत्युना स विशुद्ध्यति॥ १०३॥

गुर्विति। निषेकादीनि कर्म्माणीत्युक्तत्वात् गुरुः पिता तल्पं भार्य्या गुरुतल्पं गुरुभार्य्या तद्गामी गुरुभार्य्यागमनपापं विख्याप्य लोहमये तप्तशयने स्वपयात् लोहमयीं स्त्रीप्रकृतिं कृत्वा ज्वलन्तीमालिङ्ग्य मृत्युना स विशुद्धो भवति॥ १०३ ॥

स्वयं वा शिश्नवृषणावुत्कृत्याधाय चाञ्जलौ। नैर्ऋतीन्दिशमातिष्ठेदानिपातादजिह्मगः॥ १०४॥

स्वयं वेति। आत्मनैव वा लिङ्गवृषणौ छित्वा अञ्जलौ कृत्वा यावत् शरीरपातमवक्रगतिः सन् दक्षिणपश्चिमान्दिशङ्गच्छेत्। एतच्च उक्तप्रायश्चित्तद्वयं गुरुत्वात्सवर्णगुरुभार्य्यायां ज्ञानतो रेतोविसर्गपर्य्यन्तं मैथुनविषयम्॥ १०४॥

खट्वाङ्गी चीरवासा वा श्मश्रुलो विजने वने।
प्राजापत्यञ्चरेत्कृच्छ्रमब्दमेकं समाहितः ॥ १०५ ॥

खट्वाङ्गीति। खट्वाङ्गभृत् वस्त्रखण्डाच्छन्नोऽच्छिन्नकेशनखलोमश्मश्रुधारी संयतमना निर्जने वने वर्षमेकं प्राजापत्यव्रतञ्चरेत्। एतच्च वक्ष्यमाणप्रायश्चित्तलघुत्वात्स्वभार्य्याविभ्रमेणाज्ञानविषयञ्बोद्धव्यम् ॥ १०५ ॥

चान्द्रायणं वा त्रीन्मासानभ्यस्येन्नियतेन्द्रियः।
हविष्येण यवाग्वा वा गुरुतल्पापनुत्तये ॥ १०६ ॥

चान्द्रायणमित्यादि। यद्वा गुरुभार्य्यागमनपापनिर्हरणाय संयतेन्द्रियः फलमूलादिना हविष्येण नीवारादिना कृतयवाग्वा वा त्रीन् मासान् चान्द्रायणान्याचरेत्। एतच्च पूर्व्वोक्तादपि लघुत्वात् असाध्वीमसवर्णां वा गुरुभार्य्यां गच्छतो द्रष्टव्यम् ॥ १०६ ॥

एतैर्व्रतैरपोहेयुर्म्महापातकिनो मलम्। उपपातकिनस्त्वेवमेभिर्न्नानाविधैर्व्रतैः ॥ १०७ ॥

एतैरित्यादि। एभिरुक्तव्रतैर्ब्रह्महत्यादिमहापातककारिणः पापं निर्हरेयुः। गोबधाद्युपपातककारिणः पुनर्व्वक्ष्यमाणप्रकारेणानेकरूपव्रतैः पापानि निर्हरेयुः ॥ १०७ ॥

उपपातकसंयुक्तो गोघ्नो मासं यवान् पिवेत्।
कृतवापो वसेद्गोष्ठे चर्म्मणा तेन संवृतः ॥ १०८ ॥
चतुर्थकालमश्नीयादक्षारलवणं मितम् । गोमू
त्रेण चरेत्स्नानं द्वौ मासौ नियतेन्द्रियः ॥ १०९ ॥
दिवानुगच्छेद्गास्तास्तु तिष्ठन्नूर्द्धं रजः पिवेत्।
शुश्रूषित्वा नमस्कृत्य रात्रौ वीरासनं वसेत् ॥ ११०॥
तिष्ठन्तीष्वनुतिष्ठेत्तु व्रजन्तीष्वप्यनुव्रजेत् ।
आसीनासु तथासीनो नियतो वीतमत्सरः ॥१११॥
आतुरामभिशस्तां वा चौरव्याघ्रादिभिर्भयैः ।
पतितां पङ्कलग्नां वा सर्व्वोपायैर्विमोचयेत् ॥ ११२ ॥
उष्णे वर्षति शीते वा मारुते वाति वा भृशम् ।
न कुर्वीतात्मनस्त्राणं गोरकृत्वा तु शक्तितः ॥११३॥
आत्मनो यदि वान्येषां गृहे क्षेत्रेऽथवा खले ।
भक्षयन्तीर्न्न कथयेत्पिवन्तञ्चैव वत्सकम् ॥ ११४॥
अनेन विधिना यस्तु गोघ्नो गामनुगच्छति ।
स गोहत्याकृतं पापं त्रिभिर्म्मासैर्व्यपोहति ॥ ११५ ॥

उपेति । अनेन विधिना यस्त्विति यावत्कुलकं उपपातकयुक्तो गोघाती शिथिलयवागूरूपेण प्रथममासं यवान्पिवेत् सशिखं मुण्डितशिरा लूनश्मश्रुः तेन हतगोचर्म्मणाच्छादितदेहो

मासत्रयमेव गोष्ठे वसेत् गोमूत्रेण चरेत्स्नानं संयतेन्द्रियः क्षचि मलवणवर्ज्जितं हविष्यमन्नमेकाहभुक्त्वा द्वितीयेह्नि सायं स्तोकं द्वितीयतृतीयमासावश्नीयात् मासत्रयमेव दिवा प्रातस्ता गा अनु गच्छेत्तासाञ्च गवां खुरप्रहारादूर्द्धमुत्थितं रजस्तिष्ठन्नास्वाद येत् कण्डूयनादिना ताः परिचर्य्य प्रणम्य च रात्रौ भित्त्यादिक मननुवेश्य उपविष्ट आसीत तथा शुचिर्विगतक्रोधः उत्थि तासु गोषु पश्चादुत्तिष्ठेत् वने च परिभ्रमन्तीषु पश्चात् परिभ्रमेत्। उपविष्टासु गोषूपविशेत् व्याधिताश्चौरव्याघ्रा दिभयहेतुभिराक्रान्तां पतितां कर्द्दमलग्नां वा यथाशक्ति मोच येत्। तथा उष्णे आदित्ये तपति मेघे च वर्षति शीते चोपस्थिते मारुते चात्यर्थं वाति गोर्यथाशक्ति रक्षामकृत्वा आत्मनस्त्राणं न कुर्य्यात्तथा आत्मनोऽन्येषां वा गेहे क्षेत्रे खले च शस्यादिभ क्षणं कुर्व्वन्तीं वत्सञ्च क्षीरम्पिबन्तन्न कथयेत्। अनेनोक्तविधा नेन यो गोघ्नो गाः परिचरति स गोवधजनितपापं त्रिभिर्म्मासै रपनुदति ॥ १०८ ॥ ॥ १०९ ॥ ११० ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ॥ ११५ ॥

वृषभैकादशा गाश्च दद्यात्सुचरितव्रतः। अवि द्यमाने सर्व्वस्वं वेदविद्भ्यो निवेदयेत् ॥ ११६ ॥

वृषभेति। वृष एकादशो यासान्ताः सम्यगनुष्ठितप्राय श्चित्तो दद्यात्। अविद्यमाने तावति धने सर्व्वस्वं वेदज्ञेभ्यो ब्राह्म णेभ्यो दद्यात् ॥ ११६ ॥

एतदेव व्रतं कुर्य्युरुपपातकिनो द्विजाः। अवकीर्णिवर्ज्जं शुद्ध्यर्थञ्चान्द्रायणमथापि वा ॥ ११७ ॥

एतदेवेति। अपरे तूपपातकिनो वक्ष्यमाणावकीर्णिवर्जिताः पापनिर्हरणार्थमेतदेव गोवधप्रायश्चित्तं चान्द्रायणम्वा कुर्य्युः चान्द्रायणन्तु लघुत्वात् लघुन्युपपातके जातिशक्तिगुणाद्यपेक्षं वा योजनीयम् ॥ ११७ ॥

अवकीर्णी तु काणेन गर्द्दभेन चतुष्पथे। पाकयज्ञविधानेन यजेत निर्ऋतिन्निशि ॥ ११८ ॥

अवकीर्णीति। अवकीर्णी वक्ष्यमाणः काणेन गर्द्दभेन रात्रौ चतुष्पथे पाकयज्ञेन मन्त्रेण निर्ऋत्याख्यान्देवतां यजेत् ॥ ११८ ॥

हुत्वाग्नौ विधिवद्धोमानन्ततश्च समेत्यृचा। वातेन्द्रगुरुवह्नीनां जुहुयात्सर्प्पिषाहुतीः ॥ ११९ ॥

हुत्वेति। ततो निर्ऋत्यै गर्द्दभवपादिहोमान् यथावच्चतुष्पथे हुत्वा तदन्ते समासिञ्चन्तु मारुतइत्येतया ऋचा मारुतेन्द्रबृहस्पत्यग्नीनां घृतेनाहुतीर्जुहुयात् ॥ ११९ ॥

कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः। अति
क्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः॥१२०॥

अप्रसिद्धत्वादवकीर्णि लक्षणमाह कामत इति। इच्छातो द्विजः अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितमिति वचना त्स्त्रीयोनौ शुक्रोत्सर्गं ब्रह्मचर्य्यस्यातिक्रममवकीर्णरूपं सर्वज्ञा वदविदः प्राहुः॥१२०॥

मारुतम्पुरुहूतञ्च गुरुम्पावकमेव च। चतुरो
व्रतिनोऽभ्येति ब्राह्मन्तेजोऽवकीर्णिनः॥१२१॥

मारुतमिति। ब्रह्मचारिणो वेदाध्ययननियमानुष्ठानजन्तेजः तदवकीर्णिनः सतो मरुदिन्द्रवृहस्पतिपावकांश्चतुरः संक्रामति अतस्तेभ्य आज्याहुतीर्जुहुयात् इत्याज्याहुतेरयमनुवादः॥१२१॥

एतस्मिन्नेनसि प्राप्ते वसित्वा गर्द्दभाजिनम्।
सप्तागारांश्चरेद्भैक्षं स्वकर्म्म परिकीर्त्तयन्॥१२२॥

एतस्मिन्निति। एतस्मिन्नवकीर्णाख्ये पाप उत्पन्ने पूर्व्वोक्तं गर्द्दभयागादि कृत्वा गर्द्दभचर्म्मपरिधायेतिहारीतस्मरणात्तद्गर्द्दभसम्बन्धिचर्म्मप्रावृतोवकीर्णी अहमिति स्वकर्म्मख्यापनं कुर्व्वन् सप्त गृहाणि भैक्ष्यं चरेत् तेभ्यो लब्धेन भैक्ष्येण वर्त्तयन्नेककालिकमिति॥१२२॥

तेभ्यो लब्धेन भैक्षेण वर्त्तयन्नेककालिकम्। उपस्पृशंस्त्रिषवणंत्वब्देन स विशुध्यति ॥ १२३ ॥

तेभ्यइति। तेभ्यः सप्तगृहेभ्यो लब्धेन भैक्षेण एककालमाहारं कुर्व्वन् सायम्प्रातर्मध्यन्दिनेषु च स्नानमाचरन् सोवकिर्णीसंवत्सरेणैव विशुध्यति ॥ १२३ ॥

जातिभ्रंशकरं कर्म्म कृत्वान्यतममिच्छया। चरेत्सान्तपनं कृच्छ्रं प्राजापत्यमनिच्छया ॥ १२४ ॥

जातीति। ब्राह्मणस्य रुजःकृत्वेत्यादिजातिभ्रंशकर्म्मोक्तं तन्मध्यादन्यतमं कर्म्मविशेषं इच्छातः कृत्वा वक्ष्यमाणं सान्तपनं सप्ताहसाध्यं कुर्य्यात् अनिच्छातः पुनः कृत्वा प्राजापत्यं वक्ष्यमाणञ्चरेत् ॥ १२४ ॥

सङ्करापात्रकृत्यासु मासं शोधनमैन्दवम्। मलिनीकरणीयेषु तप्तः स्याद्यावकैस्त्र्यहम् ॥ १२५ ॥

सङ्करेति। खराश्वोष्ट्रेत्यादिना सङ्करीकरणान्युक्तानि निन्दितेभ्यो धनादानमित्यादिना चापात्रीकरणान्युक्तानि तेषां मध्यादन्यतममिच्छातः कृत्वा चान्द्रायणं मासं शुद्धये कुर्य्यात् कृमिकीटवयो हत्येत्यादिना मलिनीकरणान्युक्तानि तन्मध्यादेकमिच्छातः कृत्वा त्रिरात्रं यवागूं क्वथितामश्नीयात् ॥ १२५ ॥

तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः।
वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश ॥ १२६ ॥

तुरीय इति। ब्रह्महत्यातुरीयो भागः त्रैवार्षिकरूपः द्वादश वार्षिकस्य चतुर्थो भागः एतच्च प्रायश्चित्तं स्त्रीशूद्रविटक्षत्र वधइति उपपातकत्वेनोपदिष्टत्रैमासिकापेक्षया गुरुत्वात् वृत्तस्थक्षत्रियस्य कामतो वधे द्रष्टव्यं वैश्ये साध्वाचारे कामतो हते अष्टमोभागः सार्द्धवार्षिकं व्रतं शूद्रे वृत्तस्थेकामतो हते षोडशोभागो नवममासिकम् द्रष्टव्यं ॥ १२६ ॥

अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः।
वृषभैकसहस्रा गा दद्यात्सुचरितव्रतः॥ १२७॥

अकामत इति! अबुद्धिपूर्व्वकम्पुनः क्षत्रियं निहत्य वृषभे नैकेनाधिकं सहस्रं यासां गवां ता आत्मशुद्ध्यर्थं ब्राह्मणेभ्यो दद्यात् ॥ १२७ ॥

त्र्यब्दञ्चरेद्वा नियतो जटी ब्रह्महणो व्रतम्।
वसन्दूरतरे ग्रामाद्वृक्षमूलनिकेतनः॥ १२८॥

त्र्यब्दमिति! यद्वा संयतो जटावान् ग्रामादिप्रकृष्टवृक्षमूल कृतनिवासो ब्रह्महणि यदुक्तं व्रतं ब्रह्महा द्वादश समा इत्यादि

तदर्षत्रयं कुर्य्यात् न तु तुरीयो ब्रह्महत्याया इत्यनेन पुनरुक्ति र्वाच्या जटी दूरतरे ग्रामात् वृक्षमूलनिकेतन इत्येतद्वचनोक्त व्यतिरिक्तशवशिरोध्वजधारणादिसकलधर्म्मनिवृत्त्यर्थत्वादस्य अकामाधिकाराच्च इदमकामतः अतएवाङ्गलाघवाद्युचितम् ॥ १२८ ॥

एतदेव चरेदब्दम्प्रायश्चित्तं द्विजोत्तमः। प्रमाप्य वैश्यं वृत्तस्थन्दद्याच्चैकशतङ्गवाम् ॥ १२९ ॥

एतदिति। एतदेव द्वादशवार्षिकव्रतमकामतः साध्वाचारं वैश्यं निहत्य वर्षमेकं ब्राह्मणादिः कुर्य्यात् एकाधिकं वा गोशतन्दद्यात् ॥ १२९ ॥

एतदेव व्रतं कृत्स्नं षण्मासान् शूद्रहा चरेत्। वृषभैकादशा वापि दद्याद्विप्राय गाः सिताः ॥१३०॥

एतदिति । एतदप्यकामतः इदमेव व्रतं शूद्रहा षण्मासञ्चरेत् वृषभ एकादशो यासां गवान्ताः शुक्लवर्णा दशब्राह्मणाय दद्यात् ॥ १३० ॥

मार्जारनकुलौ हत्वा चाषं मण्डूकमेव च। श्वगोधोलूककाकांश्च शूद्रहत्याव्रतञ्चरेत् ॥ १३१ ॥

मार्जारेति। विडालनकुलचाषभेककुक्कुरगोधापेचककाकानामेकैकं हत्वा शूद्रहत्याव्रतं शूद्रविट्क्षत्रवधइत्युपपातक

प्रायश्चित्तं गोवधव्रतञ्चान्द्रायणञ्चरेत् न तु शूद्रे त्रेयस्तु षोडशी त्यादिप्रायश्चित्तम्पापस्य लघुत्वात्। चान्द्रायणमप्येतत् कामतो ऽभ्यासादिविषये द्रष्टव्यम् ॥ १३१ ॥

पयः पिबेत्त्रिरात्रं वा योजनं वाऽध्वनो व्रजेत्। उप स्पृशेत् स्रवन्त्यां वा सूक्तं वाब्दैवतञ्जपेत् ॥ १३२ ॥

पय इति। अबुद्धिपूर्व्वकं मार्ज्जारादीनां वधे त्रिरात्रं क्षीर म्पिबेत्। अथ मन्दानलत्वादिना न समर्थः त्रिरात्रं योजन मध्वनो व्रजेत् अत्राशक्तस्त्रिरात्रं नद्यां स्नायात् तत्राप्यक्षम स्त्रिरात्रं आपोहीष्ठेत्यादिसूक्तञ्जपेत् यथोत्तरं लघुत्वात् पूर्व्व पूर्व्वासम्भवे उत्तरोत्तरपरिग्रहः न तु वैकल्पिकः ॥ १३२ ॥

अभ्रिं कार्ष्णायसीं दद्यात्सर्पं हत्वा द्विजोत्तमः। पलालभारकं षंढे सैसकञ्चैकमाषकम् ॥ १३३ ॥

अभ्रिमिति। सर्पं हत्वा ब्राह्मणाय तीक्ष्णाग्रं लोहदण्डन्द द्यात्। नपुंसकं हत्वा पलालभारं सीसकञ्च माषकं ब्राह्मणाय दद्यात् ॥ १३३ ॥

घृतकुम्भं वराहे तु तिलद्रोणन्तु तित्तिरौ। शुके द्विहायनं वत्सं क्रौञ्चं हत्वा त्रिहायनम् ॥ १३४ ॥

घृतेति। शूकरे हते घृतपूर्णं घटम्ब्राह्मणाय दद्यात तित्तिरि

श्विनि पक्षिणि हते चतुराढकपरिमाणं तिलन्दद्यात्। शुके हते द्विवर्षं वत्सं क्रौञ्चाख्यपक्षिणं हत्वा त्रिवर्षं वत्सं ब्राह्मणाय दद्यात्॥ १३४॥

हत्वा हंसं बलाकाञ्च बकं बर्हिणमेवच। वानरं श्येनभासौ च स्पर्शयेद्ब्राह्मणाय गाम्॥ १३५॥

हत्वेति। हंसबलाकाबकमयूरवानरश्येनभासाख्यानाम्पक्षिणामन्यतमं हत्वा ब्राह्मणाय गान्दद्यात्॥ १३५॥

वासो दद्याद्धयं हत्वा पञ्च नीलान्वृषान् गजम्। अजमेषावनड्वाहं खरं हत्वैकहायनम्॥ १३६॥

वास इति। अश्वं हत्वा वस्त्रं दद्यात् हस्तिनं हत्वा पञ्च नीलान्वृषभान् दद्यात्प्रत्येकं छागमेषौ हत्वा वृषभन्दद्यात् गर्द्दभं हत्वा एकवर्षं वत्सं दद्यात्॥ १३६॥

क्रव्यादांस्तु मृगान् हत्वा धेनुन्दद्यात्पयस्विनीं। अक्रव्यादान्वत्सतरीमुष्ट्रं हत्वा तु कृष्णलं॥ १३७॥

क्रव्यादानिति। आममांसभक्षिणो मृगान् व्याघ्रादीन् हत्वा बहुक्षीरां धेनुन्दद्यात् अमांसभक्षकान् हरिणादीन् हत्वा प्रौढवत्सिकां दद्यात् उष्ट्रं हत्वा सुवर्णरक्तिकान्दद्यात् ॥ १३७॥

जीनकार्मुकवस्तावीन् पृथग्दद्याद्विशुद्धये। चतुर्णामपि वर्णानान्नारीर्हत्वाऽनवस्थिताः॥ १३८॥

जीनेति। ब्राह्मणादिवर्णस्त्रियो लोभादुत्कृष्टापकृष्टपुरुषव्यभिचारिणीर्हत्वा ब्राह्मणादिक्रमेण चर्म्मपुटधनुःछाग मेषान् शुद्ध्यर्थन्दद्यात्॥ १३८॥

दानेन बधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत्कृच्छ्रं द्विजः पापापनुत्तये॥ १३९॥

दानेनेति। अस्थिप्रभृतीनामभावाद्दानेन सर्व्वपापनिर्हरणं कर्त्तुमसमर्थो ब्राह्मणादिः प्रत्येकम्बधे कृच्छ्रमाथम्यात् प्राजापत्यं द्विजः पापनिर्हरणार्थञ्चरेत्सर्पादयस्त्वाभिजङ्कार्ष्णायसीं दद्यादित्येवमारभ्यैतत्पर्य्यन्ता गृह्यन्ते॥ १३९॥

अस्थिमतान्तु सत्त्वानां सहस्रस्य प्रमापणे। पूर्णे चानस्यनस्थ्नान्तु शूद्रहत्याव्रतं चरेत्॥ १४०॥

अस्थिमतामिति। अनस्थिसाहचर्य्यात् अस्थिमतां प्राणिनां कृकलासादीनां सहस्रस्य बधे शूद्रबधप्रायश्चित्तमौपदेशिकं कुर्य्यात् अस्थिरहितानाञ्च मत्कुणादीनां शकटपरिमितानाम्बधे तदेव प्रायश्चित्तं कुर्य्यात्॥ १४०॥

किञ्चिदेव तु विप्राय दद्यादस्थिमतांवधे। अन
स्थ्नाञ्चैव हिंसायां प्राणायामेन शुद्ध्यति ॥ १४१ ॥

किञ्चिदिति। अस्थिमतां क्षुद्रजन्तूनां ककलासादीनाम्प्रत्येकम्बधे किञ्चिदेव दद्यात्। अस्थिमतां वधे पणो देय इतिसुमन्तुस्मरणात्किञ्चिदेवेति पणो बोद्धव्यः अनस्थिमतान्तु यूकामत्कुणादीनाम्प्रत्येकम्बधे प्राणायामेन शुद्धो भवति प्राणायामस्तु सव्याहृतिकां सप्रणवां सावित्रीं शिरसा सह। त्रिः पठेदायतप्राणः प्राणायामः स उच्यते इतिवशिष्ठप्रोक्तलक्षणो ग्राह्यः ॥ १४१ ॥

फलदानान्तु वृक्षाणाञ्छेदने जप्यमृक्शतं।
गुल्मवल्लीलतानाञ्च पुष्पितानाञ्च वीरुधां ॥ १४२ ॥

फलेति। फलदानामाम्रादीनां वृक्षाणां गुल्मानां कुब्जकादीनां वल्लीनां गुडुच्यादीनां लतानां वृक्षशाखासक्तानां पुष्पितानाञ्च वीरुधां कूष्माण्डादीनाम्प्रत्येकञ्छेदने पापप्रमोचनार्थं साविव्यादिऋक्शतं जपनीयं इन्धनार्थमशुष्काणां द्रुमाणामवपातनमित्यादेरुपपातकमध्ये पठितस्य गुरुप्रायश्चित्ताभिधानात् इदम्फलवद्वृक्षादिछेदने लघुप्रायश्चित्तं सकृदबुद्धिपूर्व्वकविषयं वेदितव्यम् ॥ १४२ ॥

अन्नाद्यजानां सत्त्वानां रसजानाञ्च सर्व्वशः।
फलपुष्पोद्भवानाञ्च घृतप्राशो विशोधनं ॥ १४३ ॥

अन्नाद्येति। अन्नादिषु जातानां गुडादिरसजातानाञ्च उदुम्बरादिफलसम्भवानां मधूकादिपुष्पोद्भवानाञ्च सर्व्व प्राणिनां वधे घृतप्राशनम्पापशोधनम् ॥ १४३ ॥

कृष्टजानामोषधीनाञ्जातानाञ्च स्वयं वने।
वृथालम्भेऽनुगच्छेद्गान्दिनमेकम्पयोव्रतः ॥ १४४ ॥

कृष्टेति। कर्षणपूर्व्वकजातानामोषधीनां षष्टिकादीनां वने च स्वयमुत्पन्नानां नीवारादीनां निष्प्रयोजनच्छेदने क्षीराहार एकमहो गोरनुगमनं कुर्य्यात् ॥ १४४ ॥

एतैर्व्रतैरपोह्यं स्यादेनो हिंसासमुद्भवम्। ज्ञानाज्ञानकृतं कृत्स्नं शृणुतानाद्यभक्षणे ॥ १४५ ॥

एतैरिति। एभिरुक्तप्रायश्चित्तैर्हिंसाजनितपापं ज्ञानाज्ञानकृतं निर्हरणीयं इदानीमभक्ष्यभक्षणप्रायश्चित्तं वक्ष्यमाणं शृणुत ॥ १४५ ॥

अज्ञानाद्वारुणीं पीत्वा संस्कारेणैव शुद्ध्यति।
मतिपूर्व्वमनिर्द्देश्यम्प्राणान्तिकमिति स्थितिः॥ १४६॥

अज्ञानादिति। महापातकप्रकरणव्यवधानेनाख्यानात् नेदं मुख्यपैष्टीसुराविषयं वचनम्। किन्तु तदितरविषयं तत्र यथा चैका तथा सर्व्वा गौडीमाध्वेर्य्योर्मुख्यसुरासाम्यबोधनमित रमद्यापेक्षया ब्राह्मणस्य प्रायश्चित्तगौरवार्थमित्युक्तं। तेना बुद्धिपूर्व्वकं गौडीं माध्वीञ्च पीत्वा गौतमोक्तन्तप्तकृच्छ्रं कृत्वा पुनः संस्कारेणैव शुद्ध्यति। तथाच गौतमः। अमत्या मद्यपाने पयोघृतमुदकं वायुमतिव्यहं तप्तकृच्छ्रः ततोऽस्य संस्कारः। इत्यमेव व्याख्यातं भविष्यपुराणे। अकामतः कृते पाने गौडी माध्वेर्य्योर्न्नराधिप। तप्तकृच्छ्रविधानं स्यात् गौतमेन यथो दितम्। बुद्धिपूर्व्वकन्तु पैष्टीतरमद्यपाने प्राणान्तिकं अनिर्द्देश्य मिति शास्त्रमर्य्यादा। तथा गौडीमाध्वेर्य्योर्ज्ञानात्पाने मरण निषेधादितरमद्यापेक्षया गुरुत्वाच्च मानवमेव कणान् वा भक्षयेदब्दमिति प्रायश्चित्तमुक्तं अतएव गौडीमाध्वेर्य्योः कामतः पानानुवृत्तौ भविष्यपुराणे। यद्वाऽस्मिन्नेव विषये मान वीयं प्रकल्पयेत्। कणान्वा भक्षयेदब्दम्पिण्याकं वा सकृन्निशि। सुरापानापनुत्त्यर्थं वालवासा जटी ध्वजीति पैष्टीगौडीमाध्वी व्यतिरिक्तपुलस्त्योक्त पानसादिनवविधमद्यस्य प्रत्येकम्पाने लघु त्वात्संस्कारमात्रमेव केवलं अन्यदा लघुप्रायश्चित्तं ब्राह्मणस्य

युक्तं। बुद्धिपूर्व्वपानवादिमद्यपाने तु। मतिपूर्व्वं सुरापाने कृतेवै ज्ञानतो गुरु। कृच्छ्रातिकृच्छ्रौ भवतः पुनः संस्कार एव चेतिभविष्यपुराणीयमन्यद्वा एवंविधं मुन्यन्तरोक्तं युक्तं ॥१४६॥

अपः सुराभाजनस्था मद्यभाण्डस्थितास्तथा ।
पञ्चरात्रं पिबेत्पीत्वा शङ्खपुष्पी शृतन्पयः ॥ १४७ ॥

अपइति। पैष्टीसुराभाण्डे तदितरमद्यभाण्डे वा ऽवस्थिता अपः सुरारसगन्धवर्जिताः पीत्वा शङ्खपुष्पाख्यौषधिप्रक्षेपेण पक्वं क्षीरमथोदकं शङ्खपुष्पीविपक्केन त्र्यहं क्षीरेण वर्त्तयेदिति बौधायनस्मरणात्। पञ्चरात्रं पिबेत् सुरामद्ययोः सर्व्वत्रैव गुरुलघु प्रायश्चित्ताभिधानात् इहापि ज्ञानाज्ञानादिप्रकार भेदेन विषयसमीकरणं समाधेयं। वाचनिकमेव प्रायश्चित्तं साम्यमिति मेधातिथिराह ॥ १४७ ॥

स्पृष्ट्वा दत्वा च मदिरां विधिवत्प्रतिगृह्य च।
शूद्रोच्छिष्टाश्च पीत्वापः कुशवारि पिबेत् त्र्यहं॥१४८॥

स्पृष्टेति। सुरां स्पृष्ट्वा दत्वा च स्वस्तिवचनपूर्वकञ्च प्रतिगृह्य शूद्रोच्छिष्टाश्च अपः पीत्वा प्रतिगृह्येत्युपादानात्। ब्राह्मणो दर्भक्वथितमुदकं त्र्यहं पिबेत्॥ १४८ ॥

२ त

ब्राह्मणस्तु सुरापस्य गन्धमाघ्राय सोमपः । प्राणानप्सु त्रिरायम्य घृतम्प्राश्य विशुद्ध्यति ॥ १४९ ॥

ब्राह्मणस्त्वित्यादि । ब्राह्मणः पुनः कृतसोमयागः सुरापस्य मुखसम्बन्धिनं गन्धं घ्रात्वा जलमध्ये प्राणायामत्रयं कृत्वा घृतं प्राश्य विशुद्धो भवति ॥ १४९ ॥

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च । पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ १५० ॥

अज्ञानादिति । विड्वराहादीनां वक्ष्यमाणत्वात् अबुद्धिपूर्वकं मनुष्यसम्बन्धि मूत्रं पुरीषं वा प्राश्य सुरासंसृष्टञ्च भक्तादिरसं वा प्राश्य द्विजातयस्त्रयो वर्णाः पुनरुपनयनमर्हन्ति ॥ १५० ॥

वपनं मेखलादण्डो भैक्ष्यचर्य्याव्रतानि च । निवर्त्तन्ते द्विजातीनाम्पुनः संस्कारकर्म्मणि ॥ १५१ ॥

वपनमिति । शिरो मुण्डनं मेखलाधारणं दण्डधारणं भैक्षाणि व्रतानि च मधुमांसस्त्रीवर्जनयुतानि प्रायश्चित्तार्थं पुनरुपनयने द्विजातीनान्न भवन्ति ॥ १५१ ॥

अभोज्यानान्तु भुक्त्वान्नं स्त्रीशूद्रोच्छिष्टमेव च।
जग्ध्वा मांसमभक्ष्यञ्च सप्तरात्रं यवान्पिबेत्॥१५२॥

अभोज्यानामिति। अभोज्यानान्नाश्रोत्रियस्तते यज्ञे इत्या द्युक्तानामन्नंभुक्त्वा जलमिश्रितशक्तुरूपेण यवागूरूपेण वा यवान् पानयोग्यान् कृत्वा सप्तरात्रं पिबेत्। अमुष्मिन्नेव विषये मत्या भुक्त्वा चरेत्कृच्छ्रमिति चतुर्थाध्याये प्रायश्चित्तमुक्तं तेन सह वैकल्पितं विकल्पश्च कर्त्तृशक्त्यपेक्षः तथा द्विजातिस्त्रीणा मुच्छिष्टं शूद्रोच्छिष्टं वा भुक्त्वा एतदेव कुर्य्यात्तथा क्रव्याद शूकरोष्ट्राणामित्यादिना यद्विशेषप्रायश्चित्तं तन्निषिद्धमांस भुक्त्वा इदमेव कुर्य्यात्॥ १५२ ॥

शुक्तानि च कषायांश्च पीत्वा मेध्यान्यपि द्विजः।
तावद्भवत्यप्रयतो यावत्तन्न व्रजत्यधः॥ १५३ ॥

शुक्तानीति। यानि स्वभावतो मधुरादिरसानि कालयोग नोदकवासादिनाऽस्वभावं व्रजन्ति तानि शुक्तानि कषायान् विभीतकादीन् क्वथितानि अप्रतिषिद्धान्यपि पीत्वा यावन्न जीर्णानि भवन्ति तावदशुचिः पुरुषो भवति॥ १५२ ॥

विड्वराहखरोष्ट्राणां गोमायोः कपिकाकयोः।
प्राश्य मूत्रपुरीषाणि द्विजश्चान्द्रायणञ्चरेत्॥१५४॥

विड्वराहेति। ग्राम्यशूकरखरोष्ट्रश्टगालवानरकाकानां

मूत्रपुरीषं वा द्विजातिर्भुक्त्वा चान्द्रायणं कुर्य्यात् यत्तु छत्राकं विड्वराहञ्चेत्यनेन विड्वराहग्रामकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये प्रायश्चित्तमुक्तं तदभ्यासविषये व्याख्यातं इदन्त्वनभ्यासविषये इत्यविरोधः ॥ १५४ ॥

शुष्काणि भुक्त्वा मांसानि भौमानि कवकानि च।
अज्ञातञ्चैव सूनास्थमेतदेव व्रतञ्चरेत् ॥ १५५ ॥

शुष्काणीति। वाय्वादिना शोषितानि मांसानि भुक्त्वा भूम्यादिप्रभवानि छत्राकानि भुक्त्वा भूमिजं वा वृक्षजं वा छत्राकं भक्षयन्ति ये। ब्रह्मघ्नांस्तान् विजानीयात् इतियमेन वृक्षजस्यापि निषेधात्। हरिणमांसमुत रासभमांसमिति भक्ष्याभक्ष्य तया यन्न ज्ञातं तथा हिंसास्थानं सूना ततो यदानीतं तद्भुक्त्वा चान्द्रायणमेव कुर्य्यात् ॥ १५५ ॥

क्रव्यादसूकरोष्ट्राणां कुक्कुटानाञ्च भक्षणे।
नरकाकखराणाञ्च तप्तकृच्छ्रं विशोधनम् ॥ १५६ ॥

क्रव्यादेति। आममांसभक्षिणां ग्राम्यसूकरोष्ट्रग्राम्यकुक्कुटानां तथा मानुषकाकगर्द्दभानां प्रत्येकं बुद्धिपूर्व्वकं मांसभक्षणे वक्ष्यमाणं तप्तकृच्छ्रप्रायश्चित्तम् ग्राम्यसूकरकुक्कुटयोर्बुद्धिपूर्व्वकभक्षणे पञ्चमाध्याये पातित्यमुक्तं तदभ्यासविषये व्याख्यातं इदन्तु नाभ्यासविषये तप्तकृच्छ्रमित्यविरोधः ॥ १५६ ॥

मासिकान्नन्तु योऽश्नीयादसमावर्त्तको द्विजः।
स त्रीण्यहान्युपवसेदेकाहञ्चोदके वसेत्॥ १५७॥

मासिकान्नमिति। यो ब्रह्मचारी ब्राह्मणो मासिकश्राद्ध सम्बन्ध्यन्नमश्नाति एतच्च सपिण्डीकरणात्पूर्वं एकोद्दिष्टश्राद्धा न्नोपलक्षणं स त्रिरात्रमुपवसेत्। त्रिरात्रमध्य एकस्मिन्नहनि जलमावसेत्॥ १५७ ॥

ब्रह्मचारी तु योऽश्नीयान्मधुमांसङ्कथञ्चन। स
कृत्वा प्राकृतं कृच्छ्रं व्रतशेषं समापयेत्॥ १५८॥

ब्रह्मचारीति। यो ब्रह्मचारी माक्षिकं मांसं वा अनिच्छातः आपदि वाऽद्यात् स प्राजापत्यं कृत्वा प्रारब्धब्रह्मचर्य्यव्रत शेषं समापयेत्।॥ १५८॥

विडालकाकाखूच्छिष्टञ्जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नञ्च पिवेद्ब्रह्मसुवर्च्चलां॥ १५९॥

विडालेति। विडालकाकमूषिककुक्कुरनकुलानामुच्छिष्टं केशकीटरूपसंसर्गदुष्टं वा अज्ञतस्तत्चेपविशुद्धिकं ज्ञात्वा भुक्त्वा ब्रह्मसुवर्चलां क्वथितमुदकम्पिवेत् ॥ १५९ ॥

अभोज्यमन्नन्नात्तव्यमात्मनः शुद्धिमिच्छता। अज्ञा
नभुक्तन्तूत्तार्य्यं शोध्यं वाप्याशु शोधनैः॥ १६०॥

अभोज्यमिति। आत्मनः शुद्धिकामेन प्रतिषिद्धमन्नं नादनीय
म्प्रमादात्तु भुक्तं वमितव्यं तदसम्भवे प्रायश्चित्तैः चिप्रं शोधनीयं
वमनपक्षे तु लघुप्रायश्चित्तम्भवत्येव ज्ञानतः पुनः पूर्व्वोक्तं प्राय
श्चित्तम्॥ १६०॥

एषोऽनाद्यादनस्योक्तो व्रतानां विविधो विधिः।
स्तेयदोषापहर्त्तॄणां व्रतानां श्रूयतां विधिः॥ १६१॥

एष इति। अभक्ष्यभक्षणे यानि प्रायश्चित्तानि तेषामेतन्ना
नाप्रकारविधानमुक्तं स्तेयपापहारिणां विधानमधुना श्रूय
ताम्॥ १६१॥

धान्यान्नधनचौर्य्याणि कृत्वा कामाद्द्विजोत्तमः।
स्वजातीयगृहादेव कृच्छ्राब्देन विशुद्ध्यति॥ १६२॥

धान्येति। ब्राह्मणो ब्राह्मणगृहाद्धान्यभक्तादिरूपधनचौर्य्याणि
इच्छातः कृत्वा नत्वात्मीयभ्रान्त्या नीत्वा संवत्सरं प्राजापत्य
व्रताचरणेन शुद्ध्यति एतच्च देशकालद्रव्यपरिमाणस्वामि
गुणाद्यपेक्षया महत्त्वादि बोद्धव्यं एवमुत्तरत्रापि॥ १६२॥

मनुष्याणान्तु हरणे स्त्रीणां क्षेत्रगृहस्य च। कूप
वापीजलानाञ्च शुद्धिश्चान्द्रायणं स्मृतम् ॥ १६३ ॥

मनुष्याणामिति। पुरुषस्त्रीक्षेत्रगृहाणामन्यतमहरणे कूप
जलस्य वापी जलस्य वा समस्तस्य हरणे चान्द्रायणं प्रायश्चित्तं
मन्वादिभिः स्मृतम् ॥ १६३ ॥

द्रव्याणामल्पसाराणां स्तेयं कृत्वाऽन्यवेश्मतः।
चरेत्सान्तपनं कृच्छ्रं तन्निर्य्यात्यात्मशुद्धये ॥ १६४ ॥

द्रव्याणामिति। द्रव्याणामल्पार्घाणामल्पप्रयोजनानाञ्चा
नुक्तप्रायश्चित्तविशेषाणान्त्रपुसीसकादीनाम्परगृहाच्चौर्य्यं कृत्वा
तदपहृतं द्रव्यं स्वामिने दत्वा सान्तपनं कृच्छ्रं प्रायश्चित्तं वक्ष्य
माणमात्मशुद्धये कुर्य्यात् स्वामिनेऽपहृतं द्रव्यं निर्य्यात्येति
सर्व्वस्तेयप्रायश्चित्तशेषः ॥ १६४ ॥

भक्ष्यभोज्यापहरणे यानशय्यासनस्य च। पुष्प
मूलफलानाञ्च पञ्चगव्यं विशोधनम् ॥ १६५ ॥

भक्ष्येति। भक्ष्यस्य मोदकादेः भोज्यस्य पायसादेः यानस्य
शकटादेः शय्याया आसनस्य च पुष्पमूलफलानाञ्च प्रत्येक
मपहरणे पञ्चगव्यपानं विशोधनम् ॥ १६५ ॥

तृणकाष्ठद्रुमाणाञ्च शुष्कान्नस्य गुडस्य च।
चैलचर्म्मामिषाणाञ्च त्रिरात्रं स्यादभोजनं ॥१६६॥

तृणेति। तृणकाष्ठवृक्षाणां शुष्कान्नस्य च तण्डुलादेः गुड़वस्त्रचर्म्ममांसानां मध्ये एकस्याप्यपहरणे त्रिरात्रमुपवासञ्चरेत ॥१६६॥

मणिमुक्ताप्रवालानान्ताम्रस्य रजतस्य च। अयःकांस्योपलानाञ्च द्वादशाहं कणान्नता ॥ १६७॥

मणीति। मणिमुक्ताविद्रुमताम्ररूप्यलोहकांस्योपलानां प्रत्येकमपहरणे द्वादशाहन्तण्डुलकणभक्षणं कुर्य्यात् सर्व्वत्र सकृदभ्यासदेशकालद्रव्यस्वामिगुणदौर्गत्यापेक्षया उत्कृष्टापकृष्टद्रव्यापहारविषयसमीकरणं समाधेयम् ॥ १६७॥

कार्पासकीटजोर्णानां द्विशफैकशफस्य च। पक्षिगन्धौषधीनाञ्च रज्ज्वाश्चैव त्र्यहम्पयः ॥ १६८॥

कार्पासेति। कार्पासकृमिकोषजीर्णानां वस्त्राणां द्विशफैकशफस्य गवाश्वादेः पक्षिणां शुकादीनां गन्धानाञ्च चन्दनप्रभृतीनां रज्ज्वाश्च प्रत्येकं हरणे त्र्यहं क्षीराहारः स्यात्।

अत्रापि पूर्व्ववद्विषयसमीकरणपरिहारः स्वामिनस्तोत्कृष्टाप कृष्टद्रव्यसमर्पणादपि वचनादेकरूपप्रायश्चित्ताविरोधः ॥१६८॥

एतैर्व्रतैरपोहेत पापं स्तेयकृतं द्विजः। अगम्या गमनीयन्तु व्रतैरेभिरपानुदेत्॥ १६९ ॥

एतैरिति। एतैरुक्तैः प्रायश्चित्तैः स्तेयजनितम्पापं द्विजाति रपनुदेत्। अगम्यागमननिमित्तं पुनः एभिर्व्वक्ष्यमाणैर्व्रतै र्न्निर्हरेत्॥ १६९ ॥

गुरुतल्पव्रतं कुर्य्याद्रेतः सिक्त्वा स्वयोनिषु। सख्युः पुत्रस्य च स्त्रीषु कुमारीष्वन्त्यजासु च॥ १७०॥

गुरुतल्पेति। स्वयोनिषु सोदर्य्यभगिनीषु तथा मित्रभार्य्यासु पुत्रपत्नीषु कुमारीषु चाण्डालीषु प्रत्येकं रेतः सिक्त्वा गुरुदार गमनप्रायश्चित्तं कुर्य्यात्। अत्रापि ज्ञानाभ्यासाद्यनुबन्धा पेक्षया मरणान्तिकं अतएव रेतः सिक्त्वा कुमारीषु चाण्डाली ष्वन्त्यजासु च। सपिण्डापत्यदारेषु प्राणत्यागो विधीयते इति यमेन मरणान्तिकमुपदिष्टं अज्ञानात्तद्व्रतम्॥ १७०॥

पैतृष्वस्रेयीं भगिनीं स्वस्रीयां मातुरेव च। मातुश्च भ्रातुस्तनयां गत्वा चान्द्रायणञ्चरेत्॥ १७१ ॥

पैतृष्वस्रेयीमिति। पितृष्वसुर्मातृष्वसुश्च दुहितरं भगिनीं

मातुश्च सोदर्य्यभ्रातुर्दुहितरं सोदर्य्यभगिनीमिव निषिद्ध गमनां गत्वा चान्द्रायणं कुर्य्यात् सकृदज्ञानव्यभिचारिता विषयं अल्पत्वात्॥ १७१ ॥

एतास्तिस्रस्तु भार्य्यार्थे नोपयच्छेत्तु बुद्धिमान्।
ज्ञातित्वेनानुपेयास्ताः पतति ह्युपयन्नधः॥ १७२॥

एता इति। तिस्र एताः पैतृष्वस्रेय्याद्याः भार्य्यार्थे प्राज्ञो नोद्वहेत् ज्ञातित्वेन बान्धवत्वेन ता नोपगन्तव्याः यस्मादेता उपयन् उपगच्छन्नरकं याति। असपिण्डा च या मातुरित्य नेन निषेधसिद्धौ दाक्षिणात्याचारदर्शनेन निषे-दार्ढ्यार्थं पुनर्व्वचनम्॥ १७२॥

अमानुषीषु पुरुष उदक्यायामयोनिषु। रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत्॥ १७३॥

अमानुषीष्विति। अमानुषीषु वडवाद्यासु न गवि। गोष्ववकीर्णे संवत्सरम्प्राजापत्यञ्चरेत् इति शंखलिखितादिभिर्गुरु प्रायश्चित्ताभिधानात्। तथा रजस्वलायां योनितस्त्वन्यत्र स्त्रियां जलेच रेतःसेकं कृत्वा पुरुषः सान्तपनं कृच्छ्रं कुर्य्यात् ॥ १७३॥

मैथुनन्तु समासेव्य पुंसि योषिति वा द्विजः। गोयानेऽप्सु दिवा चैव सवासाः स्नानमाचरेत्॥१७४॥

मैथुनमिति। यत्र क्वापि देशे पुरुषे मैथुनं सेवित्वा स्त्रियां वा गोयाने शकटादौ जले दिवाकाले च मैथुनं सेवित्वा सवस्त्रः स्नायात्॥ १७४॥

चण्डालान्त्यस्त्रियो गत्वा भुक्त्वा च प्रतिगृह्य च। पतत्यज्ञानतो विप्रो ज्ञानात्साम्यन्तु गच्छति॥१७५॥

चण्डालेति चण्डालस्यान्त्यजानाञ्च म्लेच्छशवरादीनां अज्ञानतो ब्राह्मणः स्त्रियो गत्वा तेषाञ्चान्नम्भुक्त्वा तेभ्यः प्रतिगृह्य पतति पतितस्य प्रायश्चित्तं कुर्य्यात्। एतच्च गुरुत्वादभ्यासतो भोजनप्रतिग्रहविषयं। ज्ञानात्तु तेषां स्त्रीगमनं कृत्वा समानतां गच्छति एतच्च प्रायश्चित्तगौरवार्थम्॥ १७५॥

विप्रदुष्टां स्त्रियम्भर्त्ता निरुन्ध्यादेकवेश्मनि। यत्पुंसः परदारेषु तच्चैनाञ्चारयेद्व्रतम्॥ १७६॥

विप्रदुष्टामिति। विशेषेण प्रदुष्टामिच्छया व्यभिचारिणीमित्यर्थः भर्त्ता निरुन्ध्यात्पत्नीकार्य्येभ्यो निवर्त्त्य निगडबद्धामिव एकगृहे धारयेत्। यच्च पुरुषस्य सजातीयपरदारगमने

प्रायश्चित्तं तदेवैनां कारयेत् ततश्च स्त्रीणामर्द्धं प्रदातव्यमिति यद्वशिष्ठादिभिरुक्तं तदनिच्छया व्यभिचारेण कर्त्तव्यम् ॥ १७६ ॥

सा चेत्पुनः प्रदुष्येत्तु सदृशेनोपयन्त्रिता । कृच्छ्रं चान्द्रायणञ्चैव तदस्याः पावनं स्मृतम् ॥ १७७ ॥

सा चेदिति । सा स्त्री सजातीयगमनेन सकृद्दुष्टा कृतप्रायश्चित्ता यदि पुनः सजातीयेनाभ्यर्थिता सती तद्गमनं कुर्यात्तदाऽस्याः प्रायश्चित्तं प्राजापत्यं कृच्छ्रं चान्द्रायणञ्च शोधनं मन्वादिभिः स्मृतम् ॥ १७७ ॥

यत्करोत्येकरात्रेण वृषलीसेवनाद्द्विजः । तद्भैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ॥ १७८ ॥

यदिति । वृषल्यत्र चण्डाली प्रायश्चित्तगौरवात् चण्डालीगमने यदेकरात्रेण ब्राह्मणः पापमर्जयति तद्भैक्ष्याशी नित्यं सावित्र्यादिकञ्जपन् त्रिभिर्वर्षैरपनुदति । तथा चापस्तंबः । यदेकरात्रेण करोति पापं कृष्णं वर्णं ब्राह्मणः सेवमानः । चतुर्थकाल उदक अात्मजापी भैक्षचारी त्रिभिर्वर्षैस्तद्व्यपोहति पापम् । मेधातिथिस्तु इत्थमेव व्याख्यातवान् । गोविन्दराजस्तु अक्रमपरिणीतशूद्रागमनप्रायश्चित्तमिदमाह ॥ १७८ ॥

एषा पापकृतामुक्ता चतुर्णामपि निष्कृतिः। पति
तैः सम्प्रयुक्तानामिमाः शृणुत निष्कृतीः॥ १७९ ॥

एषेति। इयं हिंसाऽभक्ष्यभक्षणस्तेयागम्यागमनकारि
णाञ्चतुर्णामपि पापकृतां विशुद्धिरुक्ता। इदानीं साक्षात्पाप
कृद्भिः सह संसर्गिणामिमा वक्ष्यमाणाः संशुद्धीः शृणुत ॥१७९॥

संवत्सरेण पतति पतितेन सहाचरन्। याज
नाध्यापनाद्यौनान्न तु यानासनाशनात्॥ १८० ॥

संवत्सरेणेति। पतितेन सह संसर्गमाचरन् एकयान
गमनैकासनोपवेशनैकपंक्तिभोजनरूपान्संसर्गानाचरन्संवत्सरेण
पतति न तु याजनाध्यापनाद्यौनात् संवत्सरेण पतति किन्तुसद्य
एवेत्यर्थः अध्यापनमत्रोपनयनपूर्व्वकं सावित्रीश्रावणं। याज
नादीनाञ्च सद्यः पातित्यमाह देवलः। याजनं योनिसम्बन्धं
स्वाध्यायं सह भोजनं। कृत्वा सद्यः पतन्त्येते पतितेन न संशयः।
विष्णुः। आसंवत्सरात्पतति पतितेन सहाचरन्। सह यानासना
श्नाशात् यौनात्तु सद्य एव हि। बौधायनः। संवत्सरेण पतति पति
तेन सहाचरन्।याजनाध्यापनाद्यौनात्सद्यो न शयनासनादिति।
गोविन्दराजस्तु। याजनादीनान्त्रयाणां संवत्सरेण पातित्य
हेतुत्वं सहासनादीनां लघुत्वान्न संवत्सरेण किन्तु तस्मादूर्द्ध्वं

मिति व्याचष्टे। अस्मदीयमनुव्याख्या मुनिव्याख्यानुसारिणी। नैनां गोविन्दराजस्य कल्पनामनुरुन्ध्महे ॥ १८० ॥

यो येन पतितेनैषां संसर्गं याति मानवः। स तस्यैव व्रतं कुर्य्यात्तत्संसर्गविशुद्धये॥ १८१ ॥

यो येनेति। पतितशब्दोयम्पापकारिवचनः सकलपापिनाम विशेषपाठात् एषां पतितानां मध्ये यो येन पापकारिणा सह पूर्व्वोक्तं संसर्गं करोति स तस्यैव व्रतरूपं प्रायश्चित्तं कुर्य्यात् न तु मरणान्तिकमित्यभिहितं तदपि व्रतं संसर्गिणा क्रियमाणं ब्रह्महा द्वादश समा इत्यादिकम्पादहीनं कर्त्तव्यम्। तथा च व्यासः। यो येन संसृजेद्वर्षं सोपि तत्समतामियात्। पादन्यूनं चरेत्सोपि तस्य तस्य व्रतं द्विजः ॥ १८१ ॥

पतितस्योदकङ्कार्य्यं सपिण्डैर्ब्बान्धवैर्वहिः। निन्दितेहनि सायाह्ने ज्ञात्यृत्विग्गुरुसन्निधौ॥ १८२ ॥

पतितस्येति। महापातकिनो जीवत एव प्रेतस्योदकक्रिया वक्ष्यमाणरीत्या सपिण्डैः समानोदकैश्च ग्रामाद्बहिर्गत्वा ज्ञातिऋत्विक् गुरुसन्निधाने रिक्तायां नवम्यां तिथौ दिनान्तेकर्त्तव्या ॥ १८२ ॥

दासी घटमपां पूर्णम्पर्य्यस्येत्प्रेतवत्पदा। अहोरात्रमुपासीरन्नशौचं बान्धवैः सह॥ १८३॥

दासीति। सपिण्डसमानोदकप्रयुक्ता दासी उदकपूर्णं घटं प्रेतवदिति दक्षिणाभिमुखीभूय पादेन क्षिपेत् यथा स निरुदको भवति तदनु ते सपिण्डास्समानोदकैस्सहाहोरात्रमशौचमाचरेयुः॥ १८३॥

निवर्त्तेरंश्च तस्मात्तु सम्भाषणसहासने। दायाद्यस्य प्रदानञ्च यात्रा चैव हि लौकिकी॥ १८४॥

निवर्त्तेरन्निति। तस्मात्पतितात्सपिण्डादीनां सम्भाषणमेकासनोपवेशनं च तस्मै ऋक्थप्रदानं सांवत्सरिकादौ निमन्त्रणादिरूपो लोकव्यवहार एतानि निवर्त्तेरन्॥ १८४॥

ज्येष्ठता च निवर्त्तेत ज्येष्ठावाप्यञ्च यद्धनम्। ज्येष्ठांशम्प्राप्नुयाच्चास्य यवीयान् गुणतोधिकः॥ १८५॥

ज्येष्ठतेति। ज्येष्ठस्य यत्प्रत्युत्थानादिकङ्कार्य्यन्तत्तस्य न कार्य्यं ज्येष्ठलभ्यं च तस्य विंशत्युद्धारादिकं धनं न देयं यद्यपि ऋक्थप्रदानप्रतिषेधादेवाप्युद्धारप्रतिषेधः सिद्धः तथापि यवीयसस्तत्प्राप्त्यर्थमनूद्यते तस्यैव ज्येष्ठस्य सम्बन्धिधनं सोद्धारांशन्तदनुजो गुणाधिको लभते॥ १८५॥

प्रायश्चित्ते तु चरिते पूर्णकुम्भमपान्नवम्। तेनैव सार्द्धम्प्रास्येयुः स्नात्वा पुण्ये जलाशये॥ १८६॥

प्रायश्चित्त इति । कृते पुनः पतितेन प्रायश्चित्ते सपिण्ड समानोदकास्तेनैव कृतप्रायश्चित्तेन सह पवित्रे जलाधारे स्नात्वा जलपूर्णन्नवं घटम्प्रक्षिपेयुः इह नवघटग्रहणाद्दासी घट मित्यत्र कृतोपयोगघटः प्रतीयते॥ १८६ ॥

सत्वप्सु तं घटम्प्रास्य प्रविश्य भवनं स्वकम्। सर्व्वाणि ज्ञातिकार्याणि यथापूर्व्वं समाचरेत्॥ १८७॥

सत्विति। स कृतप्रायश्चित्तः तत्पूर्वोक्तघटं जलमध्ये क्षिप्त्वा ततः स्वकीयभवनं प्रविश्य यथापूर्वं सर्व्वाणि ज्ञातिकर्माणि कुर्य्यात्॥ १८७॥

एतदेवविधिं कुर्य्याद्योषित्सु पतितास्वपि। वस्त्रान्न पानन्देयन्तु वसेयुश्च गृहान्तिके॥ १८८॥

एतदिति। स्त्रीष्वपि पतितासु एवमेव पतितस्योदकं कार्य मित्यादिविधिं भर्त्रादिसपिण्डसमानोदकवर्गः कुर्यात। ग्रासा च्छादनानि पुनराभ्यो देयानि गृहसमीपे चासां वासार्थं कुटी देया॥ १८८ ॥

एनस्विभिरनिर्णिक्तैर्नार्थङ्किंचित्सहाचरेत्। कृत
निर्णेजनांश्चैव न जुगुप्सेत कर्हिचित् ॥ १८९ ॥

एनस्विभिरिति। पापकारिभिरकृतप्रायश्चित्तैः सह दान
प्रतिग्राहादिकमर्थं किञ्चिन्नानुतिष्ठेत् कृतप्रायश्चित्तान्नैव कदा
चिदपि पूर्व्वकृतपापत्वेन निन्देत्किन्तु पूर्व्ववद्व्यवहरेत् ॥ १८९ ॥

बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्म्मतः।
शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत् ॥ १९० ॥

अस्यापवादमाह बालघ्नानिति। बालं यो हतवान् कृतो
पकारं अपकाराचरणेन यो विनाशितवान् प्राणरक्षार्थमागतं
यो हतवान् स्त्रियञ्च यो व्यापादितवान् एतान् यथावत्कृत
प्रायश्चित्तानपि संसर्गितया न परिवसेत् ॥ १९० ॥

येषां द्विजानां सावित्री नानूच्येत यथाविधि। तां
श्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेत् ॥ १९१ ॥

येषामिति। येषां ब्राह्मणक्षत्रियविशां आनुकल्पिककालेप्युप
नयनं यथाशास्त्रं न कृतवान् तान् प्राजापत्यत्रयं कारयित्वा

यथाशास्त्रमपनयेत्। यत्तु याज्ञवल्क्यादिभिरात्यस्तोमादि प्रायश्चित्तमुक्तन्तेन महास्य गुरुलाघवमनुसन्धाय जातिशक्त्या द्यपेक्षो विकल्पो मन्तव्यः॥ १९१॥

प्रायश्चित्तं चिकीर्षन्ति विकर्म्मस्थास्तु ये द्विजाः।
ब्रह्मणा च परित्यक्तास्तेषामप्येतदादिशेत्॥ १९२॥

प्रायश्चित्तमिति। ये प्रतिषिद्धशूद्रसेविनो द्विजास्ते चोपनीता अपि अनधीतवेदाः प्रायश्चित्तं कर्त्तुमिच्छन्ति तेषामप्येतत्प्राजापत्यत्रयमुपदिशेत्॥ १९२॥

यद्गर्हितेनार्ज्जयन्ति कर्म्मणा ब्राह्मणा धनम्।
तस्योत्सर्गेण शुद्ध्यन्ति जप्येन तपसैव च॥ १९३॥

यदिति। गर्हितेन कर्म्मणा निषिद्धदुःप्रतिग्रहादिना ब्राह्मणा यद्धनमर्ज्जयन्ति तस्य धनस्य त्यागेन जपतपाभ्यां वक्ष्यमाणाभ्यां शुद्ध्यन्ति धनत्यागेन च प्रायश्चित्तविधानात् बहुमूल्ये च करितुरगादौ अल्पमूल्ये च लौहादौ परिगृहीते तुल्यप्रायश्चित्ताभिधानमुपपन्नं एवमविक्रय्यविक्रयादावपि ॥ १९३॥

जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः। मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥१९४॥

जपित्वेति। त्रीणि सावित्रीसहस्राणि जपित्वा गोष्ठवासी मासं क्षीराहारो भूत्वा असत्प्रतिग्रहजनितात्पापान्मुक्तो भवति। शूद्रप्रतिग्रहादावपि एतदेव प्रायश्चित्तं द्रव्यदोषेण च दातृदोषेणापि प्रतिग्रहस्य गर्हितत्वाविशेषादिति ॥ १९४ ॥

उपवासकृशन्तन्तु गोव्रजात्पुनरागतम्। प्रणतं परिपृच्छेयुः साम्यं सौम्येच्छसीति किम् ॥ १९५ ॥

उपवासेति। केवलक्षीराहारेण इतरभोजननिवृत्त्या कृशदेहं गोष्ठात्प्रत्यागतं प्रणतं नम्रीभूतं किमस्माभिः सह साम्यमिच्छसि पुनरसत्प्रतिग्रहं न करिष्यसीत्येवन्धर्म्मं ब्राह्मणाः परिपृच्छेयुः ॥ १९५ ॥

सत्यमुक्त्वा तु विप्रेषु विकिरेद्यवसङ्गवाम्। गोभिः प्रवर्त्तिते तीर्थे कुर्य्युस्तस्य परिग्रहम् ॥ १९६ ॥

सत्यमिति। सत्यमेतत्पुनरसत्प्रतिग्रहं न करिष्यामीत्येवं ब्राह्मणेषूक्त्वा घासं गवां दद्यात्। तस्मिन् यवसभक्ष्यमाणे देशे गोभिः पवित्रीकृतत्वात्तीर्थीभूते ब्राह्मणास्तस्य संव्यवहारे स्वीकारं कुर्य्युः ॥ १९६ ॥

आत्यानां याजनं कृत्वा परेषामन्त्यकर्म्म च।
अभिचारमहीनञ्च त्रिभिः कृच्छ्रैर्व्यपोहति ॥१९७॥

आत्यानामिति। आत्यानामत ऊर्द्धं त्रयोऽप्येते इत्युक्तानां आत्यस्तोमादियाजनं कृत्वा पितृगुर्व्वादिव्यतिरिक्तानाञ्च निषिद्धौर्द्धदेहिकदाहश्राद्धादि कृत्वा अभिचारञ्च श्येनादिकं अभिचारोऽनभिचारणीयस्य अहीनं यागविशेषः अहीनयजनमशुचिकरमिति श्रुतेः। त्रिरात्रादि तस्य याजनं कृत्वा त्रिभिः कृच्छ्रैर्विशुद्ध्यति॥ १९७॥

शरणागतम्परित्यज्य वेदं विप्लाव्य च द्विजः। संवत्सरं यवाहारस्तत्पापमपसेधति ॥ १९८ ॥

शरणागतमिति। शरणागतम्परित्राणार्थमुपगतं शक्तः सन्नुपेक्षते द्विजातिरनध्याप्यञ्च वेदमध्याप्य तज्जनितम्पापं संवत्सरं यवाहारोऽपनुदति ॥ १९८ ॥

श्वशृगालखरैर्दष्टो ग्राम्यैः क्रव्याद्भिरेव च। नराश्वोष्ट्रवराहैश्च प्राणायामेन शुद्ध्यति ॥ १९९ ॥

श्वशृगालेति। कुक्कुरशृगालगर्द्दभनराश्ववराहाद्यैर्ग्राम्यैस्तामसांसादैर्मार्ज्जारादिभिर्दष्टः प्राणायामेन शुद्ध्यति॥ १९९॥

षष्ठान्नकालता मासं संहिताजप एव वा। होमाश्च साकला नित्यमपांक्त्यानां विशोधनम्॥ २००॥

षष्ठान्नेति। अपांक्त्या ये स्तेनपतिताः क्लीवा इत्यादिनोक्तास्तेषां विशेषतोऽनुपदिष्टप्रायश्चित्तानां मासं त्र्यहमभुक्त्वा तृतीयेऽह्नि सायम्भोजनं वेदसंहिताजपो देव कृतस्यैनसोऽवय जनमसीत्यादिभिरष्टभिर्मन्त्रैरष्टौ होमाः प्रत्येकं एतत्समुदितं पापशोधनम्॥ २००॥

उष्ट्रयानं समारुह्य खरयानन्तु कामतः। स्नात्वा तु विप्रो दिग्वासाः प्राणायामेन शुद्ध्यति॥ २०१॥

उष्ट्रयानमिति। उष्ट्रैर्युक्तं यानं शकटादि एवं खरयानमपि तत्कामत आरुह्य अव्यवधान उष्ट्रखराभ्यां याने प्राणायामवञ्जलन्नग्नश्च कामतः स्नानं कृत्वा प्राणायामेन शुद्धो भवति॥ २०१॥

विनाद्भिरप्सु वाप्यार्त्तः शारीरं सन्निवेश्यच। सचेलो वहिराप्लुत्य गामालभ्य विशुद्ध्यति॥ २०२॥

विनेति। असन्निहितजले जलमध्ये वा वेगार्त्तो मूत्रपुरीषं वा

कृत्वा सवासा बहिर्ग्रामात् नद्यादौ स्नात्वा गाञ्च स्पृष्ट्वा विशुद्धो भवति ॥ २०२ ॥

वेदोदितानां नित्यानां कर्म्मणां समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम् ॥ २०३ ॥

वेदेति। वेदविहितानां कर्म्मणामग्निहोत्रादीनां अनुपदिष्टप्रायश्चित्तविशेषाणां परिलोपे स्नातकव्रतानाञ्चतुर्थाध्यायोक्तानामतिक्रमे सत्येकाहोपवासं प्रायश्चित्तं कुर्य्यात् ॥ २०३ ॥

हुंकारम्ब्राह्मणस्योक्का त्वङ्कारञ्च गरीयसः।
स्नात्वानश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥ २०४ ॥

हुंकारमिति। हुं तूष्णीं स्थीयतामित्याद्येपं ब्राह्मणस्य कृत्वा त्वं कारञ्च विद्याद्यधिकस्य उक्का तद्दिनकालादारभ्याहःशेषं यावत्स्नात्वा भोजननिवृत्तः पादोपग्रहणेनापगतकोपं कुर्य्यात् ॥ २०४ ॥

ताडयित्वा तृणेनापि कण्ठे वाबध्य वाससा।
विवादे वा विनिर्जित्य प्रणिपत्य प्रसादयेत् ॥ २०५॥

ताडयित्वेति। अक्रतं ब्राह्मणन्तृणेनापि ताडयित्वा कण्ठे वा वस्त्रेण वद्धा वाक्कलहेन जित्वा प्रणिपातेन प्रसादयेत् ॥ २०५ ॥

अवगूर्य्य त्वब्दशतं सहस्रमभिहत्य च। जिघांसया ब्राह्मणस्य नरकम्प्रतिपद्यते॥ २०६ ॥

अवगूर्य्येति। ब्राह्मणस्य हननेच्छया दण्डमुद्यम्य वर्षशतं नरकं प्राप्नोति। दण्डादिना पुनः प्रहत्य वर्षसहस्रं नरकं प्राप्नोति ॥२०६॥

शोणितं यावतः पांशून्संगृह्णाति महीतले। तावन्त्यब्दसहस्राणि तत्कर्त्ता नरके वसेत्॥ २०७॥

शोणितमिति। प्रहतस्य ब्राह्मणस्य रुधिरं यावत्संख्यकान् रजःकणान् भूमौ पिण्डीकरोति तावत्संख्यकानि वर्षसहस्राणि तत्शोणितोत्पादको नरके वसेत्॥ २०७॥

अवगूर्य्य चरेत्कृच्छ्रमतिकृच्छ्रन्निपातने। कृच्छ्रातिकृच्छ्रौ कुर्व्वीत विप्रस्योत्पाद्य शोणितम्॥२०८॥

अवेति। ब्राह्मणस्य हननेच्छया दण्डाद्युद्यमने कृच्छ्रं कुर्य्यात् दण्डादिप्रहारे दत्ते अतिकृच्छ्रं वक्ष्यमाणञ्चरेत् रुधिरमुत्पाद्य कृच्छ्रातिकृच्छ्रौ कुर्व्वीत॥ २०८॥

अनुक्तनिष्कृतीनान्तु पापानामपनुत्तये। शक्तिञ्चावेक्ष्य पापञ्च प्रायश्चित्तम्प्रकल्पयेत् ॥ २०९ ॥

अनुक्तेति। अनुक्तप्रायश्चित्तानां यथा प्रतिलोमजवधादि कृतानां पापानां निर्हरणार्थङ्कर्त्तुः शरीरधनादि सामर्थ्यमवेक्ष्य पापञ्च ज्ञानाज्ञानसकृदावृत्त्यनुबन्धादिरूपेण ज्ञात्वा प्रायश्चित्तं प्रकल्पयेत् ॥ २०९ ॥

यैरभ्युपायैरेनांसि मानवो व्यपकर्षति। तान्वोऽभ्युपायान्वक्ष्यामि देवर्षिपितृसेवितान् ॥ २१० ॥

यैरिति। यैर्हेतुभिर्मनुष्यः पापान्यपनुदति तान् पापनाशहेतून्देवर्षिपितृभिरनुष्ठितान् युष्माकं वक्ष्यामि ॥ २१० ॥

त्र्यहम्प्रातस्त्र्यहं सायन्त्र्यहमद्यादयाचितं। त्र्यहम्परञ्च नाश्नीयात्प्राजापत्यञ्चरन् द्विजः ॥ २११ ॥

त्र्यहमिति। प्राजापत्याख्यं कृच्छ्रमाचरन् द्विजातिराद्यन्दिनत्रयं प्रातर्भुञ्जीत। प्रातः शब्दोऽयम्भोजनानामौचित्यात्तन्दिवाकालपरः। अतएव वशिष्ठः। त्र्यहन्दिवा भुङ्क्ते नक्तमत्ति च त्र्यहं त्र्यहं अयाचितव्रतं त्र्यहं न भुङ्क्ते इति कृच्छ्रः। आपस्तम्बोप्याह। त्र्यहमनक्ताश्यदिवाशी च ततस्त्र्यहमयाचितव्रतस्त्र्यहं नाश्नाति किञ्चन इति कृच्छ्रद्वादशरात्रस्य

विधिः। अपरञ्च दिनत्रयं सायंसन्ध्यायामतीतायां भुञ्जीत। अन्यद्दिनत्रयमयाचितन्तावदन्नम्भुञ्जीत शेषञ्च दिनत्रयं न किञ्चिदश्नीयात्। अत्र ग्राससंख्यापरिमाणपेक्षायाम्पराशरः। सायं द्वात्रिंशतिर्ग्रासाः प्रातः षड्विंशतिस्तथा। अयाचिते चतुर्विंशं परञ्चानशनं स्मृतम्। कुक्कुटाण्डप्रमाणञ्च यावांश्च प्रविशेन्मुखं। एतं ग्रासं विजानीयात् शुद्ध्यर्थं कायशोधनम्। हविष्यञ्चान्नमश्नीयाद्यथा रात्रौ तथा दिवा। त्रींस्त्रीण्यहानि शास्त्रीयान् ग्रासान् संख्याकृतान् यथा। अयाचितन्तथैवाद्यादुपवासस्त्र्यहम्भवेत्॥ २११॥

गोमूत्रङ्गोमयं क्षीरन्दधि सर्पिः कुशोदकम्। एकरात्रोपवासश्च कृच्छ्रं सान्तपनं स्मृतम्॥ २१२॥

गोमूत्रमिति। गोमूत्रादि एकीकृत्य एकस्मिन्नहनि भक्षयेत् नान्यत्किञ्चिदद्यात्। अपरदिने चोपवास इत्येतत् सान्तपनं कृच्छ्रं स्मृतं यदा तु गोमूत्रादिषट् प्रत्येकं षड्दिनान्युपभुज्य सप्तमे दिने चोपवासः तदा महासान्तपनम्भवति। तथा च याज्ञवल्क्यः। कुशोदकञ्च गोक्षीरन्दधि मूत्रं शकृद्घृतम्। जग्ध्वा परेऽह्न्युपवसेत् कृच्छ्रं सान्तपनञ्चरन्। पृथक् सान्तपनद्रव्यैः षडहः सोपवासिकः। सप्ताहेन तु कृच्छ्रोयं महासान्तपनं स्मृतम्॥ २१२॥

२ ध

एकैकं ग्रासमश्नीयात् त्र्यहाणि त्रीणि पूर्व्ववत्। त्र्यहञ्चोपवसेदन्त्यमतिकृच्छ्रञ्चरन् द्विजः॥ २१३॥

एकैकमिति। अतिकृच्छ्रं द्विजातिरनुतिष्ठन् प्रातःसायम याचितादिरूपेण एकैकं ग्रासं त्रीणि त्र्यहाणि पूर्व्ववत् भुञ्जीत अन्त्यञ्च त्र्यहं न किञ्चिद्भुञ्जीत॥ २१३॥

तप्तकृच्छ्रञ्चरन्विप्रो जलक्षीरघृतानिलान्। प्रति त्र्यहम्पिबेदुष्णान्सकृत्स्नायी समाहितः॥ २१४॥

तप्तेति। तप्तकृच्छ्रञ्चरन् द्विजातिः त्र्यहमुष्णोदकत्र्यहमु ष्णघृतत्र्यहमुष्णवायुं एकवारं स्नानं कुर्व्वन् संयतवान् पिबेत्। अत्र पराशरोक्तो विशेषः। षट्पलन्तु पिबेदम्भस्त्रिपलन्तु पयः पिबेत्। पलमेकम्पिबेत्सर्पिस्तप्तकृच्छ्रं विधीयते॥ २१४॥

यतात्मनोऽप्रमत्तस्य द्वादशाहमभोजनं। पराको नाम कृच्छ्रोयं सर्व्वपापापनोदनः॥ २१५॥

यतात्मनइति। विगतानवधानस्य संयतेन्द्रियस्य द्वाद शाहमभोजनमेव पराकाख्यः कृच्छ्रः सकृदावृत्तितारतम्येन गुरुलघुपापापनोदनः॥ २१५॥

एकैकं ह्रासयेत्पिण्डं कृष्णे शुक्ले च वर्द्धयेत्।
उपस्पृशंस्त्रिषवणमेतच्चान्द्रायणं स्मृतं ॥ २१६ ॥

एकैकमिति। सायम्प्रातर्मध्याह्नेषु स्नानं कुर्व्वाणः पौर्ण मास्याम्पञ्चदश ग्रासानश्रित्वा ततः कृष्णप्रतिपत्क्रमेणैकैकं ग्रासं ह्रासयेत्तथा चतुर्दश्यामेको ग्रासः सम्पद्यते ततोऽमावास्याया मुपोष्य शुक्लप्रतिपत्प्रभृतिभिरेकैकं ग्रासं वृद्धिं नयेत्। एवम्पौर्ण मास्याम्पञ्चदश ग्रासाः सम्पद्यन्ते एतत्पिपीलिकामध्याख्यं चान्द्रायणं स्मृतम् ॥ २१६ ॥

एतमेव विधिं कृत्स्नमाचरेद्यवमध्यमे। शुक्ल पक्षादिनियतश्चरंश्चान्द्रायणव्रतम् ॥ २१७ ॥

एतमिति। एतमेव पिण्डह्रासवृद्धित्रिषवणस्नानात्मकं विधानं यवमध्याख्ये चान्द्रायणे शुक्लपक्षमादितः कृत्वा संयतेन्द्रियश्चा न्द्रायणमनुतिष्ठन् आचरेत् ततश्च शुक्लप्रतिपदमारभ्य एकै कम्पिण्डं वर्द्धयेत् यथा पौर्णमास्यां पञ्चदश ग्रासाः सम्पद्यन्ते ततः कृष्णप्रतिपदमारभ्य एकैकं पिण्डं ह्रासयेत् यथा अमा वस्यायामुपवासो भवति ॥ २१७ ॥

अष्टावष्टौ समश्नीयात्पिण्डान्मध्यन्दिने स्थिते।
नियतात्मा हविष्याशी यतिचान्द्रायणं चरन् ॥ २१८ ॥

अष्टाविति। यतिचान्द्रायणमनुतिष्ठन् शुक्लपक्षात्कृष्णप

चाद्दा आरभ्य मासमेकं संयतेन्द्रियः प्रत्यहमष्टावष्टौ ग्रासा न्मध्यन्दिने भुञ्जीत । मध्यंदिन इति गृहस्थब्रह्मचारिणोः सायं भोजननिवृत्त्यर्थम् ॥ २१८ ॥

चतुरः प्रातरश्नीयात्पिण्डान्विप्रः समाहितः ।
चतुरोऽस्तमिते सूर्ये शिशुचान्द्रायणं स्मृतं ॥ २१९॥

चतुरः प्रातरिति । प्रातश्चतुरो ग्रासानश्नीयात् अस्तमिते च सूर्ये चतुरो ग्रासान्भुञ्जीत एतच्छिशुचान्द्रायणं मुनिभिः स्मृतं ॥ २१९ ॥

यथाकथञ्चित्पिण्डानां तिस्रोऽशीतीः समाहितः ।
मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकतां ॥२२० ॥

यथेति । नीवारादिहविष्यसम्बन्धिनां ग्रासानां द्वे शते चत्वा रिंशदधिके कदाचित् दश कदाचित्पञ्च कदाचित् षोड़श कदाचिदुपवास इत्येवमाद्यनियमेन यथाकथञ्चित्पिण्डान्मासेन संयतवान् भुञ्जानश्चन्द्रसलोकतां याति एवम्पापक्षयार्थम भ्युदयार्थञ्चेदमुक्तं अतएव याज्ञवल्क्यः । धर्म्मार्थं यश्चरेदे तच्चन्द्रस्यैतिसलोकताम् । कृच्छ्रकृत् धर्म्मकामस्तु महतीं श्रिय माप्नुयात् । अतः प्राजापत्यादिकृच्छ्रमपि अभ्युदयफलमिति याज्ञवल्क्येनोक्तम् ॥ २२० ॥

एतद्रुद्रास्तथादित्या वसवश्चाचरन् व्रतम्।
सर्व्वाकुशलमोक्षाय मरुतश्च महर्षिभिः॥ २२१ ॥

एतदिति। एतच्चान्द्रायणाख्यं व्रतं रुद्रादित्यवसुमरुतः महर्षिभिः सह सर्व्वपापनाशाय गुरुलघुपापापेक्षया सर्व्वदा वृत्तिप्रकारेण कृतवन्तः॥२२१॥

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम्।
अहिंसा सत्यमक्रोधमार्जवञ्च समाचरेत्॥ २२२॥

महेति। महाव्याहृतिभिर्भूर्भुवः स्वरेताभिः आज्यं हवि रनादेशे जुहोतिषु विधीयते इति परिशिष्टवचनात्। आज्येन प्रत्यहं होमं कुर्य्यात्। अहिंसासत्याक्रोधाकौटिल्यानि चानु तिष्ठेत् यद्यप्येतानि पुरुषार्थतया विहितानि तथापि व्रताङ्ग तयायमुपदेशः॥ २२२॥

त्रिरह्नस्त्रिर्न्निशायाञ्च सवासा जलमाविशेत्।
स्त्रीशूद्रपतितांश्चैव नाभिभाषेत कर्हिचित्॥ २२३॥

त्रिरिति। अहनि रात्रावादिमध्यावसानेषु स्नानार्थं सचेलो नद्यादिजलं प्रविशेत् एतच्च पिपीलिकामध्ययवमध्य चान्द्रायणेतरचान्द्रायणविषयम्। तयोरुपस्पर्शंस्त्रिषवणमि त्युक्तत्वात् स्त्रीशूद्रपतितैस्च सह यावद्व्रतं कदाचित्सम्भाषणं न कुर्य्यात्॥ २२३॥

स्थानासनाभ्यां विहरेदशक्तोऽधः शयीत वा।
ब्रह्मचारी व्रती च स्याद्गुरुदेवद्विजार्च्चकः॥ २२४॥

स्थानेति। अहनि रात्रौ च उत्थित आसीनश्च स्यात् न तु शयीत असामर्थ्येतु स्थण्डिले शयीत न खट्वादौ ब्रह्मचारी स्त्रीसंयोगरहित व्रती मौञ्जीदण्डादियुक्तः पालाशमथवा दण्डं शुचिर्मौञ्जीञ्च मेखलामिति यमस्मरणात्। गुरुदेव ब्राह्मणानाञ्च पूजको भवेत्॥ २२४॥

सावित्रीञ्च जपेन्नित्यं पवित्राणि च शक्तितः।
सर्व्वेष्वेव व्रतेष्वेवम्प्रायश्चित्तार्थमादृतः॥ २२५॥

सावित्रीमिति। सावित्रीञ्च सदा जपेत् पवित्राणि चाघमर्षणादीनि यथाशक्ति जपेत् एतच्च यथा चान्द्रायणे तथा प्राजापत्यादिकृच्छ्रेष्वपि यत्नवान् प्रायश्चित्तार्थमनुतिष्ठेत्॥ २२५॥

एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्॥ २२६॥

एतैरिति। लोकविदितपापात् द्विजातयः एभिरुक्तप्रायश्चित्तैर्वक्ष्यमाणपरिषदा शोधनीयाः अप्रकाशितपापांस्तु मानवान्मन्त्रैर्होमैश्च परिषदेव शोधयेत्। यद्यपि परिषदि निवेदने

रहस्यत्वस्य नाशः तथाप्यमुकपापे केनापि कृते लोकाविदिते किम्प्रायश्चित्तं स्यादिति सामान्यप्रश्ने न विरोधः ॥ २२६ ॥

ख्यापनेनानुतापेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पपात्तथा दानेन चापदि ॥ २२७॥

ख्यापनेनेति। पापकारी नरो लोकेषु निजपापकथनेन धिङ्मामतिपापकारिणमिति पश्चात्तापेन शुद्ध्यति। तपसा चोग्ररूपेण सावित्रीजपादिना च पापान्मुच्यते तपस्यशक्तो दानेन च पापान्मुक्तो भवति। ख्यापनं चेदम्प्रकाशप्रायश्चित्ताङ्गभूतं न रहस्यप्रायश्चित्ताङ्गम्। रहस्यत्वहानिप्रसङ्गात् अनुतापस्य प्रकाशरहस्याङ्गमेव दानेनेति प्राजापत्यव्रते एकधेनुविधानात् धेनुस्य पञ्चपुराणीयात्रिपुराणीयावेति एतेन ब्रह्महत्यानिमित्तके द्वादशवार्षिकव्रते माषिकार्द्धद्वयप्राजापत्यात् वत्सरे त्रिंशद्धेनवो भवन्ति द्वादशभिर्वर्षैः षष्ठ्यधिकशतत्रयं धेनवो भवन्तीति ॥ २२७ ॥

यथा यथा नरोऽधर्म्मं स्वयं कृत्वानुभाषते। तथा तथा त्वचेवाहिस्तेनाधर्म्मेण मुच्यते ॥ २२८ ॥

यथेति। यथा यथा स्वयम्पापं कृत्वा नरो भाषते लोके ख्यापयति तथा तथा तेन पापेन सर्प्प इव जीर्णत्वचा मुच्यते इति ख्यापनविधेरनुवादः ॥ २२८ ॥

यथा यथा मनस्तस्य दुष्कृतङ्कर्म्म गर्हति। तथा तथा शरीरंतत्तेनाधर्म्मेण मुच्यते॥ २२९॥

यथेति। तस्य पापकारिणो मनो यथा यथा दुष्कृतङ्कर्म्म निन्दति तथा तथा शरीरं जीवात्मा तेनाधर्म्मेण मुक्तो भवति अयमनुतापानुवाद इति॥ २२९॥

कृत्वा पापं हि सन्तप्य तस्मात्पापात्प्रमुच्यते। नवं कुर्य्यात्पुनरिति निवृत्त्या पूयते तु सः॥ २३०॥

कृत्वेति। पापं कृत्वा पश्चात्सन्तप्य तस्मात्पापान्मुच्यते इत्युक्तमपि नैवं कुर्य्यात्पुनरित्येतदर्थमनूदितं यदा तु पश्चात्तापो नैवं पुनः करिष्यामीत्येवं निवृत्तिरूपसङ्कल्पफलकः स्यात्तदा सुतरां तस्मात्पापात्पूतोभवतीति एतच्च निवृत्तिसङ्कल्पस्य प्रकाशाप्रकाशप्रायश्चित्ताङ्गविधानार्थं॥ २३०॥

एवं सञ्चिन्त्य मनसा प्रेत्य कर्म्मफलोदयम्। मनोवाङ्मूर्त्तिभिर्नित्यं शुभङ्कर्म्म समाचरेत्॥ २३१॥

एवमिति। एवं शुभाशुभानां कर्म्मणां परलोक इष्टानिष्टफलं मनसा विचार्य्य मनोवाक्कायैः शुभमेव सर्व्वङ्कर्म्म कुर्य्यात्। इष्टफलत्वात् नाशुभं नरकादिदुःखहेतुत्वात्॥ २३१॥

अज्ञानाद्यदि वा ज्ञानात्कृत्वा कर्म्म विगर्हितम्।
तस्माद्विमुक्तिमन्विच्छन् द्वितीयन्न समाचरेत्॥२३२॥

अज्ञानादिति। प्रमादादिच्छातो वा निषिद्धङ्कर्म्म कृत्वा तस्मात्पापान्मुक्तिमिच्छन् पुनस्तन्न कुर्यात्। एतच्च पुनः करणे प्रायश्चित्तगौरवार्थम्। अतएव देवलः। विधेः प्राथमिकादस्माद्द्वितीये द्विगुणम्भवेदिति ॥ २३२ ॥

यस्मिन्कर्म्मण्यस्य कृते मनसः स्यादलाघवं।
तस्मिंस्तावत्तपः कुर्य्याद्यावत्तुष्टिकरं भवेत्॥ २३३ ॥

यस्मिन्निति। अस्य पापकारिणो यस्मिन् प्रायश्चित्ताख्ये कर्म्मण्यनुष्ठिते न चित्तस्य सन्तोषः स्यात्तस्मिन् तदेव प्रायश्चित्तन्तावदावर्त्तयेत् यावन्मनसः सन्तोषः प्रसादश्च स्यात्॥ २३३ ॥

तपोमूलमिदं सर्व्वन्दैवमानुषकं सुखम्। तपोमध्यं बुधैः प्रोक्तं तपोऽन्तं वेददर्शिभिः॥ २३४॥

तप इति। यदेतत्सर्व्वं देवानां मनुष्याणां च सुखं तस्य तपः कारणं तपसैव च तस्य स्थितिः तपोऽन्तः प्रतिनियतावधिरेव देवादिसुखस्य तपसा जननादिभि र्वेदार्थज्ञैरुक्तं। उक्तप्राजापत्यादिप्रायश्चित्तात्मकतपःप्रसङ्गेन चेदं वक्ष्यमाणञ्च सर्व्वतपोमाहात्म्यकथनम्॥ २३४॥

ब्राह्मणस्य तपो ज्ञानन्तपः क्षत्रस्य रक्षणम् ।
वैश्यस्य तु तपो वार्त्ता तपः शूद्रस्य सेवनम् ॥२३५॥

ब्राह्मणस्येति । ब्राह्मणस्य ब्रह्मचर्य्यात्मकवेदान्तावबोधनं तपो राजन्यस्य रक्षणन्तपः वैश्यस्य कृषिवाणिज्यपाशुपाल्यादिकन्तपः शूद्रस्य ब्राह्मणपरिचर्य्या तप इति वर्णविशेषेणोत्कर्षबोधनार्थम् ॥ २३५ ॥

ऋषयः संयतात्मानः फलमूलानिलाशनाः ।
तपसैव प्रपश्यन्ति त्रैलोक्यं सचराचरम् ॥ २३६ ॥

ऋषय इति । ऋषयो वाङ्मनःकायनियमोपेताः फलमूलवायुभक्षाः तपसैव जङ्गमस्थावरसहितमृथिव्यन्तरीक्षस्वर्गात्मकं लोकत्रयमेकदेशस्थाः सन्तो निष्पापान्तःकरणाः प्रकर्षेण पश्यन्ति ॥ २३६ ॥

औषधान्यगदो विद्या दैवी च विविधा स्थितिः ।
तपसैव प्रसिद्ध्यन्ति तपस्तेषां हि साधनम् ॥ २३७॥

औषधानीति । औषधानि व्याध्युपशमनहेतुकानि अगदो गदाभावो नैरुज्यमिति यावत् विद्या ब्रह्मकर्म्मात्मकवेदार्थज्ञानं वेदसम्बन्धिनी च नानारूपा स्वर्गादाववस्थितिः इत्येतानि तपसैव प्राप्यन्ते । यस्मात्तप एषां प्राप्तिनिमित्तम् ॥ २३७॥

यद्दुस्तरं यद्दुरापं यद्दुर्गं यच्च दुष्करम्। सर्व्वन्तु तपसा साध्यं तपो हि दुरतिक्रमम्॥ २३८॥

यदिति। यद्दुःखेन तीर्य्यते ग्रहदोषसूचितापदादि यद्दुःखेन प्राप्यते क्षत्रियादिना यथाविश्वामित्रेण तेनैव शरीरेण ब्राह्मण्यादि यद्दुःखेन गम्यते मेरुपृष्ठादि यद्दुःखेन क्रियते गोप्रचुरदानादितत्सर्व्वन्तपसा साधितुं शक्यते। यस्मादति दुष्करकार्य्यकरणे तपोदुर्लङ्घनशक्ति॥२३८॥

महापातकिनश्चैव शेषाश्चाकार्य्यकारिणः। तपसैव सुतप्तेन मुच्यन्ते किल्बिषात्ततः॥ २३९॥

महेति। ब्रह्महत्यादिमहापातककारिणोऽन्ये उपपातकाद्यकार्य्यकारिणश्च तपसैव उक्तरूपेणानुष्ठितेन तस्मात् पापान्मुच्यन्ते उक्तस्यापि पुनर्वचनं प्रायश्चित्तस्तुत्यर्थम्॥ २३९॥

कीटाश्चाहिपतङ्गाश्च पशवश्च वयांसि च। स्थावराणि च भूतानि दिवं यान्ति तपोबलात्॥ २४०॥

कीटा इति। कीटसर्पशलभपश्वपक्षिणः स्थावराणि च वृक्षगुल्मादीनि भूतावद्धानि तपोमाहात्म्येन स्वर्गं यान्ति इति हासादौ कपोतोपाख्यानादिषु पक्षिणोऽप्यग्निप्रवेशादिकं तपः

श्रूयते कीटानां यज्जातिबहुजन्तुःखन्तत्सहनन्तपः तेन च क्षीणकल्मषा अविकारिणो जन्मान्तरकृतेन सुकृतेन दिवं यान्ति ॥ २४० ॥

यत्किञ्चिदेनः कुर्व्वन्ति मनोवाङ्मूर्त्तिभिर्ज्जनाः।
तत्सर्व्वं निर्दहन्त्याशु तपसैव तपोधनाः ॥ २४१ ॥

यत्किञ्चिदिति । यत्किञ्चित्पापं मनोवाग्देहैर्मानवाः कुर्वन्ति तत्सर्व्वम्पापं तपसैव निर्दहन्ति तपोधना इति तपएव धनमिव रक्षणीयं येषान्ते तपोधनाः ॥ २४१ ॥

तपसैव विशुद्धस्य ब्राह्मणस्य दिवौकसः।
इज्याश्च प्रतिगृह्णन्ति कामान्संवर्द्धयन्ति च ॥ २४२ ॥

तपसैवेति। प्रायश्चित्ततपसा क्षीणपापस्य ब्राह्मणस्य यागे हवींषि देवाः प्रतिगृह्णन्ति अभिलषितार्थांश्च प्रयच्छन्ति ॥ २४२ ॥

प्रजापतिरिदं शास्त्रन्तपसैवाऽसृजत्प्रभुः। तथैव
वेदानृषयस्तपसा प्रतिपेदिरे ॥ २४३ ॥

प्रजापतिरिति। हिरण्यगर्भः सकललोकोत्पत्तिस्थिति प्रलय प्रभुः तपःकरणपूर्व्वकमेवेमं ग्रन्थमकरोत्। तथैव ऋषयो वशिष्ठादयस्तपसैव मन्त्र ब्राह्मणात्मकान् वेदान् प्राप्तवन्तः ॥२४३॥

इत्येतत्तपसो देवा महाभाग्यं प्रचक्षते। सर्व्व
स्यास्य प्रपश्यन्तस्तपसः पुण्यमुत्तमम् ॥ २४४ ॥

इत्येतदिति। सर्व्वस्यास्य जन्तोर्यद्दुर्लभजन्म तत्तपसः सका शात् इत्येवन्देवाः प्रपश्यन्तः तपोमूलमिदं सर्व्वमित्यादि तपोमाहात्म्यं प्रवदन्ति ॥ २४४ ॥

वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमाः।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥ २४५ ॥

वेदेति। यथाशक्ति प्रत्यहं वेदाध्ययनं पञ्चमहायज्ञानुष्ठान मपराधसहिष्णुत्वमित्येतानि महापातकजनितान्यपि पापानि शीघ्रं नाशयन्ति किमुतान्यानि ॥ २४५ ॥

यथैधस्तेजसा वह्निः प्राप्तन्निर्दहति क्षणात्।
तथा ज्ञानाग्निना पापं सर्व्वन्दहति वेदवित् ॥ २४६ ॥

यथेति। यथाग्निः काष्ठान्यासन्नानि क्षणेनैव तेजसा निःशेषं करोति तथा ज्ञानाग्निना पापं सर्व्वं वेदार्थज्ञो ब्राह्मणो नाश यति। परमात्मज्ञानस्यैतत् पापक्षयोत्कर्षज्ञापनार्थमेतत् ॥ २४६ ॥

इत्येतदेनसामुक्तं प्रायश्चित्तं यथाविधि। अत ऊर्द्ध्वं रहस्यानां प्रायश्चित्तं निबोधत ॥ २४७ ॥

इत्येतदिति। इत्येतद्ब्रह्महत्यादीनां प्रकाशानाम्पापानां प्रायश्चित्तं यथा विध्यभिहितं अतऊर्द्ध्वमप्रकाशानाम्पापानां प्रायश्चित्तं शृणुत। अयं श्लोको गोविन्दराजेनालिखितः मेधातिथिना तु लिखित एव ॥ २४७ ॥

सव्याहृतिप्रणवकाः प्राणायामास्तु षोडश। अपि भ्रूणहणं मासात्पुनन्त्यहरहःकृताः ॥ २४८ ॥

सव्याहृतीति। सव्याहृतिसप्रणवाः सावित्रीशिरोयुक्ताःपूरककुम्भकरेचकादिविधिना प्रत्यहं षोडश प्राणायामाः कृता मासात् ब्रह्मघ्नमपि निष्पापं कुर्व्वन्ति अपिशब्दादातिदेशिकब्रह्महत्याप्रायश्चित्ताधिकृतमपि एतच्च प्रायश्चित्तं द्विजातीनामेव न स्त्रीशूद्रादेर्मन्त्रानधिकारात् ॥ २४८ ॥

कौत्सं जप्त्वाप इत्येतद्वाशिष्ठञ्च प्रतीत्यृचम्। माहित्रं शुद्धवत्यश्च सुरापोपि विशुद्ध्यति ॥ २४९ ॥

कौत्समिति। कौत्सेन ऋषिणादृष्टं अप नः शोशुचदघमित्येतत् सूक्तं वसिष्ठेन ऋषिणा दृष्टञ्च प्रतिस्तोमेभिरुषसंव

शिष्टादित्येवं ऋचं माहित्रं महित्रीणामवोऽस्त्वित्येतत् सूक्तं शुद्धवत्य एतानिन्द्रं स्तवामेत्येतास्तिस्र ऋचः प्रकृतं मासमहरहः षोडशकृत्वोऽपि जपित्वा सुरापोऽपि विशुध्यति अपिशब्दात् आतिदेशिकसुरापानप्रायश्चित्ताधिकृतोऽपि॥ २४९ ॥

सकृज्जप्त्वाऽस्य वामीयं शिवसङ्कल्पमेव च। अपहृत्य सुवर्णन्तु क्षणाद्भवति निर्म्मलः॥ २५०॥

सकृदिति। ब्राह्मणसुवर्णमपहृत्य अस्य वामीयमस्य वामस्य पलितस्य एतत् सूक्तम्प्रकृतत्वात् मासमेकं प्रत्यहमेकवारञ्जपित्वा शिवसङ्कल्पञ्च यज्जाग्रतो दूरमित्येतद्वाजसनेयके यत् पठितं तज्जपित्वा सुवर्णमपहृत्य क्षिप्रमेव निष्पापो भवति ॥२५०॥

हविष्यन्तीयमभ्यस्य न तमंह इतीति च। जपित्वा पौरुषं सूक्तं मुच्यते गुरुतल्पगः॥ २५१ ॥

हवीति। हविष्यन्तमजरं स्वर्विदामेकोनविंशतिं ऋचः न तमंहो दुरितमित्यष्टौ हविष्यन्त इति वा इति मे मनः शिवसङ्कल्प इति च सूक्तं सहस्रशीर्षापुरुष इत्येतच्च षोडशसूक्तं मासमेकं प्रत्यहमभ्यस्येति श्रवणात् प्रकृतत्वात् षोडशाभ्यासेन जपित्वा गुरुदारगः तस्मात्पापान्मुच्यते॥२५१॥

एनसां स्थूलसूक्ष्माणाञ्चिकीर्षन्नपनोदनम्।
अवेत्यृचञ्जपेदब्दं यत्किञ्चिदमितीति वा॥२५२॥

एनसामिति। स्थूलानाम्पापानां महापातकानां सूक्ष्माणाञ्च उपपातकादीनां निर्हरणं कर्त्तुमिच्छन् अवतिहेलोवरुण योरित्येतामृचं यत्किञ्चिदं वरुणदेवो जन इत्येताञ्च ऋचं इति मे मनइत्येतत् सूक्तं संवत्सरमेकं प्रत्यहं जपेत्॥२५२॥

प्रतिगृह्याप्रतिग्राह्यं भुक्त्वा चान्नं विगर्हितम्।
जपंस्तरत्समन्दीयं पूयते मानवस्त्र्यहात्॥२५३॥

प्रतिगृह्येति। स्वरूपतो महापातकिधनत्वादिना वाऽप्रति ग्राह्यं प्रतिगृह्य अन्नञ्च स्वभावकालप्रतिग्रहसंसर्गदुष्टं भुक्त्वा तरत्समन्दिधावतीत्येता ऋचश्चतस्रो जपित्वा त्र्यहं तस्मात्पा पान्मनुष्यः पूतो भवति॥२५३॥

सोमारौद्रन्तु बह्वेना मासमभ्यस्य शुद्ध्यति। स्रव न्त्यामाचरन् स्नानमर्य्यम्णामिति च त्र्यृचं॥२५४॥

सोमेति। सोमारुद्राधारयेथ्यामसुर्यमिति चतस्रः। अर्य्यमणं वरुणं मित्रञ्चेति ऋक्त्रयं नद्याञ्च स्नानं कृत्वा मास मेकं प्रत्येकमभ्यस्य बहुपापो विशुद्ध्यति बहुष्वपि पापेषु तन्त्रे णैकं प्रायश्चित्तङ्कार्य्यमिति ज्ञापकमिदम्॥२५४॥

अब्दार्द्धमिन्द्रमित्येतदेनस्वी सप्तकञ्जपेत्। अप्रशस्तन्तु कृत्वाप्सु मासमासीत भैक्षभुक्॥ २५५ ॥

अब्दार्द्धमिति। एनस्वीत्यविशेषात्सर्व्वेष्वेव पापेषु इन्द्रमित्रं वरुणमग्निन्त्वय इत्येताः सप्त ऋचः षण्मासं जपेत् अप्रशस्तं मूत्रपुरीषोत्सर्गादिकञ्जले कृत्वा मासम्भैक्षभोजी भवेत्॥ २५५ ॥

मन्त्रैः शाकलहोमीयैरब्दं हुत्वा घृतं द्विजः। सुगुर्व्वप्यपहन्त्येनो जप्त्वा वा नम इत्यृचम्॥ २५६ ॥

मन्त्रैरिति। देवकृतस्येत्यादिभिः शाकलहोममन्त्रैः संवत्सरं घृतहोमं कृत्वा नम इन्द्रस्य इत्येतां वा ऋचं संवत्सरं जपित्वा महापातकजमपि पापं द्विजातिरपहन्ति॥ २५६ ॥

महापातकसंयुक्तोऽनुगच्छेद्गाः समाहितः। अभ्यस्याब्दम्पावमानीर्भैक्षाहारो विशुद्ध्यति ॥ २५७॥

महापातकेति। ब्रह्महत्यादिमहापातकयुक्तो भिक्षालब्धाहारो वर्षमेकं संयतेन्द्रियो गवामनुगमनं कुर्वन् पावमानीरित्यृचोऽन्वहमभ्यासेन जपित्वा तस्मात्पापाद्विशुद्धो भवति ॥ २५७ ॥

अरण्ये वा त्रिरभ्यस्य प्रयतो वेदसंहिताम् ।
मुच्यते पातकैः सर्व्वैः पराकैः शोधितस्त्रिभिः॥२५८॥

अरण्य इति । त्रिभिः पराकैः पूतो मन्त्रब्राह्मणात्मिकां वेदसंहितां अरण्ये वारत्रयं अभ्यस्य वा प्रयतो वाह्याभ्यन्तर शौचयुक्तस्सर्व्वैर्म्महापातकैर्मुच्यते॥ २५८ ॥

त्र्यहन्तूपवसेद्युक्तस्त्रिरह्नोऽभ्युपयन्नपः । मुच्यते पातकैः सर्वैस्त्रिर्जपित्वाऽघमर्षणं ॥ २५९ ॥

त्र्यहमिति । त्रिरात्रमुपवसन्संयतः प्रत्यहप्रातर्मध्याह्न सायंकालेषु स्नानं कुर्व्वन् त्रिषवणस्नानकाल एव जले निमज्ज्य ऋतञ्च सत्यञ्चेति सूक्तमघमर्षणन्त्रिरावृत्तं जपित्वा सर्व्वैः पापैर्मुच्यते तत्र गुरुलघुपापापेक्षया पुरुषशक्त्याद्यपेक्षया वा वर्त्तनीयम् ॥ २५९ ॥

यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ।
तथाऽघमर्षणं सूक्तं सर्व्वपापापनोदनम् ॥ २६० ॥

यथेति । यथाऽश्वमेधयागः सर्व्वयागश्रेष्ठः सर्व्वपापक्षय हेतुस्तथाऽघमर्षणसूक्तमपि सर्व्वपापक्षयहेतुरिति अघमर्षण सूक्तोत्कर्षः॥ २६० ॥

हत्वा लोकानपीमांस्त्रीनश्नन्नपि यतस्ततः ।
ऋग्वेदं धारयन्विप्रो नैनः प्राप्नोति किञ्चन ॥२६१॥

हत्वेति। भूरादिलोकत्रयमपि हत्वा महापातक्यादीना मप्यन्नमश्नन् ऋग्वेदन्धारयन् विप्रादिः न किञ्चित्पापं प्राप्नोति। ऋग्वेदधारणन्तु रहस्यप्रायश्चित्तार्थमुक्तं ततश्च रहस्यपापे कृते ऋक्संहितां मन्त्रब्राह्मणात्मिकामभ्यसेत्॥ २६१॥

ऋक्संहितां त्रिरभ्यस्य यजुषां वा समाहितः ।
साम्नां वा सरहस्यानां सर्व्वपापैः प्रमुच्यते॥ २६२॥

तदाहऋगिति। ऋक्संहितां मन्त्रब्राह्मणात्मिकां न तु मन्त्रमात्रात्मिकां अनन्तरं वेदे त्रिवृतीति प्रत्यवमर्षात् यजुषां मन्त्रब्राह्मणानां संहितां साम्नां वा ब्राह्मणोपनिषत्संहितां वार त्रयमभ्यस्य सर्व्वपापैः प्रमुक्तो भवति॥ २३२॥

यथा महाह्रदमाप्य क्षिप्तं लोष्टं विनश्यति ।
तथा दुश्चरितं सर्व्वं वेदे त्रिवृति मज्जति॥ २६३॥

यथेति। ऋगाद्यात्मना त्रिरावर्त्तत इति त्रिवृत् यथा महाह्रदम्प्रविश्य लोष्टं विशीर्य्यते तथा सर्व्वं दुश्चरितं त्रिवृति वेदे विनश्यति॥२३३॥

ऋचो यजूंषि चान्यानि सामानि विविधानि च।
एष ज्ञेयस्त्रिवृद्वेदो यो वेदैनं स वेदवित्॥ २६४॥

त्रिवृत्त्वमेवाह ऋच इति। ऋच ऋङ्मन्त्राः यजूंषि यजुर्मन्त्राः सामानि वृहद्रथान्तरादीनि नानाप्रकाराणि अन्योन्ये षान्त्रयाणाम्पृथक् पृथक् मन्त्रब्राह्मणानि एष त्रिवृद्वेदो ज्ञातव्यो य एनं वेद स वेदविद्भवति॥ २६४॥

आद्यं यत्त्र्यक्षरम्ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता।
स गुह्योऽन्यस्त्रिवृद्वेदो यस्तं वेद स वेदवित्॥२६५॥

इति मानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां एकादशोऽध्यायः॥

आद्यमिति। सर्व्ववेदानामाद्यं यद्ब्रह्म वेदसारं अकारोकारमकारात्मकत्वेन त्र्यक्षरं यत्र त्रयो वेदाः स्थिताः सोन्यस्त्रिवृद्वेदः प्रणवाख्यो गुह्यो गोपनीयः वेदमन्त्रश्रेष्ठत्वात् परमार्थाभिधायकत्वात् परमार्थकत्वेन धारणजपाभ्यां मोक्षहेतुत्वाच्च यस्तं स्वरूपतोऽर्थतश्च जानाति स वेदवित्। प्रायश्चित्ते बहुमुनिमतालोचनाद्यन्मयोक्तं सद्व्याख्यानं खलु मुनिगिरां तद्भजध्वं गुणज्ञाः। नैतन्मेधातिथिरभिदधे नापि गोविन्दराजो व्याख्यातारो न जगुरपरेप्यन्यतो दुर्लभं वः॥ २३५॥

इति श्रीकुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तावेकादशोऽध्यायः॥

## ॥ १२ द्वादशोऽध्यायः ॥

---

चातुर्व्वर्ण्यस्य कृत्स्नोयमुक्तोधर्म्मस्त्वयानघ ।
कर्म्मणाम्फलनिर्वृत्तिं शंस नस्तत्त्वतः पराम् ॥ १ ॥

चातुर्व्वर्ण्यस्येति । हेपापरहित ब्राह्मणादिवर्णचतुष्टयस्य साान्तरप्रभवस्थायन्धर्मः त्वयोक्तः इदानीं कर्मणां शुभाशुभ फलप्राप्तिं पराञ्जन्मान्तरप्रभवां परमार्थरूपामस्माकं ब्रूहीति महर्षयो भृगुमवोचन् ॥ १ ॥

स तानुवाच धर्म्मात्मा महर्षीन्मानवो भृगुः ।
अस्य सर्व्वस्य शृणुत कर्म्मयोगस्य निर्णयम् ॥ २ ॥

स तानिति । स धर्म्मप्रधानो मनोरपत्यं भृगुरस्य सर्व्वस्य कर्म्मसम्बन्धस्य फलनिश्चयं शृणुतेति तान्महर्षीनब्रवीत् ॥ २ ॥

शुभाशुभफलङ्कर्म्म मनोवाग्देहसम्भवम् ।
कर्म्मजा गतयो नृणामुत्तमाधममध्यमाः ॥ ३ ॥

शुभेति । मनोवाग्देहहेतुकङ्कर्म्म विहितनिषिद्धरूपं सुख दुःखफलकं तज्जन्या एव मनुष्यतिर्य्यगादिभावेनोत्कृष्टमध्य

माधमापेक्षया मनुष्याणां गतयो जन्मान्तरप्राप्तयो भवन्ति। कर्म्मशब्दश्चात्र न कायचेष्टायामेव किन्तु ममेदं स्वमिति सङ्कल्परूपयोगादिध्यानाचरणादावपि क्रियामात्रे वर्त्तते ॥ ३ ॥

तस्येह त्रिविधस्यापि त्र्यधिष्ठानस्य देहिनः। दशलक्षणयुक्तस्य मनो विद्यात् प्रवर्त्तकम् ॥ ४ ॥

तस्येति। तस्य देहिसम्बन्धिनः कर्म्मणः उत्कृष्टमध्यमाधमतया त्रिप्रकारस्यापि मनोवाक्कायाश्रितस्य वक्ष्यमाणदशलक्षणोपेतस्य मन एव प्रवर्त्तकं जानीयात्। मनसा हि सङ्कल्पितमुच्यते क्रियते च। तथा तैत्तिरीयोपनिषदि तस्मात् यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्म्मणा करोतीति। ॥ ४ ॥

परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम्। वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥ ५ ॥

तानि दशलक्षणानि कर्म्माणि दर्शयितुमाह परद्रव्येष्विति। कथं परधनमन्यायेन गृह्णामीत्येवञ्चिन्तनं मनसा ब्रह्मबधादिनिषिद्धाकाङ्क्षा नास्ति परलोकः देह एवात्मेत्येवन्त्रिः प्रकारमशुभफलं मानसङ्कर्म्म एतत्त्रयविपरीतबुद्धिश्च त्रिविधं शुभफलं मानसं कर्म्म शुभाशुभफलं कर्म्मेत्युभयस्यैव प्रक्रान्तत्वात् ॥ ५ ॥

पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः। असम्बद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम्॥ ६॥

पारुष्यमिति। अप्रियाभिधानमसत्यभाषणम्परोक्षे परदूषणकथनं सत्यस्यापि राजदेशपौरवार्त्तादेर्न्निःप्रयोजनं वर्णनं इत्येवञ्चतुःप्रकारमशुभफलं वाचिकं कर्म्म भवेत्। एतद्विपरीतं प्रियसत्यपरगुणाभिधानं श्रुतिपुराणादौ च राजादिचरितकथनं शुभफलम्॥ ६॥

अदत्तानामुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च शारीरन्त्रिविधं स्मृतम्॥ ७॥

अदत्तानामिति। अन्यायेन परस्वग्रहणमशास्त्रीयहिंसा परदारगमनमित्येवं त्रिप्रकारमशुभफलं शारीरं कर्म्म एतद्विपरीतं त्रयं शुभफलम्॥ ७॥

मानसम्मनसैवायमुपभुङ्क्ते शुभाशुभम्। वाचा वाचा कृतङ्कर्म्म कायेनैव च कायिकम्॥ ८॥

मानसमिति। मनसा यत्सुकृतं दुष्कृतं वा कर्म्म कृतन्तत्फलं सुखदुःखरूपमिह जन्मनि जन्मान्तरे वा मनसैवायमुपभुङ्क्ते एवं वाचा कृतं शुभाशुभं वाग्द्वारेण मधुरगद्गदभाषि

त्वादिना शारीरं शुभाशुभं शरीरद्वारेण स्रक्चन्दनादि प्रियोपभोगव्याधितत्वादिनानुभवति तस्मात्प्रयत्नेन शारीर मानसवाचिकानि धर्म्मरहितानि धर्म्मजनकानि च वर्जयेत् कुर्य्याच ॥ ८ ॥

शरीरजैः कर्म्मदोषैर्याति स्थावरतां नरः। वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ९ ॥

शरीरजैरिति। यद्यपि पापिष्ठानां शारीरवाचिकमानसिकान्येव त्रीणि पापानि सम्भवन्ति तथापि स यदि प्रायशोऽधर्म्ममेव सेवते धर्म्ममल्पमिति वाहुल्याभिप्रायेणेदं व्याख्यातम्बाहुल्येन शरीरकर्म्मजपापैर्युक्तः स्थावरत्वं मानुषः प्राप्नोति बाहुल्येन वाक्कृतैः पक्षित्वं मृगत्वं वा बाहुल्येन मनसा कृतैश्चाण्डालादित्वं प्राप्नोति ॥ ९ ॥

वाग्दण्डोऽथमनोदण्डः कायदण्डस्तथैव च। यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते ॥ १० ॥

वागिति। दमनन्दण्डः यस्य वाङ्मनःकायानान्दण्डाः निषिद्धाभिधानासत्सङ्कल्पप्रतिषिद्धव्यापारत्यागेन बुद्धाववस्थिताः स त्रिदण्डीत्युच्यते न तु दण्डत्रय धारणमात्रेण ॥ १० ॥

त्रिदण्डमेतन्निक्षिप्य सर्व्वभूतेषु मानवः। काम क्रोधौ तु संयम्य ततः सिद्धिन्नियच्छति ॥ ११ ॥

त्रिदण्डमिति। एतन्निषिद्धवागादीनां सर्व्वभूतगोचरतया दमनं कृत्वा एतद्दमनार्थमेव कामक्रोधौ च नियम्य ततो मोक्षावाप्तिलक्षणां सिद्धिं मनुष्यो लभते ॥ ११ ॥

योऽस्यात्मनः कारयिता तं क्षेत्रज्ञम्प्रचक्षते। यः करोति तु कर्म्माणि स भूतात्मोच्यते बुधैः ॥ १२ ॥

कोऽसौ सिद्धिमाप्नोतीत्यत आह य इति। अस्य लोक सिद्धस्यात्मोपकारकत्वादात्मनः शरीराख्यस्य यः कर्म्मसु प्रवर्त्तयिता तं क्षेत्रज्ञं पण्डिता वदन्ति यः पुनरेष व्यापारान् करोति शरीराख्यः स पृथिव्यादिभूतारब्धत्वात् भूतात्मेति पण्डितैरुच्यते ॥ १२ ॥

जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्व्वदेहिनां। येन वेदयते सर्व्वं सुखं दुःखञ्च जन्मसु ॥ १३ ॥

जीवेति। जीवशब्दोयं महत्परः येनेति करणविभक्तिनिर्द्देशात् उत्तरश्लोके च तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव चेति महच्छब्देन प्रत्यवमर्षात्। शरीरक्षेत्रज्ञातिरिक्तोऽन्तः

शरीरं आत्माख्यत्वादात्मा जीवाख्यः सर्व्वक्षेत्रज्ञानां सहज आत्माख्यत्वप्राप्तेः तैस्तस्य विनियोगात् येनाहंकारेन्द्रियरूप तया परिणतेन कारणभूतेन क्षेत्रज्ञः प्रतिजन्म सुखं दुःखञ्चानु भवति ॥ १३ ॥

तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥ १४ ॥

तावितिं। तौ द्वौ महत्क्षेत्रज्ञौ पृथिव्यादिपञ्चभूतसंपृक्तौ वक्ष्यमाणं सर्व्वलोकवेदस्मृतिपुराणादिप्रसिद्धतया तमिति निर्दिष्टं परमात्मानमुत्कृष्टापकृष्टसत्त्वेषु व्यवस्थितमाश्रित्य तिष्ठतः ॥ १४ ॥

असंख्या मूर्त्तयस्तस्य निष्पतन्ति शरीरतः।
उच्चावचानि भूतानि सततञ्चेष्टयन्ति याः ॥ १५ ॥

असंख्या इति। अस्य परमात्मनः शरीरादसंख्यमूर्त्तयो जीवाः क्षेत्रज्ञशब्देनानन्तरमुक्ता लिङ्गशरीरावच्छिन्ना वेदान्तोक्तप्रकारेणाग्नेरिव स्फुलिङ्गा निःसरन्ति या मूर्त्तय उत्कृष्टापकृष्टभूतानि देहरूपतया परिणतानि सर्व्वदा कर्म्मसु प्रेरयन्ति ॥ १५ ॥

पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनान्नृणाम्।
शरीरं यातनार्थीयमन्यदुत्पद्यते ध्रुवम् ॥ १६ ॥

पञ्चभ्य इति। पञ्चभ्य एव पृथिव्यादिभूतभागेभ्यो दुष्कृत

कारिणां मनुष्याणाम्पीडानुभवप्रयोजकं जरायुजादिदेहव्यतिरिक्तं दुःखसहिष्णु शरीरं परलोके जायते ॥१६॥

तेनानुभूय ता यामीः शरीरेणेह यातनाः।
तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः ॥ १७ ॥

तेनेति। तेन निर्गतेन शरीरेण ता यमकारिता यातना दुष्कृतिनो जीवाः सूक्ष्मा अनुभूय स्थूलशरीरनाशे तेष्वेवारम्भकभूतभागेषु यथास्वम्प्रलीयन्ते तत्संयोगिनो भूत्वा अवतिष्ठन्त इत्यर्थः ॥ १७ ॥

सोऽनुभूयासुखोदर्कान्दोषान्विषयसङ्गजान्।
व्यपेतकल्मषोऽभ्येति तावेवोभौ महौजसौ ॥ १८ ॥

सोऽनुभूयेति। स शरीरी भूतसूक्ष्मादिलिङ्गशरीरावच्छिन्नो निषिद्धशब्दस्पर्शरूपरसगन्धाख्यविषयोपभोगजनितयमलोकदुःखाद्यनुभूयानन्तरभोगादपहतपाप्मा तावेव महत्परमात्मानौ महावीर्य्यौ द्वावाश्रयति ॥ १८ ॥

तौ धर्म्मं पश्यतस्तस्य पापञ्चातन्द्रितौ सह। याभ्यां प्राप्नोति संपृक्तः प्रेत्येह च सुखासुखम् ॥ १९ ॥

ताविति। तौ महत्परमात्मानौ अनलसौ तस्य जीवस्य धर्मं

भुक्तशेषञ्च पापं सह विचारयतः याभ्यां धर्म्माधर्म्माभ्यां युक्तो जीवः परलोकेहलोकयोः सुखदुःखे प्राप्नोति ॥ १९ ॥

यद्याचरति धर्म्मं स प्रायशोऽधर्म्ममल्पशः ।
तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते ॥ २० ॥

यदीति । स यदि जीवो मानुषदशायाम्बाहुल्येन धर्म्ममनुतिष्ठति अल्पञ्चाधर्म्मं तदा तैरेव पृथिव्यादिभूतैः स्थूलशरीररूपतया परिणतैर्युक्तः स्वर्गसुखमनुभवति ॥ २० ॥

यदि तु प्रायशोऽधर्म्मं सेवते धर्म्ममल्पशः ।
तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः ॥२१॥

यदीति । यदि पुनः स जीवो मानुषदशायां बाहुल्येन पापमनुतिष्ठति अल्पञ्च पुण्यं तदा तैरेव भूतैर्मानुषदेहरूपतया परिणतैस्त्यक्तो मृतः सन्ननन्तरं पञ्चभ्य एव मात्राभ्य इत्युक्तरीत्या यातनानुभवोचितसञ्जातकठिनदेहो यामीः पीडा अनुभवति ॥ २१ ॥

यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः ।
तान्येव पञ्च भूतानि पुनरप्येति भागशः ॥ २२ ॥

यामीरिति स जीवो यमकारितास्ताः पीडास्तेन कठिनदेहेनानुभूय तद्भोगेनापहतपाप्मा तान् जरायुजादिशरीरारम्भ

कान् पृथिव्यादिभूतभागानधितिष्ठति मानुषादिशरीरं गृह्णातीत्यर्थः ॥ २२ ॥

एता दृष्ट्वास्य जीवस्य गतीः स्वेनैव चेतसा।
धर्म्मतोऽधर्म्मतश्चैव धर्म्मे दध्यात्सदा मनः ॥ २३ ॥

एता इति। अस्य जीवस्य एता धर्म्माधर्म्महेतुकाः स्वर्गनरकाद्युपभोगोचितप्रियाप्रियदेहप्राप्तीरन्तःकरणे ज्ञात्वा धर्म्मानुष्ठाने मनः सदा सङ्गतं कुर्य्यात् ॥ २३ ॥

सत्त्वं रजस्तमश्चैव त्रीन्विद्यादात्मनो गुणान्।
यैर्व्याप्येमान् स्थितोभावान्महान्सर्व्वानशेषतः ॥२४॥

सत्त्वमिति। सत्त्वरजस्तमांसि त्रीणि वक्ष्यमाणलक्षणानि आत्मोपकारकत्वादात्मनो महतो गुणान् जानीयात् यैर्व्याप्तो महानिमान् स्थावरजङ्गमरूपान्पदार्थान्निःशेषेण व्याप्य स्थितः ॥ २४ ॥

यो यदैषां गुणो देहे साकल्येनातिरिच्यते।
स तदा तद्गुणप्रायं तङ्करोति शरीरिणम् ॥ २५ ॥

य इति। यद्यपि सर्व्वमेवेदन्त्रिगुणं तथापि यत्र देहे एषां गुणानां मध्ये यो गुणो यदा साकल्येनाधिको भवति तदा तद्गुणलक्षणबहुलं तन्देहिनं करोति ॥ २५ ॥

सत्त्वं ज्ञानन्तमोऽज्ञानं रागद्वेषौ रजः स्मृतम्।
एतद्व्याप्तिमदेतेषां सर्व्वभूताश्रितं वपुः ॥ २६ ॥

सम्प्रति सत्त्वादीनां लक्षणमाह सत्त्वमिति। यथार्थावभासो ज्ञानं तत्सत्त्वस्य लक्षणं एतद्विपरीतमज्ञानं तत्तमोलक्षणं विषयाभिलाषं मानसकार्य्यं रजोलक्षणं स्वरूपन्तु सत्त्वरजस्तमसांप्रीत्यप्रीतिविषादात्मकं तथा च पठन्ति प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः अन्योन्याभिभवजननमिथुनवृत्तयश्च गुणाः एतच्चैषां स्वरूपमनन्तरश्लोकत्रयेण वक्ष्यति एतेषां सत्त्वादिगुणानामेतज्ज्ञानादिसर्व्वप्राणिव्यापकं लक्षणम् ॥ २६ ॥

तत्र यत्प्रीतिसंयुक्तङ्किञ्चिदात्मनि लक्षयेत्। प्रशान्तमिव शुद्धाभं सत्त्वं तदुपधारयेत् ॥ २७ ॥

तत्रेति। तस्मिन्नात्मनि यत्संवेदनं प्रीतियुक्तं प्रत्यस्तमितक्लेशं प्रकाशरूपमनुभवेत् तत्सत्त्वं जानीयात् ॥ २७ ॥

यत्तु दुःखसमायुक्तमप्रीतिकरमात्मनः। तद्रजोऽप्रतिघं विद्यात्सततं हारि देहिनाम् ॥ २८ ॥

यत्त्विति। यत् पनः संवेदनं दुःखानविद्धमतएव सत्त्वच्छद्मा

त्मप्रीतेरजनकं सर्व्वदा च शरीरिणां विषयस्पृहोत्पादकं तद्दु र्निवारत्वात्प्रतिपच्चं रजो जानीयात् ॥ २८ ॥

यत्तु स्यान्मोहसंयुक्तमव्यक्तं विषयात्मकम् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ २९ ॥

यत्त्विति । यत् पुनः सदसद्विवेकशून्यं अस्फुटविषयाकार स्वभावमतर्कणीयस्वरूपमन्तःकरणवहिःकरणाभ्यां दुर्ज्ञानं तत्तमो जानीयात् एषाञ्च गुणानां स्वरूपकथनं सत्त्ववृत्त्यव स्थितौ यत्नवता भवितव्यमित्येतत्प्रयोजनकम् ॥ २९ ॥

त्रयाणामपि चैतेषां गुणानां यः फलोदयः ।
अग्र्यो मध्यो जघन्यश्च तम्प्रवक्ष्याम्यशेषतः ॥ ३० ॥

त्रयाणामिति । एतेषां सत्त्वादीनान्त्रयाणामपि गुणानां यथाक्रममुत्तममध्यमाधमरूपो यः फलोत्पादकः तद्विशेषेण वक्ष्यामि ॥ ३० ॥

वेदाभ्यासस्तपो ज्ञानं शौचमिन्द्रियनिग्रहः ।
धर्म्मक्रियात्मचिन्ता च सात्त्विकं गुणलक्षणम् ॥ ३१ ॥

वेदेति । वेदाभ्यासः प्राजापत्याद्यनुष्ठानं शास्त्रार्थावबोधो मृद्वार्य्यादिशौचमिन्द्रियसंयमो दानादिधर्म्मानुष्ठानमात्म ध्यानपरता एतत्सत्त्वाख्यगुणस्य कार्य्यम् ॥ ३१ ॥

आरम्भरुचिताऽधैर्य्यमसत्कार्य्यपरिग्रहः। विष
योपसेवा चाजस्रं राजसं गुणलक्षणम् ॥ ३२ ॥

आरम्भेति। फलार्थङ्कर्म्मानुष्ठानशीलता अल्पेप्यर्थे वैक्लव्यं निषिद्धकर्म्माचरणं अजस्रं शब्दादिविषयोपभोग इत्येतद्रजोभिधानगुणस्य कार्य्यम् ॥ ३२ ॥

लोभः स्वप्नोऽधृतिः क्रौर्य्यं नास्तिक्यम्भिन्नवृत्तिता।
याचिष्णुता प्रमादश्च तामसं गुणलक्षणं ॥ ३३ ॥

लोभ इत्यादि। अधिकाधिकधनस्पृहा निद्रायुता कातर्य्यं पैशुन्यं परलोकाभावबुद्धिराचारपरिलोपः याचनशीलत्वं सम्भवेपि धर्म्मादिष्वनवधानं इत्येतत्तामसाभिधानस्य गुणस्य लक्षणम् ॥ ३३ ॥

त्रयाणामपि चैतेषां गुणानां त्रिषु तिष्ठताम्।
इदं सामासिकं ज्ञेयं क्रमशो गुणलक्षणम् ॥ ३४ ॥

त्रयाणामपीति। एषां सत्त्वादीनान्त्रयाणामपि गुणानां त्रिषु कालेषु भूतभविष्यद्वर्त्तमानेषु विद्यमानानामिदं वक्ष्यमाणं संक्षेपिकं क्रमेण लक्षणं ज्ञातव्यम् ॥ ३४ ॥

यत्कर्म्म कृत्वा कुर्व्वंश्च करिष्यंश्चैव लज्जति ।
तज्ज्ञेयं विदुषा सर्व्वं तामसं गुणलक्षणम् ॥ ३५ ॥

यदिति । यत्कर्म्म कृत्वा कुर्व्वन् करिष्यंश्च लज्जावान् भवति कालत्रये द्वयोरन्यत्र वेति विवक्षितं तत्सर्व्वं तमःकार्य्यत्वात्तमोभिधानं गुणलक्षणं शास्त्रविदा बोद्धव्यम् ॥ ३५ ॥

येनास्मिन् कर्म्मणा लोके ख्यातिमिच्छति पुष्कलां ।
नच शोचत्यसंपत्तौ तद्विज्ञेयन्तु राजसं ॥ ३६ ॥

येनेति । इह लोके महतीं ख्यातिमाप्नुयामित्येतदर्थमेव यो यत्कर्म्म करोति न परलोकार्थं नच तत्कर्म्मफलासम्पत्तौ दुःखी भवति तद्रजःकार्य्यत्वाद्रजो गुणलक्षणं विज्ञेयम् ॥ ३६ ॥

यत्सर्व्वेणेच्छति ज्ञातुं यन्न लज्जति चाचरन् ।
येन तुष्यति चात्मास्य तत्सत्त्वगुणलक्षणम् ॥ ३७ ॥

यदिति । यत्कर्म्म वेदार्थं सर्व्वात्मना ज्ञातुमिच्छति यच्च कर्म्माचरन् कालत्रयेपि न लज्जति येन येन कर्म्मणास्यात्म तुष्टिर्जायते तत्सत्त्वाख्यस्य गुणस्य लक्षणं ज्ञेयम् ॥ ३७ ॥

२ ब

तमसो लक्षणं कामो रजसस्त्वर्थ उच्यते ।
सत्त्वस्य लक्षणन्धर्म्मः श्रैष्ठ्यमेषां यथोत्तरम् ॥ ३८ ॥

तमस इति । कामप्रधानता तमसो लक्षणं अर्थनिष्ठता रजसः धर्म्मप्रधानता सत्त्वस्य एषाञ्च कामादीनां उत्तरोत्तरस्य श्रेष्ठत्वं कामादर्थः श्रेयान् अर्थमूलत्वात्कामस्य ताभ्याञ्च धर्म्मः तन्मूलत्वात्तयोः ॥ ३८ ॥

येन यांस्तु गुणेनैषां संसारान् प्रतिपद्यते ।
तान्समासेन वक्ष्यामि सर्व्वस्यास्य यथाक्रमम् ॥ ३९ ॥

येनेत्यादि । एषां सत्त्वादीनां गुणानां मध्ये येन गुणेन स्वकार्य्येण या गतीर्जीवः प्राप्नोति ताः सर्व्वस्यास्य जगतः संक्षेपतः क्रमेण वक्ष्यामि ॥ ३९ ॥

देवत्वं सात्त्विका यान्ति मनुष्यत्वञ्च राजसाः ।
तिर्य्यक्त्वं तामसा नित्यमित्येषा त्रिविधा गतिः ॥ ४० ॥

देवत्वमिति । ये सत्त्ववृत्ताववस्थिताः ते देवत्वं यान्ति ये तु रजोवृत्त्यवस्थिताः ते मनुष्यत्वं ये तमोवृत्तिस्थाः ते तिर्य्यक्त्वं इत्येषा त्रिविधा जन्मप्राप्तिः ॥ ४० ॥

त्रिविधा त्रिविधैषा तु विज्ञेया गौणिकी गतिः।
अधमा मध्यमाग्र्या च कर्म्मविद्याविशेषतः ॥४१॥

त्रिविधेति। या सत्त्वादिगुणत्रयनिमित्ता त्रिविधा जन्मान्तरप्राप्तिरुक्ता सा देशकालादिभेदेन संसारहेतुभूतकर्म्मभेदात् ज्ञानभेदाच्चाधममध्यमोत्तमभेदेन पुनस्त्रिविधा बोद्धव्या ॥ ४१ ॥

स्थावराः कृमिकीटाश्च मत्स्याः सर्पाः सकच्छपाः।
पशवश्च मृगाश्चैव जघन्या तामसी गतिः ॥ ४२ ॥

स्थावरा इति। स्थावरा वृक्षादयः कृमयः सूक्ष्माः प्राणिनः तेभ्य ईषत्स्थूलाः कीटाः तथा मत्स्यसर्पकूर्म्मपशुमृगान्ता इत्येषा तमोनिमित्ता जघन्या गतिः ॥ ४२ ॥

हस्तिनश्च तुरङ्गाश्च शूद्रा म्लेच्छाश्च गर्हिताः।
सिंहा व्याघ्रा वराहाश्च मध्यमा तामसी गतिः ॥४३॥

हस्तिनश्चेति। हस्त्यश्वशूद्रम्लेच्छसिंहव्याघ्रशूकराः तमोगुणनिमित्ता मध्यमा गतिः गर्हिता इति म्लेच्छानां स्वरूपानुवादः ॥ ४३ ॥

चारणाश्च सुपर्णाश्च पुरुषाश्चैव दाम्भिकाः।
रक्षांसि च पिशाचाश्च तामसीषूत्तमा गतिः ॥ ४४ ॥

चारणाश्चेति। चारणा नटादयः सुपर्णाः पक्षिणः छद्मना धर्म्मकारिणः पुरुषा राक्षसाः पिशाचाश्चेत्येषा तामसी षूत्तमा गतिः ॥ ४४ ॥

झल्ला मल्ला नटाश्चैव पुरुषाः शस्त्रवृत्तयः। द्यूत
पानप्रसक्ताश्च जघन्या राजसी गतिः ॥ ४५ ॥

झल्ला इति। झल्ला मल्लाः क्षत्रियात् व्रात्यात्सवर्णायामुत्पन्ना दशमाध्यायोक्ता ज्ञेयाः तत्र झल्ला यष्टिप्रहरणाः मल्ला बाहुयोधिनः रङ्गावतारका नटाः शस्त्रजीविद्यूतपानप्रसक्ताश्च पुरुषा अधमा राजसी गतिर्ज्ञेया ॥ ४५ ॥

राजानः क्षत्रियाश्चैव राज्ञश्चैव पुरोहिताः।
वादयुद्धप्रधानाश्च मध्यमा राजसी गतिः ॥ ४६ ॥

राजान इति। राजानो अभिषिक्ता जनपदेश्वराः तथा क्षत्रिया राजपुरोहिताश्च शास्त्रार्थकलहप्रियाश्च एषा राजसी गतिर्म्मध्यमा बोद्धव्या ॥ ४६ ॥

गन्धर्व्वा गुह्यका यक्षा विबुधानुचराश्च ये।
तथैवाप्सरसः सर्व्वा राजसीषूत्तमा गतिः ॥ ४७॥

गन्धर्व्वा इति। गन्धर्व्वा गुह्यका यक्षा जातिविशेषाः पुराणादिप्रसिद्धाः ये च देवानुयायिनो विद्याधरादयः अप्सरसश्च देवगणिकाः सर्व्वा इत्येषा राजसीमध्ये उत्कृष्टा गतिः ॥ ४७ ॥

तापसा यतयो विप्रा ये च वैमानिका गणाः।
नक्षत्राणि च दैत्याश्च प्रथमा सात्त्विकी गतिः॥४८॥

तापसा इति। वानप्रस्था भिक्षवो ब्राह्मणाश्च। ये च अप्सरसो व्यतिरिक्ताः पुष्पकादिविमानचारिणो नक्षत्राणि दैत्यास्तेत्येषा सत्त्वनिमित्ताऽधमा गतिः ॥ ४८ ॥

यज्वान ऋषयो देवा वेदा ज्योतींषि वत्सराः।
पितरश्चैव साध्याश्च द्वितीया सात्त्विकी गतिः ॥ ४९॥

यज्वान इति। यागशीलाः तथर्षयो देवा वेदाभिमानिन्यश्च देवता विग्रहवत्यः इतिहासप्रसिद्धाः ज्योतींषि ध्रुवादीनि वत्सरा इतिहासदृष्टा विग्रहवन्तः पितरः सोमपादयः साध्याश्च देवयोनिविशेषा इत्येषा सत्त्वनिमित्ता मध्यमा गतिः ॥ ४९ ॥

ब्रह्मा विश्वसृजो धर्म्मो महानव्यक्तमेव च ।
उत्तमां सात्त्विकीमेतां गतिमाहुर्म्मनीषिणः ॥ ५० ॥

ब्रह्मेति । चतुर्वदनो विश्वसृजश्च मरीच्यादयः धर्म्मो विग्रहवान् महान् अव्यक्तञ्च सांख्यप्रसिद्धं तत्त्वद्वयं तदधिष्ठातृदेवताद्वयमिह विवक्षितं अचेतनगुणत्रयमात्रस्योत्तमसात्त्विकगतित्वानुपपत्तेः एताश्चतुर्वदनाद्यात्मिकां सत्त्वनिमित्तामुत्कृष्टां गतिं पण्डिता वदन्ति ॥ ५० ॥

एष सर्व्वः समुद्दिष्टस्त्रिप्रकारस्य कर्म्मणः । त्रिविधस्त्रिविधः कृत्स्नः संसारः सार्व्वभौतिकः ॥ ५१ ॥

एषइति । एष मनोवाक्कायरूपसाधनत्रयभेदेन त्रिःप्रकारस्य कर्म्मणः सत्त्वरजस्तमोभेदेन त्रिविधः पुनः प्रथममध्यमोत्तमभेदेन त्रिविधः सर्व्वप्राणिगतः समग्रो गतिविशेषः कार्त्स्न्येनोक्तः सार्व्वभौतिक इत्यभिधानात् अनुक्ता अप्यत्र गतयो द्रष्टव्याः उक्तागतयस्तु प्रदर्शनार्थाः ॥ ५१ ॥

इन्द्रियाणाम्प्रसङ्गेन धर्म्मस्यासेवनेन च । पापान्संयान्ति संसारानविद्वांसो नराधमाः ॥ ५२ ॥

इन्द्रियाणामिति । इन्द्रियाणां विषयेषु प्रसङ्गेन निषिद्धा

चरणेन च प्रायश्चित्तादिधर्म्मानमनुष्ठानेन मूढा मनुष्यापसदाः कुत्सिता गतीः प्राप्नुवन्ति ॥ ५२ ॥

यां यां योनिन्तु जीवोऽयं येन येनेह कर्म्मणा ।
क्रमशो याति लोकेऽस्मिंस्तत्तत्सर्व्वन्निबोधत ॥ ५३॥

यां यामिति। अयञ्जीवो येन येन पापेन कर्म्मणा इह लोके कृतेन यद्यज्जन्म प्राप्नोति तत्सर्व्वं क्रमेण शृणुत ॥ ५३ ॥

बहून्वर्षगणान् घोरान्नरकान् प्राप्य तत्क्षयात् ।
संसारान् प्रतिपद्यन्ते महापातकिनस्त्विमान् ॥५४॥

बहूनिति। ब्रह्महत्यादिमहापातककारिणो बहून्वर्ष समूहान् भयङ्करान् नरकान् प्राप्य तदुपभोगक्षयात् दुष्कृतशेषेण वक्ष्यमाणान् जन्मविशेषान् प्राप्नुवन्ति ॥ ५४ ॥

श्वशूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् ।
चण्डालपुक्कशानाञ्च ब्रह्महा योनिमृच्छति ॥५५॥

श्वेति। कुक्कुरशूकरगर्द्दभउष्ट्रगोच्छागमेषमृगपक्षिचण्डालानां पुक्कशानाञ्च निषादेन शूद्रायां जातानां सम्बन्धिनीं जातिम्ब्रह्महा प्राप्नोति अत्र पापशेषगौरवलाघवापेक्षया क्रमेण सर्व्वयोनिप्राप्तिर्बोद्धव्या एवमुत्तरत्रापि ॥ ५५ ॥

कृमिकीटपतङ्गानां विड्भुजाञ्चैव पक्षिणां। हिंस्राणाञ्चैव सत्त्वानां सुरापो ब्राह्मणो व्रजेत् ॥ ५६ ॥

कृमीति। कृमिकीटशलभानाम्पुरीषभक्ष्याणां पक्षिणां हिंसनशीलानाञ्च व्याघ्रादीनाम्प्राणिनां जातिं सुरापो ब्राह्मणो गच्छति ॥ ५६ ॥

लूताहिशरटानाञ्च तिरश्चाञ्चाम्बुचारिणाम्। हिंस्राणाञ्च पिशाचानां स्तेनो विप्रः सहस्रशः ॥५७॥

लूताहीति। ऊर्णनाभसर्पकृकलासानाञ्जलचराणाञ्च तिरश्चां कुम्भीरादीनाम्पिशाचादीनां हिंसनशीलानाञ्च योनिं सुवर्णहारी ब्राह्मणः सहस्रवारान् प्राप्नोति ॥ ५७ ॥

तृणगुल्मलतानाञ्च क्रव्यादान्दंष्ट्रिणामपि। क्रूरकर्मकृताञ्चैव शतशो गुरुतल्पगः ॥ ५८ ॥

तृणेति। तृणानां दूर्वादीनां गुल्मानामप्रकाण्डानां लतानां गुडुच्यादीनां आममांसभक्षिणां गृध्रादीनां दंष्ट्रिणां सिंहादीनां क्रूरकर्मशालिनां बधशीलानाञ्च व्याघ्रादीनाञ्जातिं शतवारान् प्राप्नोति गुरुदारगामी ॥ ५८ ॥

हिंस्रा भवन्ति क्रव्यादाः कृमयोऽभक्ष्यभक्षिणः। परस्परादिनस्तेना प्रेताऽन्त्यस्त्रीनिषेविणः॥ ५९ ॥

हिंस्रा इति। ये प्राणिवधशीलास्ते आममांसाशिनो मार्जारादयो भवन्ति अभक्ष्यभक्षिणो ये ते कृमयो जायन्ते ये महापातकिव्यतिरिक्ताश्चौरास्ते परस्परं मांसखादिनो भवन्ति। ये चाण्डालादिस्त्रीगामिनः ते प्रेताख्याः प्राणिविशेषा जायन्ते प्रेतान्त्यस्त्रीनिषेविण इति छन्दःसमानत्वात् स्मृतीनां सर्व्वे विधयश्छन्दसि विकल्प्यन्ते इति विसर्गलोपे च यद्वा यलोपे च सवर्णदीर्घः॥ ५९ ॥

संयोगम्पतितैर्गत्वा परस्यैव च योषितम्। अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः॥ ६० ॥

संयोगमिति। यावत्कालीनपतितसंयोगेन पतितो भवति तावन्तं कालम्ब्रह्महादिभिश्चतुर्भिः सह संसर्गं कृत्वा परेषाञ्च स्त्रियङ्गत्वा ब्राह्मणसुवर्णादन्यदपहृत्य एकैकपापकरणेन ब्रह्मराक्षसो भूतविशेषो भवति॥ ६० ॥

मणिमुक्ताप्रवालानि हृत्वा लोभेन मानवः। विविधानि च रत्नानि जायते हेमकर्त्तृषु॥ ६१ ॥

मणीति। मणीन् माणिक्यादीन् मुक्ताविद्रुमौ च नानावि

धानि च रत्नानि वैदूर्य्यहीरकादीनि लोभेन हृत्वात्मीय भ्रमादिना सुवर्णकारयोनौ जायते केचित्तु हेमकारपक्षिणमाचक्षते ॥ ६१ ॥

धान्यं हृत्वा भवत्याखुः कांस्यं हंसो जलं प्लवः।
मधु दंशः पयः काको रसं श्वा नकुलो घृतम् ॥६२॥

धान्यमिति। धान्यमपहृत्य मूषिको भवति कांस्यं हृत्वा हंसः जलं हृत्वा प्लवाख्यः पक्षी माक्षिकं हृत्वा दंशः क्षीरं हृत्वा काकः विशेषोपदिष्टगुडलवणादिव्यतिरिक्तमिक्ष्वादि रसं हृत्वा श्वा भवति घृतं हृत्वा नकुलो भवति ॥ ६२ ॥

मांसं गृध्रो वपां मद्गुस्तैलन्तैलपकः खगः। चीरीवाकस्तु लवणम्बलाकाशकुनिर्दधि ॥ ६३ ॥

मांसमिति। मांसं हृत्वा गृध्रो भवति वपां हृत्वा मद्गुनामा जलचरः पक्षी भवति तैलं हृत्वा तैलपायिकाख्यः पक्षी लवणं हृत्वा चीरीवाकाख्य उच्चैःस्वरः कीटः दधि हृत्वा बलाकाख्यः पक्षी जायते ॥ ६३ ॥

कौशेयन्तित्तिरिर्हृत्वा क्षौमं हृत्वा तु दर्दुरः। कार्प्पासतान्तवं क्रौञ्चो गोधा गां वाग्गुदो गुडम् ॥ ६४ ॥

कौशेयमिति। कीटकोषनिर्म्मितं वस्त्रं हृत्वा तित्तिरिनामा

पक्षी भवति चौमकृतं वस्त्रं हृत्वा मण्डूकः कार्पासमयं पटं हृत्वा क्रौञ्चाख्यः प्राणी गां हृत्वा गोधा गुडं हृत्वा वाग्गुदनामा शकुनिर्भवति ॥ ६४ ॥

छुच्छुन्दरिः शुभान् गन्धान् पत्रशाकन्तु बर्हिणः।
श्वावित्कृतान्नं विविधमकृतान्नन्तु शल्यकः॥६५॥

छुच्छुन्दरिरिति। सुगन्धिद्रव्याणि कस्तूर्य्यादीनि हृत्वा छुच्छुन्दरिर्भवति वास्तूकादिपत्रशाकं हृत्वा मयूरः सिद्धान्नमोदनशक्त्वादि नानाप्रकारकं हृत्वा श्वाविधाख्यः प्राणी अकृतान्नन्तु व्रीहियवादिकं हृत्वा शल्यकसंज्ञो जायते॥ ६५ ॥

बको भवति हृत्वाग्निं गृहकारी ह्युपस्करम्।
रक्तानि हृत्वा वासांसि जायते जीवजीवकः॥ ६६॥

बक इति। अग्निं हृत्वा बकाख्यः पक्षी जायते गृहोपयोगि सूर्पमुषलादि हृत्वा भित्त्यादिषु मृत्तिकादिगृहकारी स पक्षः कीटो भवति कुसुम्भादिरक्तानि वासांसि हृत्वा चकोराख्यः पक्षी जायते॥ ६६ ॥

वृको मृगेभं व्याघ्रोऽश्वम्फलमूलन्तु मर्कटः।
स्त्रीमृक्षः स्तोकको वारि यानान्युष्ट्रः पशूनजः॥६७॥

वृक इति। मृगं हस्तिनं वा हृत्वा वृकाख्यो हिंस्रपशुर्भवति घोटकं हृत्वा व्याघ्रो भवति फलमूलं हृत्वा मर्कटो भवति स्त्रियं

हृत्वा मण्डूको भवति पानार्थमुदकं हृत्वा चातकाख्यः पक्षी यानानि शकटादीनि हृत्वा उष्ट्रो भवति। पशून् उक्तेतरान् हृत्वा छागो भवति ॥ ६७ ॥

यद्वा तद्वा परद्रव्यमपहृत्य बलान्नरः। अवश्यं याति तिर्य्यक्त्वं जग्ध्वा चैवाहुतं हविः ॥ ६८ ॥

यद्वेति। यत्किञ्चिदसारमपि परद्रव्यमिच्छातो मानुषोऽपहृत्य पुरोडाशादिकन्तु हविरहुतभक्षा निश्चितं तिर्य्यक्त्वं प्राप्नोति ॥ ६८ ॥

स्त्रियोऽप्येतेन कल्पेन हृत्वा दोषमवाप्नुयुः। एतेषामेव जन्तूनां भार्य्यात्वमुपयान्ति ताः ॥ ६९ ॥

स्त्रियोपीति। स्त्रियोऽप्येतेन प्रकारेण इच्छातः परस्वमपहृत्य पापं प्राप्नुवन्ति तेन पापेन उक्तानां जन्तूनां भार्य्यात्वम्प्रतिपद्यन्ते ॥ ६९ ॥

स्वेभ्यः स्वेभ्यस्तु कर्म्मभ्यश्च्युता वर्णा ह्यनापदि। पापान्संसृत्य संसारान् प्रेष्यतां यान्ति शत्रुषु ॥ ७० ॥

एवं निषिद्धाचरणफलान्यभिधाय अधुना विहिताकरणफलविपाकमाह स्वेभ्य इति। ब्राह्मणादयश्चत्वारो वर्णा आपदं

विना पञ्चयज्ञादिकर्मत्यागिनो वक्ष्यमाणाः कुत्सिता योनीः प्राप्य ततो जन्मान्तरे शत्रुदासत्वं प्राप्नुवन्ति ॥ ७० ॥

वान्ताऽश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वकाच्च्युतः।
अमेध्यकुणपाशी च क्षत्रियः कटपूतनः ॥७१॥

वान्ताशीति। ब्राह्मणः स्वकर्मभ्रष्टश्छर्दितभुक् ज्वालामुखः प्रेतविशेषो जायते। क्षत्रियः पुनर्नष्टकर्मा पुरीषशवभोजी कटपूतनाख्यः प्रेतविशेषो भवति ॥ ७१ ॥

मैत्राक्षज्योतिकः प्रेतो वैश्यो भवति पूयभुक्।
चैलाशकश्च भवति शूद्रो धर्मात्स्वकाच्च्युतः ॥ ७२ ॥

मैत्रेति। वैश्यो भ्रष्टकर्मा मैत्राक्षज्योतिकनामा पूयभक्ष्यः प्रेतो जन्मान्तरे भवति मित्रदेवताकत्वान्मैत्रः पायुस्तदेवाक्ष ऋर्मेन्द्रियं तत्र ज्योतिर्यस्य स मैत्राक्षज्योतिकः पृषोदरादित्वात् ज्योतिषः षकारलोपः शूद्रः पुनर्भ्रष्टकर्मा चैलाशकाख्यः प्रेतो भवति चेलं वस्त्रं तत्सम्बन्धिनीं यूकामश्नातीति चैलाशकः। गोविन्दराजस्तु चैलाशकाख्यः कीटश्चैल इत्युच्यते तद्भक्षतश्च स भवतीत्याह। तदयुक्तं प्रेताख्यप्राणिविशेषप्रकरणात् ॥७२॥

यथा यथा निषेवन्ते विषयान्विषयात्मकाः ।
तथा तथा कुशलता तेषान्तेषूपजायते ॥ ७३ ॥

यथेति । यथा यथा शब्दादिविषयान्विषयलोलुपा नितान्तं सेवन्ते तथा तथा विषयेष्वेव तेषाम्प्रावीण्यम्भवतीति ॥ ७३ ॥

तेऽभ्यासात्कर्म्मणान्तेषाम्पापानामल्पबुद्धयः ।
सम्प्राप्नुवन्ति दुःखाणि तासु तास्विह योनिषु ॥७४॥

ततस्त इति । तेऽल्पधियस्तेषान्निबद्धविषयोपभोगानामभ्यास तारतम्यात्तासु तासु गर्हितगर्हिततरगर्हिततमासु तिर्य्यगादियोनिषु दुःखमनुभवन्ति ॥ ७४ ॥

तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम् ।
असिपत्रवनादीनि बन्धनच्छेदनानि च ॥७५ ॥

तामिस्रादिष्विति । सम्प्राप्नुवन्तीति पूर्व्वश्लोकस्थमिहोत्तरत्र चानुवर्त्तते तामिस्रादिषु चतुर्थाध्यायोक्तेषु घोरेषु नरकेषु दुःखानुभवं प्राप्नुवन्ति तथाऽसिपत्रवनादीनि बन्धनच्छेदनात्मकान् नरकान् प्राप्नुवन्ति ॥ ७५ ॥

विविधाश्चैव सम्पीडाः काकोलूकैश्च भक्षणं। करम्भवालुकातापान् कुम्भीपाकांश्च दारुणान्॥ ७६॥

विविधा इति। विविधपीडनं काकाद्यैर्भक्षणं तथा तप्तवालुकादीन् कुम्भीपाकादींश्च नरकान् दारुणान् प्राप्नुवन्ति ॥ ७६ ॥

सम्भवांश्च वियोनीषु दुःखप्रायासु नित्यशः। शीतातपाभिघातांश्च विविधानि भयानि च॥ ७७॥

सम्भवांश्चेति। सम्भवान् तिर्य्यगादिजातिषु नित्यं दुःखबहुलासूत्पत्तिमाप्नुवन्ति तत्र शीतातपादिपीडनादिनानाप्रकाराणि च प्राप्नुवन्ति ॥ ७७ ॥

असकृद्गर्भवासेषु वासञ्जन्म च दारुणम्। बन्धनानि च कष्टानि परप्रेष्यत्वमेव च॥ ७८॥

असकृदिति। पुनः पुनर्गर्भस्थानेषु वासः समुत्पत्तिश्च योनियन्त्रादिभिर्दुःखावहा उत्पन्नाश्च शृङ्खलादिभिर्बन्धनादिपीडामनभवन्ति परदासत्वञ्च प्राप्नुवन्ति ॥ ७८॥

बन्धुप्रियवियोगांश्च संवासञ्चैव दुर्ज्जनैः। द्रव्या
र्ज्जनञ्च नाशञ्च मित्रामित्रस्य चार्ज्जनं॥ ७९ ॥

बन्धुप्रियेति। बान्धवैः सुहृद्भिः सह वियोगान् दुर्जनैश्च
सह एकत्रावस्थानं धनार्ज्जनप्रायासं धनविनाशकष्टेन मित्रा
र्ज्जनं शत्रुप्रादुर्भावं प्राप्नुवन्ति च॥ ७९ ॥

जरां चैवाप्रतीकारां व्याधिभिश्चोपपीडनम्। क्ले
शांश्च विविधांस्तांस्तान्मृत्युमेव च दुर्ज्जयम्॥ ८० ॥

जरामिति। जरां चाविद्यमानप्रतीकारां व्याधिभिश्चोप
पीडनं क्षुत्पिपासादिना च नानाप्रकारान् क्लेशान्मृत्युञ्च दुर्व्वा
रं प्राप्नुवन्ति॥ ८०॥

यादृशेन तु भावेन यद्यत्कर्म्म निषेवते। तादृ
शेन शरीरेण तत्तत्फलमुपाश्नुते॥ ८१ ॥

यादृशेनेति। यथाविधेन सात्त्विकेन राजसेन तामसेन वा
चेतसा यद्यत्कर्म्म स्नानदानयोगाद्यनुतिष्ठति तादृशेनैव शरी
रेण सत्त्वाधिकेन रजोधिकेन तमोधिकेन वा तत्तत् स्नान
दानादि फलमुपभुङ्क्ते॥ ८१ ॥

एष सर्व्वः समुद्दिष्टः कर्म्मणां वः फलोदयः ।
निःश्रेयसकरङ्कर्म्म विप्रस्येदन्निबोधत ॥ ८२ ॥

एष इति । एष युष्माकं विहितप्रतिषिद्धानां कर्म्मणां सर्व्वः फलोदय उक्त इदानीं ब्राह्मणस्य नैःश्रेयसाय मोक्षाय हितं कर्म्मानुष्ठानं इदं वक्ष्यमाणं शृणुत ॥ ८२ ॥

वेदाभ्यासस्तपो ज्ञानमिन्द्रियाणाञ्च संयमः ।
अहिंसा गुरुसेवा च निःश्रेयसकरम्परम् ॥ ८३ ॥

वेदाभ्यास इति । उपनिषदादेर्वेदस्य ग्रन्थतोऽर्थतस्य आवर्त्तनं तपः कृच्छ्रादि ज्ञानं ब्रह्मविषयं इन्द्रियजयोऽविहित हिंसावर्ज्जनं गुरुशुश्रूषेत्येतत्प्रकृष्टं मोक्षसाधनम् ॥ ८३ ॥

सर्व्वेषामपि चैतेषां शुभानामिह कर्म्मणाम् ।
किञ्चित् श्रेयस्करतरं कर्म्मोक्तंपूरुषम्प्रति ॥ ८४ ॥

सर्व्वेषामिति । सर्व्वेषामप्येतेषां वेदाभ्यासादीनां शुभ कर्म्मणां मध्ये किञ्चित्कर्म्मातिशयेन मोक्षसाधनं स्यादिति वितर्कं ऋषीणां जिज्ञासाविशेषादुत्तरश्लोकेन निर्णयमाह ॥ ८४ ॥

सर्व्वेषामपि चैतेषामात्मज्ञानम्परं स्मृतम्। तद्ध्यग्र्यं सर्व्वविद्यानां प्राप्यते ह्यमृतन्ततः॥ ८५॥

सर्व्वेषामिति। एषां वेदाभ्यासादीनां सर्व्वेषामपि मध्य उपनिषदुक्तपरमात्मज्ञानं प्रकृष्टं स्मृतं यस्मात्सर्व्वविद्यानां प्रधानम्। अत्रैव हेतुमाह यतो मोक्षस्तस्मात्प्राप्यते॥ ८५॥

षण्णामेषान्तु सर्व्वेषां कर्म्मणां प्रेत्य चेह च। श्रेयस्करतरं ज्ञेयं सर्व्वदा कर्म्म वैदिकम्॥ ८६॥

षण्णामिति। एषां पुनः षण्णां पूर्व्वोक्तानां वेदाभ्यासादीनां कर्म्मणां मध्ये वैदिकङ्कर्म्म परमात्मज्ञानमैहिकामुष्मिकश्रेयस्करतरं ज्ञातव्यं पूर्व्वश्लोके मोक्षहेतुत्वमात्मज्ञानस्योक्तं इह तु ऐहिकामुष्मिकश्रेयोन्तरहेतुत्वमुच्यते इत्यपौनरुक्त्यं तथाहि प्रतीकोपासनानां संग्रयोदयं नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति। गोविन्दराजस्तु एषाम्पूर्व्वश्लोकोक्तानां वेदाभ्यासादीनां षण्णां कर्म्मणां मध्यात्स्मार्त्तकर्म्मापेक्षया वैदिकङ्कर्म्म सर्व्वदेहलोके परलोके अतिशयेन कीर्त्तिस्वर्गादिश्रेयःसाधनं ज्ञेयमिति व्याख्यातवान्। तदयुक्तं वेदाभ्यासादीनां षण्णामपि प्रत्येकं श्रुतिविहितत्वात् तेषां मध्ये

स्मार्त्तापेक्षया किञ्चिदेवं किञ्चिच्च नेति न सम्भवति ततश्च कथं निर्द्धारणे षष्ठी। तस्माद्यथोक्तैव व्याख्या।॥ ८६ ॥

वैदिके कर्म्मयोगे तु सर्व्वाण्येतान्यशेषतः।
अन्तर्भवन्ति क्रमशस्तस्मिंस्तस्मिन् क्रियाविधौ॥८७॥

इदानीमैहिकामुष्मिकश्रेयःसाधनत्वमेवात्मज्ञानस्य स्पष्टयति वैदिक इति। वैदिके पुनः कर्म्मयोगे परमात्मोपासनारूपे सर्व्वाण्येतानि पूर्व्वश्लोकोक्तानि ऐहिकामुष्मिकश्रेयांसि तस्मिंस्तस्मिन् उपासनाविधौ क्रमशः सम्भवन्ति। अथ वा सर्वाण्येतानीति वेदाभ्यासादीन्येव परामृश्यन्ते परमात्मज्ञाने वेदाभ्यासादीनि तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन दानेन तपसानाशकेनेतिश्रुतिविहिताङ्गत्वेनान्तर्भवन्ति॥ ८७॥

सुखाभ्युदयिकञ्चैव नैःश्रेयसिकमेव च। प्रवृत्तञ्च निवृत्तञ्च द्विविधङ्कर्म्म वैदिकम्॥ ८८॥

सुखेति। वैदिकङ्कर्म्मोच ज्योतिष्टोमादि प्रतीकोपासनादि च गृह्यते स्वर्गादिसुखप्राप्तिकरसंसारप्रवृत्तिहेतुत्वात् प्रवृत्ताख्यं वैदिकं कर्म्म तथा निःश्रेयसं मोचस्तदर्थं कर्म्म नैःश्रेयसिकं संसारनिवृत्तिहेतुत्वात् निवृत्ताख्यमित्येवं वैदिकं कर्म्म द्विप्रकारकं वेदितव्यं॥ ८८॥

इह चामुत्र वा काम्यम्प्रवृत्तङ्कर्म्म कीर्त्त्यते ।
निष्कामं ज्ञानपूर्व्वन्तु निवृत्तमुपदिश्यते ॥ ८९ ॥

एतदेव स्पष्टयति इहेति । इह काम्यसाधनं वृष्टिहेतुकारीरीयागादि परत्र स्वर्गादिफलसाधनं ज्योतिष्टोमादि यत कामनया क्रियते तत्संसारप्रवृत्तिहेतुत्वात् प्रवृत्तमित्युच्यते दृष्टादृष्टफलकामनारहितं पुनर्ब्रह्मज्ञानाभ्यासपूर्व्वकं संसारनिवृत्तिहेतुत्वात् निवृत्तमित्युच्यते ॥ ८९ ॥

प्रवृत्तं कर्म्म संसेव्य देवानामेति साम्यताम् ।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै ॥ ९० ॥

प्रवृत्तमिति । प्रवृत्तकर्म्माभ्यासेन देवसमानगतित्वं तत् फलं कर्मणा प्राप्नोति एतच्च प्रदर्शनार्थमन्यफलकेन कर्मणा प्रवृत्तेन फलान्तरमपि प्राप्नोति निवृत्तकर्म्माभ्यासेन पुनः शरीरारम्भकानि पञ्चभूतानि अतिक्रामति मोक्षमाप्नोतीत्यर्थः॥९०॥

सर्व्वभूतेषु चात्मानं सर्व्वभूतानि चात्मनि ।
समं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥ ९१॥

सर्व्वेति सर्व्वभूतेषु स्थावरजङ्गमात्मकेषु अहमेवात्मरूपेणास्मि सर्व्वाणि भूतानि परमात्मपरिणामसिद्धानि मय्येव पर

मात्मन्यासत इति सामान्येन जानन्नात्मयाजी ब्रह्मार्पणन्यायेन ज्योतिष्टोमादि कुर्वन् स्वेन राजते प्रकाशत इति स्वराट् ब्रह्म तस्य भावः स्वाराज्यं ब्रह्मत्वं लभते मोक्षमाप्नोतीत्यर्थः। तथा च श्रुतिः सर्व्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। तथा च यजुर्व्वेदमन्त्रः। यस्तु सर्व्वाणि भूतानि आत्मन्येवानुपश्यति। सर्व्वभूतेषु चात्मानं ततो न विजुगुप्सते॥ ९१॥

यथोक्तान्यपि कर्म्माणि परिहाय द्विजोत्तमः।
आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान्॥९२॥

यथेति। शास्त्रचोदितान्यपि अग्निहोत्रादीनि कर्म्माणि परित्यज्य ब्रह्मध्यानेन्द्रियजयप्रणवोपनिषदादिवेदाभ्यासेषु ब्राह्मणो यत्नं कुर्य्यात् एतच्चैषां मोक्षोपायान्तरङ्गोपायत्वप्रदर्शनार्थं न त्वग्निहोत्रादिपरित्यागपरतयेत्युक्तम्॥ ९२॥

एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा॥९३॥

एतदिति। एतदात्मज्ञानवेदाभ्यासादि द्विजातेर्जन्मसाफल्यापादकत्वात् जन्मनः साफल्यं विशेषेण ब्राह्मणस्य यस्मादेतत्प्राप्य द्विजातिः कृतकृत्यो भवति न प्रकारान्तरेण॥ ९३॥

पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम्। अशक्यञ्चाप्रमेयञ्च वेदशास्त्रमिति स्थितिः ॥ ९४ ॥

इदानीं वेदादेव ब्रह्म ज्ञातव्यमिति प्रदर्शयितुं वेदप्रशंसामाह पितृदेवेति। पितृदेवमनुष्याणां हव्यकव्यान्नदानेषु वेद एव चक्षुरिव चक्षुरनश्वरन्तत् प्रमाणत्वादसन्निकृष्टफलकव्यदानादौ प्रमाणान्तरानवकाशात्। अशक्यञ्च वेदशास्त्रं कर्त्तुमशक्यं अनेनापौरुषेयतोक्ता। अप्रमेयञ्च मीमांसादिन्यायनिरपेक्षतया अनवगम्यमानप्रमेयमेवं व्यवस्था। ततश्च मीमांसया व्याकरणाद्यङ्गैश्च कर्म्मब्रह्मात्मकं वेदार्थं जानीयादिति विवक्षितम् ॥ ९४ ॥

या वेदवाह्याः स्मृतयो याश्च काश्च कुदृष्टयः। सर्व्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः ॥ ९५ ॥

यावेदवाह्या इति। याः स्मृतयः वेदमूला न भवन्ति दृष्टार्थवाक्यानि चैत्यवन्दनात्स्वर्गो भवतीत्यादीनि यानि चासत्तर्कमूलानि देवताऽपूर्व्वादिनिराकरणात्मकानि वेदविरुद्धानि चार्व्वाकदर्शनानि सर्व्वाणि परलोके निष्फलानि यस्मान्नरकफलानि तानि मन्वादिभिः स्मृतानि ॥ ९५ ॥

उत्पद्यन्ते च्यवन्ते च यान्यतोन्यानि कानिचित्।
तान्यर्व्वाक्कालिकतया निष्फलान्यनृतानि च ॥९६॥

एतदेव स्पष्टयति उत्पद्यन्त इति। यान्यतो वेदादन्यमूलानि कानिचित् शास्त्राणि पौरुषेयत्वात् उत्पद्यन्ते एवमाशु विनश्यन्ति तानि च इदानीन्तनत्वान्निष्फलानि असत्यरूपाणि च स्मृत्यादीनान्तु वेदमूलत्वादेव प्रामाण्यम्॥ ९६॥

चातुर्व्वर्ण्यन्त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक्।
भूतम्भवद्भविष्यच्च सर्व्वं वेदात्प्रसिद्ध्यति ॥९७॥

चातुर्व्वर्ण्यमिति। ब्राह्मणोऽस्य मुखमासीदित्यादिवेदादेव चातुर्व्वर्ण्यं प्रसिद्ध्यति ब्राह्मणीभूतमातापितृजनितत्वमपि तदुपजीवि तथा स्वर्गादिलोकोपि वेदादेव प्रसिद्धः एवम्ब्रह्मचर्य्याद्याश्रमा अपि चत्वारो वेदमूलकत्वाद्वेदादेव प्रसिद्ध्यन्ति किम्बहुना यत् किञ्चिदतीतं वर्त्तमानम्भविष्यच्चतत् सर्व्वमग्नौ प्रास्ताहुतिः सम्यगित्यादिन्यायेन वेदादेव प्रसिद्ध्यति॥ ९७॥

शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः। वेदादेव प्रसूयन्ते प्रसूतिगुणकर्म्मतः॥ ९८॥

शब्दइति। य इह लोके परलोके च शब्दादयो विषयाः

उपयुज्यन्ते प्रसूयन्त एतैरिति प्रसूतयः प्रसूतयश्चैते गुणांश्चेति सत्त्वरजस्तमोरूपाः तन्निबन्धनवैदिककर्म्महेतुत्वात् वेदादेव प्रसिध्यन्ति ॥ ९८ ॥

विभर्त्ति सर्व्वभूतानि वेदशास्त्रं सनातनम्।
तस्मादेतत्परं मन्ये यज्जन्तोरस्य साधनम्॥ ९९ ॥

विभर्त्तीति। वेदशास्त्रं नित्यं सर्व्वभूतानि धारयति तथा च हविरग्नौ हूयते सोग्निरादित्यमुपसर्पति तत्सूर्य्यो रश्मिभिर्व्वर्षति तेनान्नम्भवति अथेह भूतानामुत्पत्तिस्थितिश्चेति हविर्जायत इति ब्राह्मणं। तस्माद्वेदशास्त्रमस्य जन्तोर्व्वैदिककर्म्माधिकारिपुरुषस्य प्रकृष्टम्पुरुषार्थसाधनं जानन्ति॥ ९९ ॥

सैनापत्यञ्च राज्यञ्च दण्डनेतृत्वमेव च। सर्व्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥ १०० ॥

सैनापत्यमिति। सैनापत्यं राज्यन्दण्डप्रणेतृत्वं सर्व्वभूम्याधिपत्यञ्चेत्येतत्सर्व्वं उक्तप्रयोजनं वेदात्मकशास्त्रज्ञ एवार्हति ॥ १०० ॥

यथा जातबलो वह्निर्दहत्यार्द्रानपि द्रुमान्। तथा दहति वेदज्ञः कर्म्मजन्दोषमात्मनः ॥ १०१ ॥

यथेति। यथा वृद्धोग्निरार्द्रानपि द्रुमान् दहत्यवं ग्रन्थतो

ऽर्थतश्च वेदज्ञः प्रतिषिद्धाचरणादिकर्म्मजनितं पापमात्मना नाशयति। एवञ्च न केवलं वेदः स्वर्गापवर्गादिहेतुः किन्त्व हितनिवृत्तिहेतुरिति दर्शितं॥ १०१॥

वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन्।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते॥ १०२॥

वेदशास्त्रार्थेति। यस्तत्त्वतो वेदन्तदर्थञ्च कर्मब्रह्मात्मकं जानाति स नित्यनैमित्तिककर्म्मानुगृहीतब्रह्मज्ञानेन ब्रह्म चर्य्याद्याश्रमावस्थितोऽस्मिन्नेव लोके तिष्ठन् ब्रह्मत्वाय कल्पते ॥ १०२॥

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्यो व्यवसायिनः॥१०३॥

अज्ञेभ्य इति। उभयोः प्रशस्तत्वे सति अन्यतरस्यातिशय विवक्षया श्रेष्ठतेतीष्टिनो विधानादीषदध्ययना अज्ञाः। तेभ्यः समग्रग्रन्थाध्येतारः श्रेष्ठाः। तेभ्योऽधीतग्रन्थधारणसमर्थाः श्रेष्ठाः तेन ग्रन्थिनः पठिताविस्मृतग्रन्था बोद्धव्याः। धारिभ्यो ऽधीतग्रन्थार्थज्ञाः प्रकृष्टाः। तेभ्योऽनुष्ठातारः॥ १०३॥

तपो विद्या च विप्रस्य निःश्रेयसकरम्परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

तप इति । तपः स्वधर्म्मवर्त्तित्वमिति भारतदर्शनात् आश्रमविहितं कर्म्म आत्मज्ञानञ्च ब्राह्मणस्य मोक्षसाधनन्तत्र तपसोऽवान्तरव्यापारमाह तपसा पापमपहन्ति ब्रह्मज्ञानेन मोक्षमाप्नोति। तथा च श्रुतिः। विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युन्तीर्त्वा विद्यया मृतमश्नुते। विद्यातोऽन्यदविद्या कर्म्म मृत्युवद्दुःखसाधनत्वान्मृत्युः पापं। श्रुत्यर्थ एवायं मनुना व्याख्यातः ॥ १०४ ॥

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितङ्कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ १०५ ॥

प्रत्यक्षमिति। धर्म्मस्य तत्त्वावबोधमिच्छता प्रत्यक्षमनुमानञ्च धर्म्मसाधनभूतद्रव्यगुणजातितत्त्वज्ञानाय शास्त्रञ्च वेदमूलं स्मृत्यादिरूपन्नानाप्रकारं धर्म्मस्वरूपविज्ञानाय सुविदितं कर्त्तव्यं तदेव च प्रमाणत्रयं मनोरभिमतं उपमानार्थापत्त्यादेश्चानुमानान्तर्भावः ॥ १०५ ॥

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राऽविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥ १०६ ॥

आर्षमिति। ऋषिजुष्टत्वात् आर्षं वेदं धर्म्मोपदेशञ्च

तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्म्मं जानाति न तु मीमांसानभिज्ञः धर्म्मे करणं वेदो मीमांसा चेतिकर्त्तव्यतास्थानीया। तदुक्तं भट्टवार्त्तिककृता। धर्म्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥ १०६ ॥

नैःश्रेयसमिदङ्कर्म्म यथोदितमशेषतः। मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥

नैःश्रेयसमिति। एतन्निश्रेयससाधनं कर्म्म निःशेषेण यथावदुदितम्। अत ऊर्द्धमस्य मानवशास्त्रस्य रहस्यङ्गोपनीयमिदं वक्ष्यमाणं शृणुत ॥ १०७ ॥

अनाम्नातेषु धर्म्मेषु कथं स्यादिति चेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः ॥ १०८ ॥

अनाम्नातेष्विति। अस्य शास्त्रस्यासमस्तधर्म्माभिधानमाशङ्क्यानया सामान्योक्त्या समग्रधर्म्मोपदेशकत्वं बोधयति। सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्त्तव्यं स्यादिति यदि संशयो भवेत्तदा यं धर्म्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्म्मः स्यात् ॥ १०८ ॥

तपो विद्या च विप्रस्य निःश्रेयसकरम्परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते ॥ १०४ ॥

तप इति। तपः स्वधर्मवृत्तित्वमिति भारतदर्शनात् आश्रमविहितं कर्म्म आत्मज्ञानञ्च ब्राह्मणस्य मोक्षसाधनन्तत्र तपसोऽवान्तरव्यापारमाह तपसा पापमपहन्ति ब्रह्मज्ञानेन मोक्षमाप्नोति। तथा च श्रुतिः। विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह। अविद्यया मृत्युन्तीर्त्वा विद्यया मृतमश्नुते। विद्यातोऽन्यदविद्या कर्म्म मृत्युवद्दुःखसाधनत्वान्मृत्युः पापं। श्रुत्यर्थ एवायं मनुना व्याख्यातः ॥ १०४ ॥

प्रत्यक्षञ्चानुमानञ्च शास्त्रञ्च विविधागमम् ।
त्रयं सुविदितङ्कार्य्यं धर्म्मशुद्धिमभीप्सता ॥ १०५ ॥

प्रत्यक्षमिति। धर्म्मस्य तत्त्वाववोधमिच्छता प्रत्यक्षमनुमानञ्च धर्म्मसाधनभूतद्रव्यगुणजातितत्त्वज्ञानाय शास्त्रञ्च वेदमूलं स्मृत्यादिरूपन्नानाप्रकारं धर्म्मस्वरूपविज्ञानाय सुविदितं कर्त्तव्यं तदेव च प्रमाणत्रयं मनोरभिमतं उपमानार्थापत्त्यादेस्त्वनुमानान्तर्भावः ॥ १०५ ॥

आर्षं धर्म्मोपदेशञ्च वेदशास्त्राऽविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः ॥ १०६ ॥

आर्षमिति। ऋषिजुष्टत्वात् आर्षं वेदं धर्म्मोपदेशञ्च

तन्मूलस्मृत्यादिकं यस्तदविरुद्धेन मीमांसादिन्यायेन विचारयति स धर्मं जानाति न तु मीमांसानभिज्ञः धर्मे करणं वेदो मीमांसा चेतिकर्त्तव्यतास्थानीया। तदुक्तं भट्टवार्त्तिककृता। धर्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥ १०६ ॥

नैःश्रेयसमिदङ्कर्म्म यथोदितमशेषतः। मानवस्यास्य शास्त्रस्य रहस्यमुपदिश्यते ॥ १०७ ॥

नैःश्रेयसमिति। एतन्निःश्रेयससाधनं कर्म्म निःशेषेण यथावदुदितम्। अत ऊर्द्धमस्य मानवशास्त्रस्य रहस्यङ्गोपनीयमिदं वक्ष्यमाणं शृणुत ॥ १०७ ॥

अनाम्नातेषु धर्म्मेषु कथं स्यादिति चेद्भवेत्। यं शिष्टा ब्राह्मणा ब्रूयुः स धर्म्मः स्यादशङ्कितः ॥ १०८॥

अनाम्नातेष्विति। अस्य शास्त्रस्यासमस्तधर्म्माभिधानमाशङ्कानया सामान्योक्त्या समग्रधर्म्मोपदेशकत्वं बोधयति। सामान्यविधिप्राप्तेषु विशेषेणानुपदिष्टेषु कथं कर्त्तव्यं स्यादिति यदि संशयो भवेत्तदा यं धर्म्मं वक्ष्यमाणलक्षणाः शिष्टा ब्राह्मणा ब्रूयुः स तत्र निश्चितो धर्म्मः स्यात् ॥ १०८ ॥

धर्म्मेणाधिगतो यैस्तु वेदः स परिबृंहणः। ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः॥ १०९॥

धर्मेणेति। ब्रह्मचर्य्याद्युक्तधर्मेण यैरङ्गमीमांसाधर्मशास्त्र पुराणाद्युपबृंहितो वेदोऽधिगतः ते ब्राह्मणाः श्रुतेः प्रत्यक्षीक रणे हेतवो ये श्रुतिम्पठित्वा तदर्थमुपदिशन्ति ते शिष्टा विज्ञेयाः ॥ १०९॥

दशावरा वा परिषद्यं धर्म्मं परिकल्पयेत्। त्र्यवरा वापि वृत्तस्था तं धर्म्मं न विचालयेत्॥ ११०॥

दशेति। यदि बहवः सन्निहिता न भवन्ति तदा दशा वरात्र्यवराश्चेति वक्ष्यमाणलक्षणा यस्याः सा परिषत् तद भावे त्रयोऽवरा यस्याः सा वा सदाचारा यं धर्म्मं निश्चिनु यात् तं धर्म्मत्वेन स्वीकुर्य्यात् न विसंवदेत्॥ ११०॥

त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः। त्रयश्चाश्रमिणः पूर्व्वे परिषत्स्याद्दशावरा॥१११॥

त्रैविद्य इति। वेदत्रयसम्बन्धिशाखात्रयाध्येता श्रुतिस्मृत्य विरुद्धन्यायशास्त्रज्ञो मीमांसात्मकतर्कवित् निरुक्तज्ञो मान वादिधर्म्मशास्त्रवेदी ब्रह्मचारिगृहस्थवानप्रस्था इत्येषा दशा वरा परिषत्स्यात्॥ ११॥

ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च। त्र्यवरा परिषज्ज्ञेया धर्म्मसंशयनिर्णये ॥ ११२ ॥

ऋग्वेदविदिति। ऋग्यजुःसामवेदशाखानां येऽध्येतारः तदर्थज्ञास्त्रयः सा धर्म्मसन्देहनिराशार्थं त्र्यवरा परिषद्बोद्धव्या ॥ ११२ ॥

एकोपि वेदविद्धर्म्मं यं व्यवस्येद्द्विजोत्तमः। स विज्ञेयः परो धर्म्मो नाज्ञानामुदितोऽयुतैः ॥११३॥

तदभावे एकोपीति। एकोपि वेदार्थधर्म्मज्ञो यं धर्म्मं निश्चिनुयात् प्रकृष्टो धर्म्मः स बोद्धव्यो न वेदानभिज्ञानां दशभिः सहस्रैरप्युक्तः वेदविच्छब्दोऽयं वेदार्थधर्म्मज्ञपरः एतच्च उपलक्षणं स्मृतिपुराणमीमांसान्यायशास्त्रज्ञोपि गुरुपरम्परोपदेशविच्च ज्ञेयः। तथा केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः। युक्तिहीनविचारे तु धर्म्महानिः प्रजायते। तेन बहुस्मृतिज्ञोपि यदि सम्यक् प्रायश्चित्तादिधर्म्मं जानाति तदा तेनाप्येकेन धर्म्म उक्तः प्रकृष्टो धर्म्मो ज्ञेयः। अत एव यमः। एको द्वौ वा त्रयो वापि यद्ब्रूयुर्द्धर्म्मपाठकाः। स धर्म्म इति विज्ञेयो नेतरेषां सहस्रशः ॥११३॥

अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम्। सहस्रशः समेतानाम्परिषत्त्वं न विद्यते ॥ ११४ ॥

अव्रतानामिति। सावित्र्यादिब्रह्मचारिव्रतरहितानां मन्त्र

वेदाध्ययनरहितानाम्ब्राह्मणजातिमात्रधारिणां बहूनामपि सहस्राणां मिलितानाम्परिषत्त्वं नास्ति। धर्मनिर्णयसामर्थ्याभावात् ॥ ११४ ॥

यं वदन्ति तमोभूता मूर्खा धर्ममतद्विदः।
तत्पापं शतधा भूत्वा तद्वक्तॄननुगच्छति ॥ ११५ ॥

यं वदन्तीति। तमोगुणबहुला मूर्खाः धर्मप्रमाणवेदार्थानभिज्ञा अत एव प्रश्नविषयधर्माविदः प्रायश्चित्तादिधर्मं यम्पुरुषम्प्रत्युपदिशन्ति तदीयम्पापं शतगुणम्भूत्वा वाचकान्वहन् भजते ॥ ११५ ॥

एतद्वोऽभिहितं सर्वं निःश्रेयसकरम्परम्। अस्मादप्रच्युतो विप्रः प्राप्नोति परमाङ्गतिम् ॥ ११६ ॥

एतद्व इति। एतन्निःश्रेयससाधकमुत्कृष्टं धर्मादिकं सर्वं युष्माकमभिहितं, एतदनुतिष्ठन् ब्राह्मणादिः परमाङ्गतिं स्वर्गापवर्गरूपां प्राप्नोति ॥ ११६ ॥

एवं स भगवान् देवो लोकानां हितकाम्यया।
धर्मस्य परमं गुह्यं ममेदं सर्वमुक्तवान् ॥ ११७ ॥

एवमिति। स भगवान् ऐश्वर्यादिसंयुक्तो द्योतनाद्देवो मनु

उक्तप्रकारेण इदं सर्व्वं धर्म्मस्य परमार्थं अश्रुश्रूषुभ्यिश्येभ्यो गोपनीयं लोकहितेच्छया मयोक्तवानिति भृगुर्म्महर्षीनाह ॥ ११७ ॥

सर्व्वमात्मनि सम्पश्येत्सच्चासच्च समाहितः। सर्व्वं ह्यात्मनि सम्पश्यन्नाधर्म्मे कुरुते मनः ॥ ११८ ॥

एवमुपसंहृत्य महर्षीणां हिताय उक्तमपि आत्मज्ञानं प्रकृष्टमोक्षोपकारकतया पृथक् कृत्याह सर्व्वमिति। सद्भाव जातमसद्भाव एतत् सर्व्वं ब्राह्मणो जानन् ब्रह्मस्वरूपमात्म न्युपस्थितं तदात्मकमनन्यमना ध्यानप्रकर्षेण साक्षात्कुर्य्यात्। यस्मात्सर्व्वमात्मत्वेन पश्यन्रागद्वेषाभावात् अधर्म्मे मनो न कुरुते ॥ ११८॥

आत्मैव देवताः सर्व्वाः सर्व्वमात्मन्यवस्थितम्। आत्मा हि जनयत्येषाङ्कर्म्मयोगं शरीरिणां॥११९॥

एतदेव स्पष्टयति आत्मैवेति।इन्द्राद्याः सर्व्वदेवताः परमात्मैव सर्व्वात्मत्वात्परमात्मनः सर्व्वं जगदात्मन्येवावस्थितं परमात्म परिणामत्वात्। हिरवधारणार्थे। परमात्मैवैषां क्षेत्रज्ञादीनां कर्म्मसम्बन्धं जनयति। तथा च श्रुतिः। एष ह्येव साधु कर्म्म कारयति यमूर्द्ध्वं निनीषति। एषह्येवासाधु कर्म्म कारयति यमधो निनीषतीति ॥ ११९ ॥

खं सन्निवेशयेत्खेषु चेष्टनस्पर्शनेऽनिलम्। पक्ति दृष्ट्योः परन्तेजः स्नेहेऽपो गाञ्च मूर्त्तिषु ॥ १२० ॥

मनसीन्दुं दिशः श्रोत्रे क्रान्ते विष्णुम्बले हरम्। वाच्यग्निम्मित्रमुत्सर्गे प्रजने च प्रजापतिम् ॥ १२१ ॥

इदानीं वक्ष्यमाणब्रह्मध्यानविशेषोपयोगितया दैहिकाकाशादिषु वाह्याकाशादीनां लयमाह खमिति। मनसीति। वाह्याकाशमुदराद्यवच्छिन्नशरीराकाशेषु लीनमेकत्वेन धारयेत्। तथा चेष्टास्पर्शकारणभूतदैहिकवायौ वाह्यवायुं उदर्य्ये चाक्षुषतेजसो वाह्ययोरग्निसूर्य्ययोः प्रकृष्टं तेजः दैहिकास्वऽप्सु वाह्या अपः शरीरपार्थिवभागेषु वाह्यां पृथिवीं मनसि चन्द्रं श्रोत्रे दिशः पादेन्द्रिये विष्णुं वले हरं वागिन्द्रिये अग्निं पाय्विन्द्रिये मित्रमुपस्थेन्द्रिये प्रजापतिं लीनमेकत्वेन भावयेत् एवमाध्यात्मिकभूतादिषु वाह्यभूतादिकं लीनमेकत्वेन भावयित्वा योयमग्न्यादीनां दैहिकादिनियमो यच्च कर्म्मणाम्फलं प्रति नियतं तत्सर्व्वम्परमात्माधीनं तथा च तस्य चक्षुरस्यप्रशासने गीस्तर्पयति। तथा भयादस्याग्निस्तपति भयात्तपति सूर्य्यः। भयादिन्द्रस्य वायुस्य मृत्युर्द्धावति पञ्चम इति ॥ १२० ॥ १२१ ॥

प्रशासितारं सर्व्वेषामणीयांसमणोरपि। रुक्माभं स्वप्नधीगम्यं विद्यात्तम्पुरुषम्परम् ॥ १२२ ॥

प्रशासितारमिति। प्रशासितारं नियन्तारं ब्रह्मादिसम्ब

पर्य्यन्तस्य चेतनाचेतनस्य जगतो योयमग्न्यादीनामौष्ण्यादिनियमो यश्चादित्यादीनां भ्रमणादिनियमो यच्च कर्म्मणां फलं प्रति नियतमेतत्सर्व्वं परमात्माधीनं तथा चैतस्य वाऽक्षरस्य प्रशासने गार्गीत्याद्युपनिषदः। तथा भयादस्याग्निस्तपति भयात्तपति सूर्य्यः। भयादिन्द्रश्च वायुश्च मृत्युर्द्धावति पञ्चम इति। तथा अणोरणीयांसं सर्व्वात्मत्वात्तथा च श्रुतिः। बालाग्रशतभागस्य शतधाकल्पितस्य च। भागो जीवेति विज्ञेयः स चानन्त्याय कल्पते रुक्माभं यद्यप्यशब्दमस्पर्शमरूपमव्ययमित्याद्युपनिषदा रूपम्परमात्मनो निषिद्धम् तथाप्युपासनाविशेषे शुद्धसुवर्णाभम्। अत एव य एषोऽन्तरादित्ये हिरण्मय इत्यादिछान्दोग्योपनिषत् स्वप्नधीगम्यं दृष्टान्तोयं स्वप्नधीसदृशज्ञानग्राह्यं यथा स्वप्नधीः चक्षुरादिबाह्येन्द्रियोपरमे मनोमात्रेण जन्यते एवमात्मधीरपि। अत एव व्यासः। नैवासौ चक्षुषा ग्राह्यो नच शिष्टैरपीन्द्रियैः। मनसा तु प्रसन्नेन गृह्यते सूक्ष्मदर्शिभिः। एवं विधं परमात्मानमनुचिन्तयेत्॥१२२॥

एतमेके वदन्त्यग्निम्मनुमन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम्॥१२३॥

एतमिति। एतञ्च परमात्मानं अग्नित्वेन एके याज्ञिका उपासते तमेकमग्निमित्यध्वर्य्यव उपासते। अन्ये पुनः मनुं

मन्वाख्यप्रजापतिरूपतया उपासते। एके पुनरैश्वर्य्ययोगादिन्द्ररूपतया उपासते अपरे पुनः प्राणत्वेनोपासते सर्व्वाणिह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहत इत्यादिश्रुतिदर्शनात्। अपरे पुनरपगतप्रपञ्चात्मकं सच्चिदानन्दस्वरूपम्परमात्मानमुपासते मूर्त्तामूर्त्तस्वरूपे च ब्रह्मणि सर्व्वा एवोपासना श्रुतिप्रसिद्धा भवन्ति॥ १२३ ॥

**एष सर्व्वाणि भूतानि पञ्चभिर्व्याप्य मूर्त्तिभिः।**
**जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत्॥ १२४॥**

एषइति। एष आत्मा सर्व्वान् प्राणिनः पञ्चभिः पृथिव्यादिभिर्म्महाभूतैः शरीरारम्भकैः परिगृह्य पूर्व्वजन्मार्जितकर्म्मापेक्षया उत्पत्तिस्थितिविनाशैरथादिचक्रवत् असकृदुपावर्त्तमानैः आमोक्षात्संसारिणः करोति॥ १२४॥

**एवं यः सर्व्वभूतेषु पश्यत्यात्मानमात्मना।**
**स सर्व्वसमतामेत्य ब्रह्माभ्येति परम्पदम्॥ १२५॥**

इदानीं मोक्षहेतुत्वेनोक्तसर्व्वधर्म्मश्रेष्ठतया सर्व्वत्र परमात्मदर्शनमनुष्ठेयत्वेनोपसंहरति एवं यः सर्व्वभूतेष्विति। एवं सर्व्वभूतेषु चात्मानमित्याद्युक्तप्रकारेण यः सर्व्वेषु भूतेषु अवस्थितमात्मानमात्मना पश्यति स ब्रह्मसाक्षात्कारात्परं श्रेष्ठम्पदं स्थानं ब्रह्म प्राप्नोति तत्रात्यन्तं लीयते मुक्तो भवतीत्यर्थः॥१२५॥

इत्येतन्मानवं शास्त्रं भृगुप्रोक्तम्पठन् द्विजः।
भवत्याचारवान्नित्यं यथेष्टाम्प्राप्नुयाद्गतिम् ॥ १२६॥

इतिमानवे धर्म्मशास्त्रे भृगुप्रोक्तायां संहितायां द्वादशोऽध्यायः॥ समाप्तैषा मनुसंहिता॥

इत्येतदिति। समाप्त्यर्थ इति शब्दः। एतत् स्मृतिशास्त्रं भृगुणा प्रकर्षेणोक्तं द्विजातिः पठन् विहितानुष्ठाननिषिद्धवर्ज्जनाचारवान् भवति यथाऽपेक्षिताञ्च स्वर्गापवर्गादिरूपां गतिं प्राप्नुयादिति ॥ १२६ ॥

सारासारवचःप्रपञ्चनविधौ मेधातिथेश्चातुरी स्तोकं वस्तुनिगूढमल्पवचनाद्गोविन्दराजो जगौ। ग्रन्थेऽस्मिन्धरणीधरस्य बहुशः स्वातन्त्र्यमेतावता स्पष्टं मानवमर्थतत्त्वमखिलं वक्तुं कृतोयं श्रमः॥ १॥ प्रायोमुनिभिर्व्विवृतङ्कथयत्येषा मनुस्मृतेरर्थम्। दशभिर्ग्रन्थसहस्रैः सप्तशतयुतैः सूनृता वृत्तिः॥२॥ सेयम्मया मानवधर्म्मशास्त्रे व्यधायि वृत्तिर्व्विदुषां हिताय। दुर्बोधजातेर्दुरितक्षयाय भूयात्ततो मे जगतामधीशः ॥ ३ ॥ इति वारेन्द्रनन्दनावासीयभट्टदिवाकरात्मजश्रीमत्कुल्लूकभट्टविरचितायां मन्वर्थमुक्तावल्यां मनुवृत्तौ द्वादशोऽध्यायः समाप्तः॥ इतिश्रीकुल्लूकभट्टविरचिता मन्वर्थमुक्तावली समाप्ता॥

# ॥ अथमनुसंहितायाः सूचीपत्रं ॥

॥ इति प्रथमाऽध्यायः ॥

---

ख

॥ इति पञ्चमोऽध्यायः ॥

---

इति सप्तमोऽध्यायः॥

॥ इति नवमोऽध्यायः ॥

---

 ॥ मनुसं...त्यमतन्द्रितः। स्तेनान्
पुष्पधर्मेखा जायन्ते एकस्य चैता...एव च ॥ ३१२ ॥

॥ २१ ॥

...पायरन्यैश्चानुक्तैरपि स्वबुद्धिप्रभवै र्युक्तो राजाऽनलसः सन् स्वराष्ट्रे ये चौरा वसन्ति ये च परराष्ट्रे वसन्तस्तद्देशमागत्य मुष्णन्ति तान् उभयप्रकारान्निगृह्णीयात् सोऽग्निर्भवति वायुस्त्येत्यादिना पूर्व्वं सिद्धवदुक्तमग्न्यादिरूपत्वं राज्ञः इह तु तद्गुणयोगेन स्फुटीकृतमित्यपुनरुक्तिः ॥ ३१२ ॥

परामप्यापदम्प्राप्तो ब्राह्मणान्न प्रकोपयेत्। ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ३१३ ॥

परामिति। कोषक्षयादिना प्रकृष्टामप्यापदम्प्राप्तो राजा ब्राह्मणान्न प्रकोपयेत् यस्मात्ते रुष्टाः सबलवाहनं एनं सद्यएव शापाभिचाराभ्यां हन्युः ॥ ३१३ ॥

यः कृतः सर्व्वभक्ष्योऽग्निरपेयश्च महोदधिः। क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥ ३१४ ॥

तथाहि यैरिति। यैर्ब्राह्मणैरभिशापेन सर्व्वभक्ष्योऽग्निः कृतः समुद्रश्चापेयजलश्चन्द्रश्च क्षययुक्तः पश्चात्पूरितः तान् कोपयित्वा को न नश्येत् ॥ ३१४ ॥

लोकानन्यान्सृजेयु

देवान् कुर्य्युरदेवांश्च कः

| श्लोकः | प्रकरणं | अध्यायः | श्लोकः |
|---|---|---|---|
| ४५ | अथसुरापान प्रायश्चित्तम् | ११ | ९० |
| | सुराप्रकाराः | | |

किञ्च लोकानिति। ये स्वर्गादिलोकान् ... लोकपालान् सृजन्तीति कथ्यते देवांश्च शापेन मानुषादीन् कुर्व्वन्ति तान् पीडयन् कः समृद्धिमाप्नुयात् ॥ ३१५ ॥

यानुपाश्रित्य तिष्ठन्ति लोकादेवाश्च सर्व्वदा।
ब्रह्म चैव धनं येषां को हिंस्यात्तान् जिजीविषुः॥३१६॥

अपि च यानित्यादि। यान् ब्राह्मणान् यजनयाजनकर्त्तृकानाश्रित्याग्नौ प्रास्ताहुतिरितिन्यायेन पृथिव्यादिलोका देवाश्च स्थितिं लभन्ते वेदएव च येषां अभ्युदयसाधनतया याजनाध्यापनादिना धनोपायत्वाच्च तान् जीवितुमिच्छन् कोहिंस्यात् ॥ ३१६ ॥

अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतम्महत्। प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतम्महत्॥ ३१७॥

एवन्तर्हि विद्वांसं ब्राह्मणं सेवेतेत्यतआह अविद्वानिति। यथाहितो ऽनाहितो वाग्निर्महती देवता एवं मूर्खो विद्वांश्च ब्राह्मणः प्रकृष्टादेवतेति ॥ ३१७॥

पुष्पधशेखा जायन्ते एकस्य चैतानि देशभेदप्रसिद्धानि नामानि ॥ २१ ॥

झल्लो मल्लश्च राजन्याद्व्रात्यान्निच्छिविरेव च ।
नटश्च करणश्चैव खसो द्रविडएव च ॥ २२ ॥

झल्लोमल्लश्चेति । चत्रियात् व्रात्यात्सवर्णायां झल्लमल्लनिच्छिवि नटकरणखसद्रविडाख्या जायन्ते । एतान्यप्येकस्यैव नामानि ॥ २२ ॥

वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्यएव च ।
कारुषश्च विजन्मा च मैत्रः सात्वतएव च ॥ २३ ॥

वैश्यात्त्विति । वैश्यात् पुनर्व्रात्यात् सवर्णायां सुधन्वाचार्य्य कारुषविजन्ममैत्रसात्वताख्या जायन्ते । एकस्य चैतान्यपि नामानि ॥ २३ ॥

व्यभिचारेण वर्णानामवेद्यावेदनेन च । स्वकर्म्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः ॥ २४ ॥

व्यभिचारेणेति । ब्राह्मणादिवर्णानामन्योऽन्यस्त्रीगमनेः सगोत्राद्यविवाह्यविवाहेन उपनयनरूपस्वकर्म्मत्यागेनच वर्ण

सङ्करो नाम जायते। अतोयुक्तमस्मिन् प्रकरणे व्रात्यानामभिधानम्॥ २४॥

सङ्कीर्णयोनयो ये तु प्रतिलोमानुलोमजाः।
अन्योन्यव्यतिषक्तास्च तान् प्रवक्ष्याम्यशेषतः॥ २५॥

सङ्कीर्णेति। ये सङ्कीर्णयोनयः प्रतिलोमैरनुलोमैस्च परस्पर सम्बन्धात् जायन्ते तान् विशेषेण वक्ष्यामि॥ २५॥

सूतोवैदेहकस्चैव चण्डालस्च नराधमः। मागधः
क्षत्तृजातिस्च तथायोगवएव च॥ २६॥

सूतइति। एते षडुक्तलक्षणाः सूतादयः उत्तरार्थमनूद्यन्ते॥ २६॥

एते षट् सदृशान्वर्णान् जनयन्ति स्वयोनिषु।
मातृजात्यां प्रसूयन्ते प्रवरासु च योनिषु॥ २७॥

एत इति। एते पूर्व्वोक्ताः षट् प्रतिलोमजाः स्वयोनिषु सुतोत्पत्तिं कुर्व्वन्ति। यथा शूद्रेण वैश्यायां जात आयोगव उच्यते आयोगव्यामेव मातृजातौ वैश्यायां प्रवरासु क्षत्रियाब्राह्मणी योनिषु चकारादपकृष्टायामपि शूद्रजातौ सर्व्वत्र सदृशान् वर्णान् जनयन्ति सदृशत्वञ्च न पितृपेक्षया किन्तु मातृजात्या

चातुर्वर्ण्ये स्त्रीष्वेव पितृतोऽधिकगर्हितपुत्रोत्पत्तेर्वक्ष्यमाणत्वात् तत्सदृशान् पितृतोऽधिकगर्हितान् स्वजातावपि जनयन्तीत्येताव देषा प्राप्तत्वात् अनेन विधीयते। किन्तु जघन्यवर्णेनोत्तमवर्णस्त्रीषु जनितत्वात् क्रियादुष्टा आयोगवाद्याः प्रतिलोमजाः क्रियादुष्टा भ्याञ्च मातापितृभ्यान्तुल्याभ्यामपि जनित आयोगवादिपुत्रो ब्रह्महन्त्रन्यतरजनितात् ब्रह्महन्तृमातापितृजनितवत् अधिक दुष्ट एव न्याय्यः शुद्धब्राह्मणादिजातीयेन शुद्धब्राह्मण्यादिजा तीयायां जनितः पितृतुल्य एवोचितः नतु क्रियादुष्टोभयजनि तोपि ॥ २७ ॥

यथा त्रयाणां वर्णानां द्वयोरात्मास्य जायते। आन न्तर्य्यात् स्वयोन्यान्तु तथा वाह्येष्वपि क्रमात् ॥२८॥

यथेति। यथा त्रयाणां वर्णानां क्षत्रियवैश्यशूद्राणां मध्या द्वयोर्वर्णयोः क्षत्रियवैश्ययोर्गमने ब्राह्मणस्यानुलोम्याद्द्विजउत्प द्यते सजातीयायाञ्च द्विजो जायते। एवं वाह्येष्वपि वैश्यक्षत्रियाभ्यां क्षत्रियाब्राह्मण्योर्जातेषूत्कर्षापकर्षो भवति शूद्रजातप्रतिलोमापेक्षया द्विजाद्युत्पन्नप्रतिलोमप्राशस्त्यार्थं मिदं। मेधातिथिस्तु द्विजत्वप्रतिपादकमेतत् एषां वचनमुप नयनार्थमित्याह। तन्न प्रतिलोमजास्तु धर्म्महीना इति गौत मेन संस्कारनिषेधात् ॥ २८ ॥

ते चापि वाह्यान् सुवहूंस्ततोप्यधिकदूषितान्।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ २९ ॥

ते चापीति। ते चायोगवादयः षट् परस्परजातीयासु भार्य्यासु सुवहून् आनुलोम्येप्यधिकदुष्टान् सत्क्रियावहिर्भूतान् जनयन्ति। तद्यथा। आयोगवः क्षत्तृजायायामात्मनो हीनतरं जनयति। तथा क्षत्तायायोगव्यामात्मनो हीनतरमुत्पादयति। एवमन्येष्वपि प्रतिलोमेषु द्रष्टव्यम् ॥ २९ ॥

यथैव शूद्रो ब्राह्मण्यां वाह्यं जन्तुं प्रसूयते। तथा वाह्यतरं वाह्यश्चातुर्वर्ण्ये प्रसूयते ॥ ३० ॥

यथैवेति। यथा ब्राह्मण्यां शूद्रोऽपकृष्टं चाण्डालाख्यं प्राणिनं प्रसूयते जनयति एवं वाह्यश्चण्डालादिर्वर्णचतुष्टये चाण्डालादिभ्योप्यपकृष्टं पुत्रं प्रसूयते ॥ ३० ॥

प्रतिकूलं वर्त्तमाना वाह्या वाह्यतरान् पुनः।
हीना हीनानान् प्रसूयन्ते वर्णान् पञ्चदशैव तु॥३१।

प्रतिकूलमिति। अत्र मेधातिथिगोविन्दराजयोर्व्याख्यानं एतदेव विस्तारयति चातुर्व्वर्ण्यवाह्यास्चण्डालक्षत्रायोगवाः

शूद्रप्रभवास्त्रयश्चातुर्व्वर्ण्ये गच्छन्त आत्मनोहीनतरान् पर
स्परापेक्षयापकृष्टोत्कृष्टवर्णप्रभवत्वात् पञ्चदश वर्णान् सम्पाद
यन्ति। तद्यथा चण्डालः शूद्रायामात्मनो हीनतरं वैश्याक्षत्रि
या॰ब्राह्मणीजातेभ्य उत्कृष्टं जनयति एवं वैश्यायां शूद्रात्जात
अपसदं क्षत्रियाब्राह्मणीजाताभ्यामुत्कृष्टं जनयति ततोपसदं
क्षत्रियायां ब्राह्मणीजातादुत्कृष्टं ततोपि हीनं ब्राह्मण्यां जन
यति एवं क्षत्तायोगवावपि चातुर्व्वर्ण्ये चतुरश्चतुरोजन
यत इत्येते शूद्रप्रभवचण्डालक्षत्तायोगवेभ्यः चातुर्व्वर्ण्ये द्वादश
प्रभेदा उत्पद्यन्ते आत्मनाच चाण्डालक्षत्तायोगवास्त्रय
इत्येवं शूद्रप्रभवाः पञ्चदश सम्पद्यन्ते एवं वैश्यक्षत्रिय
ब्राह्मणप्रभवाश्च प्रत्येकं पञ्चदश सम्भवन्ति एवं षष्टिश्चातु
र्वर्ण्येन सह चतुःषष्टिप्रभेदा भवन्ति तेतु परस्परगमनेन नाना
वर्णान् जनयन्तीति। नैतन्मनोहरं पूर्व्वश्लोके षसाम्प्रतिलोमजा
नां प्रकृतत्वात्तद्विस्तारकथनार्थत्वाच्चास्य अत्रापि श्लोके प्रतिकूलं
वर्त्तमाना इत्युपादानात् प्रतिलोमजमात्रविषयोयं श्लोको नानु
लोमज विषयः। तथाच वैश्यक्षत्रियब्राह्मणप्रभवाश्च प्रत्येकं पञ्च
दशसम्भवन्त्येवं षष्टिरिति न सङ्गच्छते। नच सम्भवमात्रेणैव इयं
षष्टिरुक्ता न दृष्टतया शूद्रप्रभवायोगवक्षत्तृचण्डाला एव चातु
र्वर्ण्य सन्तानोपेताः पञ्चदशगर्हिता इतिवाच्यं यतो वैश्यक्षत्रिया
भ्यामपि प्रतिलोमतउत्पादितानां त्रयाणं हीनत्वात्तैरपि चातु
र्वर्ण्येजनितानां गर्हितत्वस्य सम्भवात्। तथा वाह्यतरं वाह्यश्चात्

र्वर्ण्णे प्रसूयत इति मनुनैवानन्तरं स्फुटमुक्तत्वात् युत्ताभ्यामपि
तथैव व्याख्यातत्वाच्च चातुर्वर्ण्येन सह चतुःषष्टिरिति सर्व्वथैवा
प्रकृतम्। नहि सङ्कीर्णप्रकरणे शुद्धचातुर्वर्ण्यगणनोचिता किञ्च
वर्णान् पञ्चदश प्रसूयन्ते इति श्रूयमाणद्वादशजननसङ्ख्या ते
चात्मना चण्डालक्षत्रायोगवास्त्रय इत्येवं शूद्रप्रभवाः पञ्चदशेति
न युक्तम्। अपि चात्मना सह पञ्चदश सम्पादयन्तीति न सङ्ग
च्छते असम्पाद्यत्वादात्मनः पञ्चदशसम्पद्यन्त इति व्याख्याने
ऽध्याहार एव दोषः। तस्मादेवं व्याख्यायते प्रतिकूलं वर्त्तमानाः
प्रतिलोमजा वाह्या द्विजप्रतिलोमजेभ्यो निकृष्टत्वात् शूद्रप्रभ
वायोगवक्षत्तृचण्डालास्त्रयः पूर्व्वश्लोकादनुवर्त्तमाने चातुर्वर्ण्ये
स्वजातौ च एते षट् सुहृशानित्यत्र सजात्युत्पन्नस्यापि पितृतो
गर्हितत्वाभिधानात् आत्मापेक्षया वाह्यतरान् प्रत्येकं पञ्चदश
पुत्रान् जनयन्ति। तद्यथा। आयोगवश्चातुर्वर्ण्यस्त्रीषु आयोग
व्याञ्च आत्मनो निकृष्टान् पञ्च पुत्रान् जनयति एवं क्षत्तृचाण्डा
लावपि प्रत्येकं पञ्च पुत्रान् जनयत इत्थं वाह्यास्त्रयः पञ्च दश
पुत्रान् जनयन्ति। तथानुलोमजेभ्यो हीना वैश्यक्षत्रियप्रभवा
मागधवैदेहसूता आत्मापेक्षया हीनान् पूर्व्ववच्चातुर्व्वर्ण्यस्त्रीषु
सजातौ च प्रत्येकं पञ्च पुत्रान् जनयन्तो हीना अपि त्रयः पञ्च
दशैव पुत्रान् जनयन्ति एवं त्रिंशदेते भवन्ति। अथ वा वाह्य
शब्दो हीनशब्दश्च षडेव प्रतिलोमजानाह अत्र वाह्याश्चाण्डाल